शादीलाल ग्रन्थमाला नं० १

# सांख्यसूत्रम्

## विज्ञानभिक्षुकृत-भाष्य-समेतम्

श्रुति-स्मृति-पुराण-दर्शनशास्त्रगत-सांख्यमत-परक-वचन भूषितया
वृत्तिभाष्यमत-परीक्षान्वितया च ज्योतिष्मती-व्याख्यया
संवलितम्



प्रणेता

**रामशंकर भट्टाचार्य**

एम० ए०; पी-एच० डी०; व्याकरणाचार्य

प्रकाशक

**भारतीय विद्या प्रकाशन**

वाराणसी – दिल्ली
( भारत )

# व्याख्याकर्तुर्निवेदना

अनन्तविज्ञानमनादिसत्त्वं
प्रभुं पुराणं सुनिरुद्धचित्तम् ।
स्थितं च कैवल्यपदे निरीहं
ध्यायेम धीशुद्धय एव शुद्धम् ॥१॥

ऋषये परमायार्कमरीचिसमतेजसे ।
धर्ममेवप्रतिष्ठाय शान्ताय गुरवे नमः ॥२॥

सांख्यविद्या परिज्ञाता यस्य व्याख्यानतो मया ।
स श्रीहरिहरानन्दो यतिर्विजयतामिह ॥३॥

अष्टाङ्गयोगसन्दीप्तान् मैत्र्यादिभूतिभूषितान् ।
निरोधख्यातिवैराग्य-शीलान् विद्यागुरून् नुमः ॥४॥

अद्यत्वे सांख्यसूत्रस्य चत्वारि व्याख्यानानि प्रचलन्ति—अनिरुद्धकृता वृत्तिः, विज्ञानभिक्षुकृतं सांख्यप्रवचनभाष्यम्, महादेव-वेदान्तिकृतो वृत्तिसारः, नागेशकृता सांख्यसूत्रवृत्तिः भिक्षुभाष्यसारसंग्रह-नामधेया । सांख्यसूत्रस्यास्य अन्या काचन व्याख्या प्रणीता नवेति न निश्चप्रचं कथयितुं शक्यते । सांख्यसूत्रव्याख्यानेषु अनिरुद्धवृत्तिः सर्वप्राचीना; अस्यां खलु किमपि प्राचीनतरं व्याख्यानं न स्मृतम् । भाष्यादिष्वपि कस्यापि प्राचीनव्याख्याकारस्य व्याख्यानं न स्मृतम्, अतः प्रतीयते सांख्यसूत्रमनिरुद्धात् प्राङ् न केनापि व्याख्यातमिति । यदि व्याख्यातमपि भवेत् तर्हि न तद् व्याख्यानं विज्ञातमेभिर्व्याख्याकारैः । अनयोः प्रथमः पक्ष एव समीचीन इत्यास्माकीनी दृष्टिः ।

अनिरुद्धवृत्तेः प्राचीनत्वात्, स्वल्पाक्षरवत्त्वाच्च सा व्याख्याता बहुभिर्विद्वद्भिः । एषु व्याख्यानेषु प्रमथनाथतर्कभूषणकृता 'अमला'टीका, कुञ्जविहारितर्कसिद्धान्तकृता 'तत्त्वबोधिनी'–टीका च अध्येतृमण्डलीषु प्रसिद्धा । अस्या वृत्तेः सारं संगृह्य महादेववेदान्तिना वृत्तिसारः प्रणीत इति विज्ञायते ।

विज्ञानभिक्षुकृतभाष्यस्य न काचिदपि व्याख्या प्रणीता केनापि विदुषा । नैकमतखण्डनपरमिदं भाष्यमिति अस्य व्याख्यानमपेक्षितमेव । यद्यपि सुबोधया संस्कृतवाचा भाष्यमिदं रचितमतो नास्य प्रतिपदव्याख्यानकारिणी टीकाऽपेक्ष्यते, तथापि खण्डनपरेषु वाक्येषु सापेक्ष्यत एव । अस्माभिस्तु ज्योतिष्मती-व्याख्यायां व्याख्याना-

र्हाणि वाक्यान्येव व्याख्यातानि । नागेशकृतायां वृत्तौ भाष्यतात्पर्यं सुष्ठु प्रदर्शितं सर्वत्र । भाष्यस्य विपुलतां दृष्ट्वैव नागेशेनेयं लघ्वी वृत्तिः प्रणीता—अध्येतारो यथा भाष्यार्थं सुखेनावगच्छेयुरिति ।

ज्योतिष्मतोव्याख्याया यानि वैशिष्टयानि तान्यत्र परिगण्यन्ते—

(१) यदि कस्मिश्चिद् ग्रन्थे किमपि सूत्रम् उद्धृतं तर्हि तस्य ग्रन्थस्य नामास्यां व्याख्यायां गृहीतम् ।

(२) सूत्रे यानि मतानि प्रतिपादितानि तानि यदि अन्यसंप्रदायस्थैराचार्यैः सांख्यमतत्वेनोक्तानि, तर्हि तेषामाचार्याणां वाक्यानि व्याख्याया मुद्धृतानि ।

(३) सूत्रसदृशानि यानि विशिष्टानि वाक्यानि पुराणादिषूपलभ्यन्ते, तेषां निर्देशा व्याख्यायां विहिताः ।

(४) सूत्रार्थपरकाण्यपि बहूनि वाक्यानि पुराणादिषु दृश्यन्ते । कानिचनैतादृशानि वाक्यानि व्याख्यायामुद्धृतानि ।

(५) सूत्रप्रयुक्तानां दुरूहार्थानां गूढार्थानां च शब्दानां स्पष्टं व्याख्यानमत्र कृतम् ।

(६) यस्य सूत्रस्य वृत्तिकारव्याख्यानं भाष्यकारव्याख्यानाद् भिन्नं विरोधि वा, तत्सूत्रव्याख्यानावसरे तद्-वृत्तिमत मपि प्रदर्शितम् ।

(७) वृत्ति-भाष्यदर्शितयोः सूत्रार्थयोः युक्तायुक्तत्व-समीक्षापि बहुषु स्थलेषु कृता ।

(८) सूत्रप्रयुक्तैः सर्वनामपदैः संख्यावाचकपदैश्च येऽर्था लक्ष्यन्ते तेषां विवरणमत्र प्रदत्तम् ।

(९) तथैव सौत्राणामव्ययनिपातानां सार्थक्यमपि विचारितम् ।

(१०) सूत्रोक्तानि सांख्यीयानि मतानि विशदीकृतानि ।

(११) बौद्धादिमतानां सूत्रोक्तानां विशदीकरणम् आकरग्रन्थमनुसृत्यैव कृतम् ।

(१२) भिक्षुभाष्यपाठानां समीक्षान्तरान्तरा कृता ।

(१३) भाष्यधृतवचसामाकरस्थलानि प्रायेण सर्वत्र दर्शितानि ।

(१४) भिक्षुकृतग्रन्थान्तरेभ्यः (विज्ञानामृतभाष्य-योगवार्त्तिक-सांख्यसारादिभ्यः) वाक्यानि आहृत्य भिक्षुमतानि विशदीकृतानि ।

(१५) भाष्योद्धृतानि बौद्धादिमतानि स्फुटं विस्तरेण च व्याख्यातानि ।

(१६) भिक्षुमतपुष्टयर्थं क्वचित् प्रमाणान्युपन्यस्तानि ।

(१७) भिक्षुप्रयुक्तानां विशिष्टार्थकानां शब्दानां व्याख्यानमत्र कृतम् ।

(१८) सांख्यविषयकानि अस्मन्मतानि भिक्षुमतेभ्यो बहुत्र भिन्नानि विरुद्धानि च । भिक्षुमतं युक्तमयुक्तं वेति व्याख्याया मन्तरान्तरा विवेचितमस्माभिः ।

अथात्र विज्ञानभिक्षुमधिकृत्य किमप्युच्यते । विज्ञानेति नाम, भिक्षु-इति चतुर्थाश्रमज्ञापकः शब्द इति व्यक्तमेव प्रतीयते । कुटीचकादि-चतुर्विधभेदभिन्नेषु भिक्षुषु मध्ये आचार्योऽयं कस्मिन् भेदे आसीत्—इति न निश्चप्रचं ज्ञातुं शक्यते । 'दशनामीति' प्रसिद्धे संप्रदाये नायं प्रविवेश—इति विज्ञायते[1] । गिरि-पुरी-वनारण्यतीर्थाश्रमादिभेदा नातिप्राचीने काले आसन्–इति निश्चप्रचमेव । भिक्षुरिति शब्दस्यैव बाहुल्येन चतुर्थाश्रमिषु प्रयुज्यमानत्वात् स शब्द एव आचार्येण स्वनाम्नि प्रयुक्त इति प्रतिभाति । विज्ञानामृतभाष्येऽनेनोक्तम्-'अन्तर्यामिगुरूद्दिष्ट-ज्ञान-विज्ञानभिक्षुणा' इति । 'अन्तर्यामा'ति अस्य गुरोर्नाम-इत्यनुमातुं शक्यते किमनेन वाक्येन ?

विज्ञानभिक्षुणा इमे ग्रन्था प्रणीताः प्रकाशिताश्च—

(१) ब्रह्मसूत्रव्याख्यानभूतं भाष्यम्—'विज्ञानामृत'-नामकम् (द्र० 'विज्ञानामृताख्ये ऋजुभाष्ये·····'ग्रन्थगता पुष्पिका) । अत्र भाष्ये सर्वाणि सूत्राणि सिद्धान्त-पक्षरूपेणैव व्याख्यातानि ।

(२) योगवार्त्तिकम्—व्यासभाष्यव्याख्यानभूतम् । अत्र स्वकृतस्य ब्रह्मसूत्र-भाष्यस्य स्मरणं बहुषु स्थलेषु कृतम् ।

(३) योगसारसंग्रहः—चतुरंशविशिष्टोऽयं लघुग्रन्थः । अनूदितेयं ग्रन्थ आंग्ल-भाषायां म-म-गङ्गानाथ झामहोदयेन । अस्मिन् ग्रन्थे योगवार्त्तिक–सांख्यभाष्य–सांख्यसारग्रन्थाः स्मृताः (पृ० ३५) ।

(४) सांख्यसारः—अस्य गद्यमयः पूर्वभागः,पद्यमयश्च उत्तरभागः । व्याख्यातोऽयं ग्रन्थः कालीपदतर्काचार्येण ।

(५) सांख्यसूत्रभाष्यम्—अत्र योगवार्त्तिकम् ब्रह्ममीमांसा-भाष्यं च स्मृतम् । उपरिष्टादुक्ता ग्रन्था भिक्षुणा प्रणीता इति विज्ञायते । नेमे प्रकाशिताः ।

---

१. दशनामीति नाम्ना यः संप्रदायः प्रसिद्धः, तस्य विरोधी भिक्षुरासीदिति केचन वदन्ति । स्वकृते पाषण्डखण्डन–नामके ग्रन्थे शङ्कराचार्यानुयायिनः संन्यासिनो दूषयामासायं भिक्षुरिति विज्ञायते (द्र० काशी की सारस्वत-साधना, पृ० २२) ।

(६) कूर्मपुराणीय–ईश्वरगीता–भाष्यम् । कूर्मपुराणे उत्तरार्धे गीतेयमस्ति (अ० १-११) ।

(७-१४) कासांश्चिद् उपनिषदाम् आलोकनाम्नी व्याख्या—प्रसिद्धमिदं यद् भिक्षुणा प्रश्न-कठ-तैत्तिरीय-मुण्डक-माण्डूक्य-कैवल्य-मैत्रेयी-श्वेताश्वतर-उपनिषदां व्याख्यानानि विरचितानि ।

(१५) पाषण्डमतखण्डनम—अस्य कोशोऽद्यापि विद्यते; द्र० गोपीनाथकविराज-कृतः 'काशी की सारस्वतसाधना'–नामधेयो ग्रन्थः (पृ० २२) ।

(१६) ब्रह्मादर्शः—अस्य कोशोऽद्यापि वर्तते (द्र० उपर्युक्तो ग्रन्थः) ।

(१७) साङ्ख्यकारिकाभाष्यमपि भिक्षुणा विरचितमित्यस्माभिः श्रुतम् ।

भिक्षुरयं खाष्टीये षोडशे शतके प्रादुर्बभूव—इति आधुनिका विद्वांसः ।[१] विदुषा उदयवीरशास्त्रिणा इदं निर्धारितं यदयमाचार्यः खीष्ट्रीय-चतुर्दशशतक-मध्यमभागे अविद्यतेति (सांख्यदर्शन का इतिहास, पृ० ३०४) । अस्मन्मते तु भिक्षुः षोडश-शतके वर्तमान आसीदित्येव समीचीनं मतम्[२] । भिक्षुः खीष्टीये एकादश-शतके जनिमलभत–इत्यप्यस्ति मतम् । मतमिदं निर्युक्तिकमेव ।

अयं काश्यां निवसति स्मेति प्रसिद्धि रस्ति । इदं तथ्यं भवितुमर्हति । वङ्गेष्वयं प्रादुर्बभूवेति केचन मन्यन्ते[३] । मतमिदं परीक्षणार्हम् ।

विज्ञानभिक्षुवाक्यानि त्रिभिरेव ग्रन्थकारैः स्मृतानीति दृश्यते । भिक्षुवाक्यानि काश्मीरकः सदानन्दः अद्वैतब्रह्मसिद्धौ (पृ० ३१), भिक्षुशिष्यो भावागणेशः (द्र० विज्ञानचार्यवर्यैरस्मद्गुरुभिः—२५ सूत्रव्याख्या) तत्त्वयाथार्थ्यदीपने (२३ सूत्रव्याख्याने), अगस्त्यकृतशक्तिसूत्रभाष्यकारः १२ श-सूत्र-व्याख्याने उद्धृतवान् ।

---

१. इस प्रकार विज्ञानभिक्षु का समय ई० १५०० और १६०१ के बीच अर्थात् ई० १६ वीं शताब्दी में स्थिर होता है (डॉ० आद्याप्रसाद कृत सांख्यदर्शन की ऐतिहासिक परम्परा, पृ० ३१३) । Vijnanabhiksu lived between A.D. 1525 and 1600 (P. K. Gode, I. L. H., II, p. 207). Vijnanabhiksu, the sixteenth century theologian and thinker... (Dr. S. Radhakrishnan, 1. P. I, p. 48.). Vijnanabhiksu of the sixteenth century (Dr. Dasgupta, H. 1. P. I, p. 212).

२. पञ्चदशशताब्दीभवः केशवभट्टस्य मतं भिक्षुणा स्मृतम् ६।७० भाष्ये-ईत्येवास्य मतस्य हेतुः ।

३. द्र० संस्कृतसाहित्ये वाङालीर दान-नामा वङ्गभाषीयो ग्रन्थः (पृ० १५९) डॉ० सुरेशचन्द्र वद्योपाध्यायप्रणीतः ।

भिक्षुभाष्यस्य प्रामाण्यं लघ्वति अस्माकं मतम् । भिक्षुव्याख्यानं न सूक्ष्ममर्थं सूत्राणां प्रकटयति, नवा गूढमर्थं प्रद्योतयति । किंच भिक्षुमतानि क्वचिद् परस्पर-भिन्नानि, परस्परविरुद्धानि चावलोक्यन्ते । सूत्रविषय-प्रतिपादक-पुराणादि-वचनानां यत् संकलनं भिक्षुणा कृतं तदुपादेयमिति स्वीकरणीयमेव । संकलित-वचनानां व्याख्याने समन्वये च भिक्षोर्वैदुष्य मन्तदृष्टिर्वा नावलोक्यते । पञ्चविंशति-तत्त्वानां तत्त्वनिर्मित-पदार्थानां च स्वरूपं न भिक्षुणा सम्यक् विशदीकृतम् । स्वमतस्थापने परमतखण्डने च भाष्यमिदं नात्यन्तं समर्थमिति दृश्यते । अस्माकं यानि सांख्यसंबन्धीनि मतानि, तानि न सर्वथा भिक्षुमतसदृशानि । यत्र भिक्षुमतैः सह अस्माकं विरोधः, तत्रास्माभिः स्वमतानि प्रदर्शितानि । मतानां युक्तायुक्तत्वपरीक्षणाय विद्वांसोऽनुरुध्यन्ते ।

भिक्षुधृतपुराण-श्लोकपाठान् आश्रित्य मुद्रितपुराणश्लोकपाठानां संशोधनं कर्तुं शक्यते । मुद्रित-पुराण-श्लोकपाठापेक्षया भिक्षुधृत-पुराणश्लोक-पाठाः समीचीनतरा इत्यत्र न संशयलेशोऽपि । दिङ्मात्र मुदाह्रियते । मार्कण्डेयपुराणस्य बहुषु संस्करणेषु 'त्रयीधर्ममधर्माढ्यं किंपापफलसन्निभम्' (१०।३१) इति पठ्यते । Pargiter महोदयेनानूदितोऽयं 'किंपापफल'—शब्दः 'the result of sin' इत्येवं रूपेण (Markandeya Purana, p. 65) । भिक्षुः खलु 'किंपाकफल-सन्निभम्' इत्येवंरूपेण श्लोकमिममुद्धृतवान् (द्र० १।६ भाष्य) । अयमेव पाठः समी-चीन इति न संशयलेशोऽपि । एतादृशानि उदाहरणान्तराणि व्याख्यायां द्रष्टव्यानि ।

अथात्र सांख्यसूत्रग्रन्थमधिकृत्य किमपि विचार्यते । अस्माकं मते बहुसूत्र-युतस्यास्य ग्रन्थस्य सूत्राणि नैकव्यक्तिकृतानि, नवा एककालरचितानि । अत्रत्यानि प्रायः सर्वाणि वाक्यानि (सूत्राणि) प्राचीनतम–प्राचीनतर-प्राचीनार्वाचीनाचार्यैः प्रणीतानि यथाकालम्; तानि स्वकृतवाक्यैः सह एकत्र संकलितानि केनचिदा चार्येण अज्ञातनामधेयेन । ग्रन्थोऽयं पूर्वाचार्य-वचन-संकलनप्रधान एवेति अस्माकं सुचिन्तितं मतम् । Max Muller महोदयोऽपि इदमेव मतं[1] पुपोषेति ।

---

1. It is quite possible that our Samkhya sutras may only be what we should call the latest recension of the old sutras... portions of the Samkhya sutras have been preserved here and there and have been added to or remodelled from time to time till they meet us at last in their final form, at so late a date as the fourteenth or even the sixteenth century ?...it is more than possible that our sutras of the Samkhya philosophy contain some of the most modern sutras, the utterances of Kapila, Asuri, Pancasikha, Varsaganya, as well as those of Isvarakrsna and even of Vijnanabhiksu (Six System of Indian Philosophy, p. 289-290).

संकलयित्रा संकलितानि वाक्यानि न सुष्ठु सज्जीकृतानि प्रकरणादिविभागश इति स्पष्टं प्रतीयते । अतएव पुनरुक्त्यादिदोषभूयिष्ठोऽयं ग्रन्थो जातः । वृत्तिकर्तुरनिरुद्धात् प्राक्तने काले केनापि विदुषा स्वपरम्परासुरक्षितानि इमानि वाक्यानि एकत्र संगृहीतानि । ततश्च कालक्रमेण केनापि संकलनमिदमधिगतम्, वचसां सूत्ररूपत्वदर्शनेन इदमेव 'सांख्यसूत्रम्' इति रूपेण तेनेदं स्वीकृतम् । इदं वाक्यसंकलनं न शंकराचार्येण नवा वाचस्पतिना ज्ञात मिति निश्चप्रचमेव ।

अत्रेदं विज्ञेयं यत् सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरिति वचनम् अतिप्राचीनाचार्यविशेषकृतग्रन्थगतमिति प्रतिभाति । वाक्यस्यास्य उल्लेखो बहुभिराचार्यैः कृतः । एते ग्रन्थकृतोऽस्मादेव सूत्रग्रन्थाद् वाक्यमिदमुद्धरन्ति-इति न कथयितुं शक्यते । न खलु केनापि ग्रन्थकृता वाक्यमिदमद्धरता उक्तं यदिदं वाक्यं सांख्यसूत्रनामकग्रन्थविशेषाद् उद्धृतमिति । परम्परारक्षितं वाक्यमिदमेते ग्रन्थकारा उद्धरन्ति-इत्येवास्माकीनी दृष्टिः । सांख्यसूत्रसदृशानि अन्यानि यानि वाक्यानि विभिन्नैराचार्यैः स्तस्वग्रन्थेषूक्तानि, तानि अस्मादेव ग्रन्थाद गृहीतानीति कथनं न साधु, यतोहि न कश्चिदपि ग्रन्थकारो सांख्यसूत्रग्रन्थमिमं स्मरति ।

सांख्यसूत्रसंकलनकर्तुरपि कानिचन वाक्यानि अत्र ग्रन्थे सन्तीति कथयितुं शक्यते । यान्यत्र मायावादादिदूषकानि वाक्यानि, तेषु बाहूनि वाक्यानि संकलयित्रैव विरचितानि—इति कथनं युक्तमेव ।

कैश्चित् कथ्यते यत् कानिचन सूत्राणि विज्ञानभिक्षुणैव प्रणीतानीति । केचन पुनः 'सर्वाण्येव सूत्राणि भिक्षुप्रणीतानि' इति आतिष्ठन्ते । सर्वथानुपपन्ने इमे द्वे मते भिक्षोः प्राग्भवेन अनिरुद्धेन सर्वेषामेव भिक्षुव्याख्यात-सूत्राणां व्याख्यातत्वात् । यद्यपि केषांचन सूत्राणां वृत्तिदर्शिताः पाठा भाष्यसंमतेभ्यः पाठेभ्य ईषद् भिन्नाः, तथापि नेदृशाः पाठभेदाः सूत्राणां भिक्षुकर्तृकत्वमनुमापयन्ति ।

ग्रन्थेऽस्मिन् प्रकरणानां विभागो न सर्वथा युक्तियुक्तः । किंच प्रकरणेषु सूत्राणां स्थापनमपि न न्यायसंगतं प्रतीयते सर्वत्र । सांख्यसूत्राणां प्रकरणशः स्थापनम्, ततश्च प्रकरणानुसारेण तेषां व्याख्यानम्-इति द्वे कार्ये अवशिष्येते, ते चावश्यं संपादनीये विद्वद्भिः । अस्माभिस्तु एतदर्थं प्रयत्यते-इति निवेद्य विरमामि ।

—रामशंकरो भट्टाचार्यः

* ओम् नमः परमर्षये कपिलाय *

# सांख्यदर्शनम्

## साङ्ख्यप्रवचनभाष्यसमेतम्

### प्रथमोऽध्यायः

[1]एकोऽद्वितीय इति वेदवचांसि पुंसि
सर्वाभिमानविनिवर्त्तनतोऽस्य मुक्त्यै ।
वैधर्म्यलक्षणभिदाविरहं[2] वदन्ति
नाखण्डतां[3] ख इव धर्मशताविरोधात् ।। १ ।।
तस्य श्रुतस्य मननार्थमथोपदेष्टुं[4]

---

१. उद्धृतोऽयं श्लोको भावागणेशेन तत्त्वसमासव्याख्यानान्ते । दर्शितं च स्वदृष्टया सांख्यमतम्—'सांख्यानां च सर्वात्मनाम् अवैधर्म्याभेद एव तत्त्वमसिवाक्यार्थो नाविभागादिः, तज्ज्ञानस्यैव अभिमाननिवर्तकत्वात् । तद्वाक्यस्य च श्वेतकेतोः अनूचानत्वाद्यभिमाननिवृत्त्यर्थमेव प्रवृत्तेः । तथा च लयावशिष्टचित्सामान्यं तत्-पदार्थः' इति ।

२. द्र० 'यदि पुनरद्वैतवाक्यानि अखण्डतामात्रपराणि··· किन्तु अवैधर्म्यलक्षणाभेदपराण्येव' इति (१।१५४ भा०); 'अयं चाभेदो नाखण्डता अपि तु अविभाग एव' इति ( योगवा० १।२६ ); 'जीवब्रह्मणोः वैधर्म्यलक्षणभेदस्य स्वरूपतः अभावात्' ( आह च तन्मात्रमिति ब्रह्मसूत्रभाष्ये भिक्षुः ); 'अतो न अखण्डात्माद्वैतम्' ( १।१५७ भा० ); 'तस्माद् वेदान्तानामखण्डात्माद्वैतं नार्थः' ( ५।६५ भा० ) ।

३. अखण्डार्थपक्षोऽद्वैतिनाम् । इदमेव तत्त्वमसीत्यादिवाक्यानामखण्डार्थत्वं यत् ससंर्गानवगाहि यथार्थज्ञानजनकत्वम् इति (वेदान्तपरिभाषा, परि० १); तुल० अखण्डधीगोचरपदमद्वैतसिद्धिप्रथममङ्गलश्लोकस्थम् । अखण्डधीः नाम संसर्गाविषयक-मनोवृत्तिविशेषः ( बालबोधिनी टीका ) ।
'तस्मात् सर्वे वेदान्ता अखण्डैकरसब्रह्मप्रतिपादकाः' इति ( वि० प्र० संग्रह पृ० २२९ ) । तस्माद् महावाक्यस्याखण्डार्थतायां न काचिदनुपपत्तिः ( पृ० २३२ ) । अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः (पञ्चदशी ७।७५) ।

४. द्र० 'एतदेव हि मननं यदाचार्ययुक्त्या स्वयुक्त्या च श्रौतप्रत्ययस्य दार्ढ्यापादनम् । मननस्य चावगतिहेतुत्वं मन्तव्य इति श्रुत्या सिद्धम्' ( वि० प्र० संग्रह, पृ० २१२ ) ।

सद्युक्तिजालमिह साङ्ख्यकृदाविरासीत् ।
नारायणः कपिलमूर्त्ति[1]रशेषदुःख-
हानाय जीवनिवहस्य नमोऽस्तु तस्मै ॥ २ ॥
नानोपाधिषु यन्नानारूपं भात्यनलार्कवत् ।
तत् समं सर्वभूतेषु चित्सामान्यमुपास्महे ॥ ३ ॥
ईश्वरानीश्वरत्वादि चिदेकरसवस्तुनि ।
विमूढा यत्र पश्यन्ति तदस्मि परमं महः ॥ ४ ॥
कालार्कभक्षितं साङ्ख्यशास्त्रं ज्ञानसुधाकरम् ।
कलावशिष्टं भूयोऽपि पूरयिष्ये वचोऽमृतैः ॥ ५ ॥
चिदचिद्ग्रन्थिभेदेन मोचयिष्ये चितोऽपि च ।
साङ्ख्यभाष्यमिषेणास्मात् प्रीयतां मोक्षदो हरिः ॥६॥
तत् त्वमेव त्वमेवैतदेवं श्रुतिशतोदितम् ।[2]
सर्वात्मनामवैधर्म्यं शास्त्रस्यास्यैव गोचरः ॥ ७ ॥

आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृहदा० २।४।५; ४।५।६ ) इत्यादिश्रुतिषु परमपुरुषार्थसाधनस्यात्मसाक्षात्कारस्य हेतुतया श्रवणादित्रयं विहितम् । तत्र श्रवणादावुपायाकाङ्क्षायां स्मर्यते—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः[3] ॥

इति । ध्येयो योगशास्त्रप्रकारेणेति शेषः । तत्र श्रुतिभ्यः श्रुतेषु पुरुषार्थतद्धेतुज्ञान-तद्विषयात्मस्वरूपादिषु श्रुत्यविरोधिनीरुपपत्तीः षडध्यायीरूपेण विवेकशास्त्रेण कपिलमूर्त्तिर्भगवानुपदिदेश ।

ननु न्यायवैशेषिकाभ्यामप्येतेष्वर्थेषु न्यायः प्रदर्शित इति ताभ्यामस्य गतार्थत्वम्, सगुणनिर्गुणत्वादिविरुद्धरूपैरात्मसाधकतया तद्युक्तिभिरत्रत्ययुक्तीनां विरोधेनोभयोरपि दुर्घटं च प्रामाण्यमिति । मैवम्, व्यावहारिकपारमार्थिकरूपविषयभेदेन गतार्थत्वविरोधयोरभावात् । न्यायवैशेषिकाभ्यां हि सुखिदुःख्याद्यनुवादतो देहादि-

---

१. द्र० कपिलर्षिर्भगवतः सर्वभूतस्य वै किल ।
विष्णोरंशो जगन्मोहनाशायोर्वीमुपागतः ॥
(विष्णु पु० २।१४।९) । ईदृशानि वचांसि पुराणादिषु असकृदुपलभ्यन्ते ।

२. द्र० 'अतएव तत् त्वमेव त्वमेवैतद् इत्यादिश्रुतयः परस्परमेव अवैधर्म्यलक्षणाभेदं प्रतिपादयन्ति' (योगवा० १।२९); 'तादृशवाक्यैः प्रकरणभेदेन क्वाचिद् अवैधर्म्यलक्षणाभेदप्रतिपादनात्' (योगवा० २।२२); 'अतस्तदानीम् अविभागलक्षणाभेदोऽपि······' (योगवा० ३।१४) ।

३. श्लोकोऽयं मानवोपपुराणीयम् । लुप्तमिदं पुराणमिति विज्ञायते । द्र० मन्तव्यश्चोपपत्तिभिः । उपपत्तिभिर्बहुभिर्हेतुभिरनुमातव्यः, अन्यथा बहुवचनानुपपत्तेः, ( पक्षताया माथुरीटीका ) ।

मात्रविवेकेनात्मा प्रथमभूमिकायामनुमापितः ; एकदा परसूक्ष्मे प्रवेशासम्भवात् । तदीयं च ज्ञानं देहाद्यात्मतानिरसनेन व्यावहारिकं तत्त्वज्ञानं भवत्येव । यथा पुरुषे स्थाणुभ्रमनिरासकतया करचरणादिमत्त्वज्ञानं व्यवहारतस्तत्त्वज्ञानं तद्वत् । अतएव—

प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥

इति गीतायां ( ३।२० ) कर्तृत्वाभिमानिनस्तार्किकस्याकृत्स्नवित्त्वमेव कृत्स्नवित्साङ्ख्यापेक्षयोक्तम्, न तु सर्वथैवाज्ञत्वमिति । तथा तदीयमपि ज्ञानमपरवैराग्यद्वारा परम्परया मोक्षसाधनं भवत्येवेति । तज्ज्ञानापेक्षयापि च साङ्ख्यज्ञानमेव पारमार्थिकं परवैराग्यद्वारा साक्षान्मोक्षसाधनं च भवति, उक्तगीतावाक्येनात्माकर्तृत्ववित्त्वस्यैव कृत्स्नवित्त्वसिद्धेः । 'तीर्णो हि तदा भवति हृदयस्य शोकान् कामादिकं मन एव मन्यमानः' (बृहदा० ४।३।२२), 'सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' (बृहदा० ४।३।७), 'स यदत्र किञ्चिद् पश्यत्यनन्वागतस्तेन भवति' (बृहदा० ४।३।१६) इत्यादितात्त्विकश्रुतिशतैः ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥ (गीता ३।२७)
निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमया धर्मा प्रकृतेस्ते तु नात्मनः ॥ (वि०पु० ६।७।२२)

इत्यादितात्त्विकस्मृतिशतैश्च; न्यायवैशेषिकोक्तज्ञानस्य परमार्थभूमौ बाधितत्वाच्च। न चैतावता न्यायाद्यप्रामाण्यम्, विवक्षितार्थे देहाद्यतिरेकांशे बाधाभावाद्, 'यत्परः शब्दः स शब्दार्थः' इति न्यायात् । आत्मनि सुखादिमत्त्वस्य लोकसिद्धतया तत्र प्रमाणान्तरानपेक्षणेन तदंशस्यानुवादत्वान्न शास्त्रतात्पर्यविषयत्वमिति ।

स्यादेतत् । न्यायवैशेषिकाभ्यामत्राविरोधो भवतु । ब्रह्ममीमांसा-योगाभ्यां तु विरोधोऽस्त्येव; ताभ्यां नित्येश्वरसाधनात्, अत्र चेश्वरस्य प्रतिषिध्यमानत्वात् । न चात्रापि व्यावहारिकपारमार्थिकभेदेन सेश्वरनिरीश्वरवादयोरविरोधोऽस्तु सेश्वरवादस्योपासनापरत्वसम्भवादिति वाच्यम्; विनिगमकाभावात् । ईश्वरो हि दुर्ज्ञेय इति निरीश्वरत्वमपि लोकव्यवहारसिद्ध मैश्वर्यवैराग्यायानुवदितुं शक्यते-आत्मनः सगुणत्वमिव; न तु क्वापि श्रुत्यादावीश्वरः स्फुटं प्रतिषिध्यते येन सेश्वरवादस्यैव व्यावहारिकत्वमवधार्येतेति ।

अत्रोच्यते—अत्रापि व्यावहारिकपारमार्थिकभावो भवति—असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् (गीता १६।८) इत्यादिशास्त्रैर्निरीश्वरवादस्य निन्दितत्वात् । अस्मिन्नेव शास्त्रे व्यावहारिकस्यैवेश्वरप्रतिषेधस्यैश्वर्यवैराग्याद्यर्थमनुवादत्वौचित्यात् । यदि हि लौकायतिक-मतानुसारेण नित्यैश्वर्यं न प्रतिषिध्येत, तदा परिपूर्णनित्यनिर्दोषैश्वर्यदर्शनेन तत्र चित्तावेशतो विवेकाभ्यासप्रतिबन्धः स्यादिति साङ्ख्याचार्याणामाशयः । सेश्वरवादस्य न क्वापि निन्दादिकमस्ति, येनोपासनादिपरतया तच् शास्त्रं सङ्कोच्येत ।

यत् तु—नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम् (शान्ति० ३१६।२), 'अत्र वः संशयो मा भूज् ज्ञानं साङ्ख्यं परं मतम्' (शान्ति० ३०१।१०१) इत्यादि वाक्यम्; तद्विवेकांश एव साङ्ख्यज्ञानस्य दर्शनान्तरेभ्य उत्कर्षं प्रतिपादयति, न त्वीश्वरप्रतिषेधांशेऽपि। तथा पराशराद्यखिलशिष्टसंवादादपि सेश्वरवादस्यैव पारमार्थिकत्वमवधार्यते। अपि च—

अक्षपादप्रणीते[1] च काणादे साङ्ख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन॥
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ॥

इति पराशरोपपुराणादिभ्योऽपि ब्रह्ममीमांसाया ईश्वरांशे बलवत्त्वम्। तथा—

न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः।
हेत्वागमसदाचारैर्यद्युक्तं तदुपास्यताम्॥ (शान्ति० २१०।२२)

इति मोक्षधर्मवाक्यादपि पराशराद्यखिलशिष्टव्यवहारेण ब्रह्ममीमांसान्यायवैशेषिकाद्युक्त ईश्वरसाधकन्याय एव ग्राह्यो बलवत्त्वात्। तथा—

यं न पश्यन्ति योगीन्द्राः साङ्ख्या अपि महेश्वरम्।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज॥

इत्यादिकौर्मादिवाक्यैः साङ्ख्यानामीश्वराज्ञानस्यैव नारायणादिना प्रोक्तत्वाच्च[2]।

किञ्च ब्रह्ममीमांसाया ईश्वर एव मुख्यो विषय उपक्रमादिभिरवधृतः। तत्रांशे तस्य बाधे शास्त्रस्यैवाप्रामाण्यं स्याद्, 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्। साङ्ख्यशास्त्रस्य[3] तु पुरुषार्थ-तत्साधनप्रकृतिपुरुषविवेकावेव मुख्यो विषय इतीश्वरप्रतिषेधांशबाधेऽपि नाप्रामाण्यम् 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्। अतः सावकाशतया साङ्ख्यमेवेश्वरप्रतिषेधांशे दुर्बलमिति।

न च ब्रह्ममीमांसायामपीश्वर एव मुख्यो विषयो न तु नित्यैश्वर्यमिति वक्तुं शक्यते। स्मृत्यनवकाशदोषप्रसङ्ग-रूपपूर्वपक्षस्यानुपपत्त्या (द्र० ब्रह्मसू० २।१।१) नित्यैश्वर्यविशिष्टत्वेनैव ब्रह्ममीमांसाविषयत्वावधारणात्। ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यतया तु 'अथातः परब्रह्मजिज्ञासे'ति न सूत्रितमिति।

एतेन साङ्ख्यविरोधाद् ब्रह्मयोगदर्शनयोः कार्येश्वरपरत्वमपि न शङ्कनीयम्। प्रकृतिस्वातन्त्र्यापत्त्या 'रचनानुपपत्तेश्च नानुमानमि'त्यादिब्रह्मसूत्र-(२।२।१) परम्परानुपपत्तेश्च। तथा 'स पूर्वेषामपि गुरुः कालेनानवच्छेदाद्' (१।२६)

१. 'अक्षपादप्रणीते च··· ··· ··· ईश्वरांशे बलवत्त्वम्' इति सन्दर्भः अद्वैतब्रह्मसिद्धौ उद्धृतः।

२. सांख्यज्ञानं खलु नारायणेन विधृतमिति शान्तिपर्वणि उक्तम्—'नारायणो धारयतेऽप्रमेयम्' इति (३०१।११४)। 'प्रकाशं भगवानेतद् ऋषिर्नारायणोऽमृतम्' इति वाक्यमप्यत्र विचार्यम् (शान्ति० २१७।३८)।

३. 'सांख्यशास्त्रस्य तु··· ··· इतिन्यायात्' इति सन्दर्भः अद्वैतब्रह्मसिद्धौ उद्धृतः।

इति योगसूत्रतदीयव्यासभाष्याभ्यां स्फुटमीशनित्यतावगमाच्चेति । तस्मादभ्युपगमवादप्रौढिवादादिनैव साङ्ख्यस्य व्यावहारिकेश्वरप्रतिषेधपरतया ब्रह्ममीमांसायोगाभ्यां सह न विरोधः । अभ्युपगमवादश्च शास्त्रे दृष्टः । यथा विष्णुपुराणे—

एते भिन्नदृशां दैत्य विकल्पाः कथिता मया ।
कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ॥ (१।१७।८३) इति ।

अस्तु वा पापिनां ज्ञानप्रतिबन्धार्थमास्तिकदर्शनेष्वप्यंशतः श्रुतिविरुद्धार्थव्यवस्थापनम् । तेषु तेष्वंशेष्वप्रामाण्यं च । श्रुतिस्मृत्यविरुद्धेषु तु मुख्यविषयेषु प्रामाण्यमस्त्येव । अतएव पद्मपुराणे ब्रह्मयोगदर्शनातिरिक्तानां दर्शनानां निन्दाप्युपपद्यते (६।२६३।६६-७५ क० ) । यथा तत्र पार्वतीं प्रतीश्वरवाक्यम्[१]—

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥
कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं साङ्ख्यन्तु कपिलेन वै ॥
द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥
बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम् ।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ॥
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ।
अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ॥
कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते ।
सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते ॥
परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते ।
ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया ॥

१. पुराणगतेषु एषु श्लोकेषु क्वचित् पाठभेदाः (श्लोकक्रमे भिन्नता च) दृश्यन्ते । ६१ तमे श्लोके 'पूर्वं वेदमपार्थकम्' इति पुराणे पठ्यते । बौद्धशास्त्रमित्यादिको ब्राह्मणरूपिणेत्यन्तः अंशः (७१-७२ क श्लोकौ) न सर्वेषु पुराणकोशेषु पठ्यते । तथैव 'सर्वकर्म··· प्रतिपाद्यते' (७३ ख०-७४ क०) इत्यंशो न सर्वेषु पुराणकोशेषूपलभ्यते। ७५ तम श्लोके 'नाशनार्थं'—स्थले 'मोहनार्थम्' 'मायावादमवैदिकम्' इति स्थले 'मायया यदवैदिकम्' इति पुराणे पठ्यते । ७६ तमे श्लोके 'कथितम्' इत्यत्र 'रक्षितमिति' पठ्यते पुराणे ।

सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे।
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ॥
मयैव कथितं देवि जगतां नाशकारणात्।

इति। अधिकं तु ब्रह्ममीमांसाभाष्ये प्रपञ्चितमस्माभिरिति।

तस्मादास्तिकशास्त्रस्य न कस्याप्यप्रामाण्यं विरोधो वा। स्वस्वविषयेषु सर्वेषामबाधात्, अविरोधाच्चेति[1]।

नन्वेवं पुरुषबहुत्वांशेऽप्यस्य शास्त्रस्याभ्युपगमवादत्वं स्यात्। न स्यात्; अविरोधात्। ब्रह्ममीमांसायामंशो नानाव्यपदेशाद्' (२।३।४३-५०) इत्यादिसूत्रजातैर्जीवात्मबहुत्वस्यैव निर्णयात्। साङ्ख्यसिद्धपुरुषाणामात्मत्वं तु ब्रह्ममीमांसया बाध्यत एव। 'आत्मेति तूपगच्छन्तीति' (४।१।३) तत्सूत्रेण परमात्मन एव परमार्थभूमावात्मत्वावधारणात्; तथापि च साङ्ख्यस्य नाप्रामाण्यम्, व्यावहारिकात्मनो जीवस्येतरविवेकज्ञानस्य मोक्षसाधनत्वे विवक्षितार्थे बाधाभावात्। एतेन श्रुतिस्मृतिप्रसिद्धयोर्नानात्मैकात्मत्वयोर्व्यावहारिकपारमार्थिकभेदेनाविरोध इति ब्रह्ममीमांसायां (२।३।४३ भाष्यम्) प्रपञ्चितमस्माभिरिति दिक्।

नन्वेवमपि तत्त्वसमासाख्यसूत्रैः सहास्याः षडध्याय्याः पौनरुक्त्यमिति चेत्? मैवम्, संक्षेपविस्तररूपेणोभयोरप्यपौनरुक्त्यात्। अत एवास्याः षडध्याय्या योगदर्शनस्येव साङ्ख्यप्रवचनसंज्ञा युक्ता। तत्त्वसमासाख्यं हि यत् संक्षिप्तं साङ्ख्यदर्शनं तस्यैव प्रकर्षेणास्यां निर्वचनमिति। विशेषस्त्वयं यत् षडध्याय्यां तत्त्वसमासाख्योक्तार्थविस्तरमात्रम्। योगदर्शने त्वाभ्यामभ्युपगमवादप्रतिषिद्धस्यैवेश्वरस्य निरूपणेन न्यूनतापरिहारोऽपीति।

अस्य च साङ्ख्यसंज्ञा सान्वया—

सङ्ख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ॥
तत्त्वानि च चतुर्विंशत् तेन साङ्ख्याः प्रकीर्तिताः।
(शान्ति० ३०६।४३-४३)

---

१. शास्त्राणां परस्परं न विरोधः, प्रत्युत समन्वय एवेति दृष्टिरपि विद्यते। यद्यपि नेयं दृष्टिः सर्वाचार्यसंमता, तथापि केचन एनां दृष्टिं बिभ्रत्येव। द्र० 'निष्प्रपञ्च आत्मा ज्ञेयो मुमुक्षुभिरिति तात्पर्यं प्रपञ्चमिथ्यात्वश्रुतीनाम्, आत्मन एव एकस्य ज्ञानमपवर्गसाधनमित्यद्वैतश्रुतीनाम्, ... प्रकृत्यादि श्रुतीनाम्, तन्मूलानां सांख्यादिदर्शनानां चेति नेयम्। अन्यथा जैमिनिर्यदि सर्वज्ञः... ... व्याख्याभेदस्तु किंकृतः' (आत्मतत्त्वविवेक); भास्कररायकृता वामकेश्वरतन्त्रव्याख्या चास्मिन्नर्थे द्रष्टव्या। तुल० प्रस्थानभेदोऽपि (न हि ते मुनयो... भ्रान्ताः); द्र० सर्वागमप्रामाण्यप्रकरणं न्यायमञ्जर्याम् (भाग १, पृ० २४४-२४५)। अतएव द्वैतादिमतानि न पारमार्थिकानीति मतमपि प्रकाशितमाचार्यैः—द्वैतं चैव तथाऽद्वैतं द्वैताद्वैतं तथैव च। न द्वैतं नापि चाद्वैतमिति तत् पारमार्थिकम् ॥ (दक्षसंहिता ७।४८)।

इत्यादिभ्यो भारतादिवाक्येभ्यः। सङ्ख्या सम्यग्विवेकेनात्मकथनमित्यर्थः[1]। अतः साङ्ख्यशब्दस्य योगरूढतया 'तत्कारणं साङ्ख्ययोगाधिगम्यमि' त्यादिश्रुतिषु (श्वेताश्व० ६।१३), 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु' (गीता २।३९) इत्यादिस्मृतिषु च साङ्ख्यशब्देन साङ्ख्यशास्त्रमेव ग्राह्यम्, न पुनरर्थान्तरं कल्पनीयमिति।

तदिदं मोक्षशास्त्रं चिकित्साशास्त्रवच्चतुर्व्यूहम्। यथा हि रोग आरोग्यं रोगनिदानं भैषज्यमिति चत्वारो व्यूहाः समूहाश्चिकित्साशास्त्रस्य प्रतिपाद्यास्तथैव हेयं हानं हेयहेतुर्हानोपायश्चेति चत्वारो व्यूहा मोक्षशास्त्रस्य प्रतिपाद्या भवन्ति, मुमुक्षुभिर्जिज्ञासितत्वात्। तत्र त्रिविधं दुःखं हेयम्, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः, विवेकख्यातिस्तु हानोपाय इति। व्यूहशब्देन चैषामुपकरणसंग्रहः।

तत्र चादौ फलत्वेनाभ्यर्हितं हानं तत्प्रतियोगिविषयैव च हेयं प्रतिपादयिष्यन् शास्त्रकारः शिष्यावधानाय शास्त्रारम्भं प्रतिजानीते—

अथ[2] त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः[3] ॥१॥

अथशब्दोऽयमुच्चारणमात्रेण मङ्गलरूपः। अतएव 'मङ्गलाचरणं शिष्टाचारादि'ति स्वयमेव पञ्चमाध्याये (५।१) वक्ष्यति। अर्थस्त्वत्राथशब्दस्याधिकार एव। प्रश्नानन्तर्यादीनां पुरुषार्थेन सहान्वयासम्भवात्। ज्ञानाद्यानन्तर्यस्य च सूत्रैरेव वक्ष्यमाणतया तत्प्रतिपादनवैयर्थ्यात्। अधिकारभिन्नार्थत्वे शास्त्रारम्भप्रतिज्ञाद्यलाभप्रसङ्गाच्च। तस्मात्पुरुषार्थस्योपक्रमोपसंहारदर्शनादधिकारार्थत्वमेवोचितम्। 'तदुच्छित्तिः पुरुषार्थः' (६।७०) इत्युपसंहारो भविष्यतीति।

अधिकारश्चाधिक्येन प्राधान्येनारम्भणम्। आरम्भश्च यद्यपि साक्षाच्छास्त्रस्यैव तथापि तद्द्वारा शास्त्रार्थतद्विचारयोरपीति। तथा च साधनाद्युपकरणसहितो यथोक्तपुरुषार्थोऽधिकृतः प्राधान्येन निरूपयितुमस्माभिः प्रारब्ध इति सूत्रवाक्यार्थः।

---

१. द्र० संख्यानं संख्या विवेकः, तया इदं शास्त्रं सांख्यम् (अर्थशास्त्रजयमङ्गला १।२); 'दोषाणां च गुणानां च प्रमाणं प्रविभागतः। कञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम्॥ (शान्ति० ३२०।८२)।

२. द्र० त्रिविधं दुःखम् (देवलवचनम्, याज्ञ० ३।१०९ अपरार्कटीकायाम् उद्धृतम्), अत्र देवलवाक्येषु 'पुरुषार्थोपदेशः' 'द्विविधः पुरुषार्थः' इति च वाक्ये दृश्येते। 'जरामरणदुःखयोरत्यन्ताभावोऽपवर्गः' इति देवल आह। 'दुःखेन अत्यन्तं विमुक्तश्चरति' इति श्रुतिः। दुःखात्यन्तनिवृत्तिः दार्शनिकैः स्वीकृतैव। द्र० 'तदत्यन्तविमोक्षोऽपवर्गः' (न्यायसू० १।१।२२); निःश्रेयसं पुनः दुःखनिवृत्तिः सा दुःखप्रागभाव इति केचन (द्र० उपस्कार १।१।४)।

३. सूत्रमिदं योगवार्तिके (२।१६) उद्धृतम्। तापत्रयभोगाभाव एव दुःखात्यन्तनिवृत्तिः।

त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकं च दुःखम्। तत्रात्मानं स्वसङ्घातमधिकृत्य प्रवृत्तमित्याध्यात्मिकम्—शारीरं मानसं च। तत्र शारीरं व्याध्याद्युत्थम्। तथा भूतानि प्राणिनोऽधिकृत्य प्रवृत्तमित्याधिभौतिकम्—व्याघ्रचोराद्युत्थम्। देवानग्निवाय्वादीनधिकृत्य प्रवृत्तमित्याधिदैविकम्—दाहशीताद्युत्थमिति भावः। य पि सर्वमेव दुःखं मानसं तथापि मनोमात्रजन्यत्वाजन्यत्वाभ्यां मानसत्वामानसत्वविशेषः। एषां त्रिविधदुःखानां याऽत्यन्तनिवृत्तिः स्थूलसूक्ष्मसाधारण्येन निःशेषतो निवृत्तिः, सोऽत्यन्तः परमः पुरुषार्थः पुरुषाणां बुद्धेरिष्ट इत्यवान्तरवाक्यार्थः।

तत्र स्थूलं दुःखं वर्तमानावस्थं तच्च द्वितीयक्षणादुपरि स्वयमेव नङ्क्ष्यति, अतो न तत्र ज्ञानापेक्षा। अतीतं तु प्रागेव नष्टमिति न तत्र साधनापेक्षेति परिशेषादनागतावस्थ-सूक्ष्मदुःखनिवृत्तिरेव पुरुषार्थतया प्रकृते पर्यवस्यति। तथा च योगसूत्रम्—हेयं दुःखमनागतमिति (२।१६)। निवृत्तिश्च न नाशोऽपित्वतीतावस्था, ध्वंसप्रागभावयोरतीतानागतावस्थास्वरूपत्वात्, सत्कार्यवादिभिरभावानङ्गीकारात्।

ननु कदाचिदप्यवर्तमानमनागतं दुःखमप्रामाणिकम्। अतः खपुष्पनिवृत्तिवत् तन्निवृत्तेर्न पुरुषार्थत्वं युक्तमिति। मैवम्, सर्वत्र हि स्वस्वकार्यजननशक्तिर्यावद्द्रव्यस्थायिनीति पातञ्जले सिद्धम्।[1] दाहादिशक्तिशून्यस्याग्न्यादेः क्वाप्यदर्शनात्। सा च शक्तिरनागतावस्थतत्तत्कार्यरूपा। इयमेव चोपादानकारणस्वरूपयोग्यतेत्यपि गीयते। अतो यावच्चित्तसत्ता तावदेवानागतदुःखसत्ताऽनुमीयते तन्निवृत्तिश्च पुरुषार्थ इति।

जीवन्मुक्तिदशायां च प्रारब्धकर्मफलातिरिक्तानां दुःखानामनागतावस्थानां बीजाख्यानां दाहः, विदेहकैवल्ये तु चित्तेन सह विनाश इत्यवान्तरविशेषः। बीजदाहश्चाविद्यासहकार्युच्छेदमात्रं ज्ञानस्याविद्यामात्रोच्छेदकत्वस्य लोके सिद्धत्वात्। अतएव चित्तेन सहैव दुःखस्य नाशः। ज्ञानस्य साक्षाद् दुःखादिनाशकत्वे प्रमाणाभावादिति।

ननु तथापि दुःखनिवृत्तिर्न पुरुषार्थः सम्भवति, दुःखस्य चित्तधर्मत्वेन पुरुषे तन्निवृत्त्यसम्भवात्। दुःखनिवृत्तिशब्दस्य दुःखानुत्पादार्थकत्वेऽपि पुरुषे तस्य नित्यसिद्धत्वात्।

यत् तु कण्ठचामीकरवत् सिद्धेऽप्यसिद्धत्वभ्रमात् पुरुषार्थता स्यादिति, तन्न; एवमपि पुमान्निर्दुःख इति श्रवणमननोत्तरं दुःखहानार्थं निदिध्यासनादौ प्रवृत्त्यनुपपत्तेः। बह्वायाससाध्ये ह्युपाये फलनिश्चयादेव प्रवृत्तिर्भवति, प्रकृते तु श्रवणमननाभ्यां सिद्धत्वज्ञानान्नाप्रामाण्यज्ञानानास्कन्दितः फलस्यासिद्धत्वनिश्चयोऽस्तीति।

---

१. 'योग्यतावच्छिन्ना धर्मिणः शक्तिरेव धर्मः (३।१४) इति व्यासभाष्यव्याख्याने भिक्षुराह—'अतएव दहनशक्तिवद् धर्मा अपि धर्मिणि यावद्द्रव्यभाविनः; न हि शक्तिवियोगः शक्तिमतोऽस्ति, शक्तिशक्तिमतोरभेदाद्' इति। द्र० 'यावद्द्रव्यं भवन्ति, तच्छीलाश्चेति तद्भाविनस्तेषां भावो यावद्द्रव्यभावित्वम्, आश्रये सति अविनाशित्वम् इति यावत्' (व्योमवती, पृ० ४४०)।

किञ्च भवतु कदाचिद् भ्रमादिना पुरुषेच्छाविषयत्वं दुःखाभावस्य, श्रुतिस्तु मोहनाशिनी कथं सिद्धस्य फलत्वं प्रतिपादयेत्–'तरति शोकमात्मविद्' (छान्दोग्य ७।१।३), 'विद्वान् हर्षशोकौ जहाती' त्यादिरिति[1]।

अत्रोच्यते—न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते (१।१९) इति हेयहेत्ववधारकसूत्रेणैवायं पूर्वपक्षः समाधास्यते। तथाहि–प्रतिबिम्बरूपेण पुरुषेऽपि सुखदुःखे स्तः। अन्यथा तयोर्भोग्यत्वानुपपत्तेः। सुखादिग्रहणं हि भोगः। ग्रहणं च तदाकारता। सा च कूटस्थचितौ बुद्धेरर्थाकारवत् परिणामो न सम्भवतीत्यगत्या प्रतिबिम्बस्वरूपतायामेव पर्यवस्यति।

अयमेव बुद्धिवृत्तिप्रतिबिम्बो 'वृत्तिसारूप्यमितरत्रे'ति (१।४) योगसूत्रेणोक्तः। 'सत्त्वे तु तप्यमाने तदाकारानुरोधात् पुरुषोऽप्यनुतप्यत इव दृश्यते' इति योगभाष्ये (२।१७) च तदाकारानुरोधशब्देन विशिष्यैव तापादिदुःखस्य प्रतिबिम्ब उक्तः। अतएव च पुरुषस्य बुद्धिवृत्त्युपरागे स्फटिकं दृष्टान्तं सूत्रकारो वक्ष्यति—कुसुमवच्च मणिरिति (२।३५)।

वेदान्तिभिरपि चेतनेऽध्यस्ततयैव दृश्यभानमुच्यते[2]; स चाध्यासः प्रतिबिम्बं विना न घटेत, ज्ञानमात्रस्याध्यासत्वे आत्माश्रयात्—अध्यासाज्ज्ञानं ज्ञानमेव चाध्यास इति। तदेतत् स्मर्यतेऽपि—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥
(योगवा० उपशम० ९१।११३)

इति। अत्र हि दृष्टिशब्दो बुद्धिवृत्तिसामान्यपरो युक्तिसाम्यात्। प्रतिबिम्बश्च तत्तदुपाधिषु बिम्बाकारश्चित्तपरिणाम इति। तस्मात् प्रतिबिम्बरूपेण पुरुषे दुःखसम्बन्धो भोगाख्योऽस्ति[3]; यतस्तेनैव रूपेण तन्निवृत्तेः पुरुषार्थत्वं युक्तम्। अतएव दुःखं मा भुञ्जीयेति प्रार्थनाप्यापामरं दृश्यते। तच्च दुःखभोगनिवृत्तेः पुरुषार्थत्वमनन्यशेषतया न सम्भवतीति सैव स्वतः पुरुषार्थः। दुःखनिवृत्तिस्तु कण्टकादिनिवृत्तिवद् तादर्थ्येन न स्वतः पुरुषार्थः। एवं सुखमपि न स्वतः पुरुषार्थः। किन्तु तद्भोग एव स्वतः पुरुषार्थत्वं यातीति।

तदिदं दुःखभोगनिवृत्तेः पुरुषार्थत्वं योगभाष्ये व्यासदेवैरुक्तम्—तस्मिन् निवृत्ते पुरुषः पुनरिदं तापत्रयं न भुङ्क्त इति[4] (३।५०)। अतः श्रुतावपि दुःख-

१. 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती'ति पठ्यते कठोपनिषदि (१।२।१२)।

२. द्र० 'अध्यस्तं हि सदाद्वैतं दृश्यत्वात् शुक्तिरूप्यवत्।' (सूतसंहिता); यतो द्वैतं समध्यस्तमद्वितीये परात्मनि (सूतसंहिता); वि० प्र० संग्रह, पृ० ७०।

३. विज्ञानामृतभाष्ये (१।१।३) विषयोऽयं विस्तरेणोपपादितः; द्र० १।४ योगवार्त्तिकमपि।

४. 'तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते' इति पठ्यते भाष्ये।

निवृत्तेः पुरुषार्थत्वं विषयतासम्बन्धेनैव बोध्यम् । तदेतद्योगवार्त्तिके प्रपञ्चितमस्माभिरिति दिक्[1] । तदेवमनेन सूत्रेण व्यूहद्वयं सङ्क्षेपेणोद्दिष्टम्, विस्तरस्त्वनयोः पश्चाद्भवितेति ॥१॥

अतः परं वक्ष्यमाणस्य हानोपायव्यूहस्याकाङ्क्षार्थं तदितरेषां हानोपायत्वं प्रत्याचष्टे सूत्रजातेन—

न दृष्टात् तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात् ॥२॥

लौकिकादुपायाद्धनादेरत्यन्तदुःखनिवृत्तिसिद्धिर्नास्ति । कुतः ? धनादिना दुःखे निवृत्ते पश्चाद्धनादिक्षये पुनरपि दुःखानुवृत्तिदर्शनादित्यर्थः । तथा च श्रुतिः—अमृतत्वस्य तु नाशास्ति वित्तेनेत्यादिः (बृहदा० ४।५।३) ॥२॥

नन्वेवं धनाद्यर्जनस्य कुञ्जरशौचवद् दुःखानिवर्त्तकत्वे कथं तत्र प्रवृत्तिस्तत्राह—

प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥३॥

दृष्टसाधनजन्यायां दुःखनिवृत्तावत्यन्तपुरुषार्थत्वमेव नास्ति । यथाकथञ्चित् पुरुषार्थत्वं त्वस्त्येव । कुतः, प्रात्यहिकस्य क्षुद्दुःखस्य निराकरणवदेव तेन धनादिना दुःखनिराकरणस्य चेष्टनादन्वेषणादित्यर्थः । अतो धनाद्यर्जने प्रवृत्तिरुपपद्यत इति भावः । कुञ्जरशौचादिकमप्यापातदुःखनिवर्त्तकतया मन्दपुरुषार्थो भवत्येवेति ॥३॥

स च दृष्टसाधनजो मन्दपुरुषार्थो विज्ञैर्हेय इत्याह—

सर्वासम्भवात् सम्भवेऽपि सत्तासम्भवाद् हेयः प्रमाणकुशलैः[2] ॥४॥

स च दृष्टसाधनजो दुःखप्रतीकारो दुःखादुःखविवेकशास्त्राभिज्ञैर्हेयो दुःखपक्षे निक्षेपणीयः । कुतः, सर्वासम्भवात् । सर्वदुःखेषु दृष्टसाधनैः प्रतीकारासम्भवात् । यत्रापि सम्भवस्तत्रापि प्रतिग्रहपापाद्युत्थदुःखावश्यकत्वमाह—सम्भवेऽपीति । सम्भवेऽपि दृष्टोपायनान्तरीयकादिदुःखसम्पर्कावश्यम्भावादित्यर्थः । तथा च योगसूत्रम्—परिणामतापसंस्कारदुःखैर्गुणवृत्त्यविरोधाच्च सर्वं दुःखमेव विवेकिनः (२।१५) इति ॥४॥

ननु दृष्टसाधनजन्ये सर्वस्मिन्नेव दुःखप्रतीकारे दुःखसम्भेदनियमोऽप्रयोजकः । तथा च स्मर्यते—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्[3] ॥

इति । तत्राह—

---

१. द्र० योगवार्त्तिकगतः सन्दर्भः—'सिद्धान्तमाह—अत्रापीत्यादिना क्षेत्रज्ञ-इत्यन्तेन । कर्मस्थत्वात् कर्मतन्त्रत्वात्...वृत्तिव्याप्यत्वं तु विषयतारूपम्...पुरुषार्थासंभवदोष इति भावः' (२।१७) ।

२. सर्वासंभवात् = सर्वत्रासंभवाद् (वृत्ति) । सत्त्वासंभवाद् = 'दुःखनिवृत्तेः आत्यन्तिकत्वस्य असंभवाद्' (वृत्ति) ।

३. सभापर्वव्याख्याने नीलकण्ठेन श्लोकोऽयमुद्धृतः (११।४) व्याख्यातश्च—'संभिन्नं मिश्रम् । ग्रस्तं भोगोत्तर पापावहम् । अभिलाषः संकल्पः' इति ।

उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः[1] ।।५।।

दृष्टसाधनासाध्यस्य मोक्षस्य दृष्टसाधनसाध्यराज्यादिभ्य उत्कर्षात् तेषु दुःखसत्तावधार्यते । अपिशब्दात् त्रिगुणात्मकत्वादेरपि[2] । मोक्षस्योत्कर्षे प्रमाणं सर्वोत्कर्षश्रुतेरिति—'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ( छान्दोग्य० ८।१२।१ ) इत्यादिना विदेहकैवल्यस्योत्कर्षश्रुतेरित्यर्थः ।।५।।

ननु मा भवतु दृष्टसाधनादत्यन्तदुःखनिवृत्तिः, अदृष्टसाधनात् तु वैदिककर्मणः स्यात्—अपाम सोमममृता अभूम (ऋग् ८।४८।३) इत्यादिश्रुतेस्तत्राह—

अविशेषश्चोभयोः[3] ।।६।।

उभयोरेव दृष्टादृष्टयोरत्यन्तदुःखनिवृत्त्यसाधकत्वे यथोक्ततद्धेतुत्वे चाविशेष एव मन्तव्य इत्यर्थः । एतदेव कारिकायामुक्तम्—दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः (२) इति । गुरोरनुश्रूयत इत्यनुश्रवो वेदः । तद्विहितयागादिरानुश्रविकः । स दृष्टोपायवदेवाशुद्धया हिंसादिपापेन विनाशिसातिशयफलकत्वेन च युक्त इत्यर्थः ।

ननु वैधहिंसायाः पापजनकत्वे बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपस्य विध्यर्थस्यानुपपत्तिरिति चेन्न, वैधहिंसाजन्यानिष्टस्येष्टोत्पत्तिनान्तरीयकत्वेनेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वरूपस्य बलवदनिष्टाननुबन्धित्वस्य विध्यंशस्याक्षतेः ।

यत् तु वैधहिंसातिरिक्तहिंसाया एव पापजनकत्वमिति, तदसत्, सङ्कोचे प्रमाणाभावात् । युधिष्ठिरादीनां स्वधर्मेऽपि युद्धादौ ज्ञातिवधादिप्रत्यवायपरिहाराय प्रायश्चित्तश्रवणाच्च (द्र० शान्तिपर्व अ० ३३) ।

तस्माद्यास्याम्यहं तात दृष्ट्वेमं दुःखसन्निधिम्[4] ।
त्रयीधर्ममधर्माढ्यं किम्पाकफलसन्निभम् ।।

इति मार्कण्डेयवचनाच्च (१०।३१) । अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः (छान्दोग्य० ८।१५।१) इति श्रुतिस्तु वैधातिरिक्तहिंसानिवृत्तेरिष्टसाधनत्वमेव

---

१. यद्यपि लौकिकोपायसाध्यानां दुःखनिवृत्तीनाम् अन्योन्यमुत्कर्षो लक्ष्यते, तथापि दुःखनिवृत्तेः काष्ठा मोक्षे एवेति सूत्रतात्पर्यं वृत्तिमते ।

२. त्रिगुणत्वादेः (पाठा०) ।

३. १।६ सूत्रानन्तरम् १।८२ सूत्रं (एतत्सम्बद्धानि सूत्रान्तराणि च) पठनीयम् । १।६ सूत्रीय-उभयेति पदेन दृष्टादृष्टसाधने गृह्येते । अदृष्टसाधनम् (आनुश्रविकोपायेति नामान्तरम्) १।८२ सूत्रतः कृतम् । १।६ सूत्रीय-चकारस्य किं तात्पर्यम् इत्यपि न विज्ञायते । किमर्थमदृष्टोपायविचारोऽत्रैव न कृत इति प्रश्न उदेति । असमञ्जसमत्र सूत्रक्रमस्थापनमिति न संशयलेशोऽपि ।

४. दुःखसन्ततिमिति मुद्रितपुराणपाठः ।

वक्ति न तु वैधहिंसाया अनिष्टसाधनत्वाभावमपीत्यादिकं योगवार्त्तिके[1] द्रष्टव्यमिति दिक् ।

न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति (तै०आ०१०।१०), तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय (श्वेताश्व० ३।८; यजुः ३१।१८) इत्यादि श्रुतिविरोधेन तु सोमपानादिभिरमृतत्वं गौणमेव मन्तव्यम्—'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' (२।८।९०) इति विष्णुपुराणात्[2] ।।६।।

तदेवं दृष्टादृष्टोपाययोः साक्षात्परमपुरुषार्थासाधनत्वे साधिते तदुपायाकाङ्क्षायां विवेकज्ञानमुपायो वक्तव्यः । तत्र विवेकज्ञानमविवेकाख्य-दुःखहेतूच्छेदद्वारैव हानोपाय इत्याशयेनादावविवेकमेवेतरप्रतिषेधेन हेयहेतुतया परिशेषयति प्रघट्टकेन—

न[3] स्वभावतो[4] बद्धस्य मोक्षसाधनोपदेशविधिः[5] ।।७।।

दुःखात्यन्तनिवृत्तेर्मोक्षत्वस्योक्ततया बन्धोऽत्र दुःखयोग एव । तस्य बन्धस्य पुरुषे न स्वाभाविकत्वं वक्ष्यमाणलक्षणमस्ति, यतो न स्वभावतो बद्धस्य मोक्षाय साधनोपदेशस्य श्रौतस्य विधिरनुष्ठानं नियोज्यानां घटते । न ह्यग्नेः स्वाभाविकाद्

१. द्र० योगवा० २।३४ 'ननु अहिंसन् सर्वाणि भूतानि'……वधाभासतापरमिति दिक्' ।

२. उत्तरार्धस्तु 'त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते' इति । "आभूतसंप्लवमिति । ब्रह्माहःपर्यन्तं यत् स्थानं तदेवामृतत्वमुपचारादुच्यते । उपचारबीजमाह त्रैलोक्येति । अपुनर्मारः पुनर्मृत्युरहितः । क्रममुक्तिस्थानत्वादिति भावः" (श्रीधरः) ।

३. उद्धृतमिदं शिवार्कमणिदीपिकायाम् (ब्र० सू०२।२।७) । अत्र 'मोक्षसाधनोपदेशः' इति पठ्यते ।

४. आत्मनो बन्धः किंजातीय इति अन्यत्रापि विचारितम् । द्र० "तत्र विचारणीयं किमयं बन्धः पारमार्थिकः स्याद् अपारमार्थिको वेति । आद्ये ब्रह्मज्ञानान् न निवर्तते' ( वि० प्र० संग्रह, पृ० ७ ) । "किमयमेव मम स्वभावः, किंवा अन्यस्वभावस्य सतो नैमित्तिक इति । यदि अयमेव स्वभावो न मे मोक्षाशा स्वभावस्यावर्जनीयत्वात्' इति ( उपदेशसाहस्री, पृ० ८० ) । 'बन्धः कस्य केन हेतुना' इति दार्शनिकप्रस्थानेषु मुख्यो विचार्यो विषयः । प्रश्नस्यास्य समाधानमपि न सर्वत्र सुलभमिति पञ्चदशी वाक्यतो विज्ञायते—'एवं सति च बन्धःस्यात् कस्येत्यादिकुतर्कजाः, विडम्बना दृढं खण्डयाः' (८।५५) इति ।

५. तुल० मोक्षसाधनोपदेशविधिं व्याख्यास्यामः……(उपदेशसाहस्रीग्रन्थारम्भ), अध्यात्मविद्योपदेशविधिं व्याख्यास्यामः (प्रज्ञानबोधिनी) ।

औष्ण्यान्मोक्षः[1] सम्भवति, स्वाभाविकस्य यावद्द्रव्यभावित्वादित्यर्थः ।

तदुक्तमीश्वरगीतायाम्—



यद्यात्मा मलिनोऽस्वच्छो[2] विकारी स्यात् स्वभावतः ॥
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि । (कूर्म २।२।१२-१३)

इति । यस्मिन् सति कारणविलम्बाद्विलम्बो यस्योत्पत्तौ न भवति तस्य तत् स्वाभाविकमिति स्वाभाविकत्वलक्षणम् ।

ननु सर्वदोपलम्भापत्तेर्दुःखस्य स्वाभाविकत्वशङ्कैव नास्तीति चेन्न; त्रिगुणात्मकत्वेन चित्तस्य दुःखस्वभावत्वेऽपि सत्त्वाधिक्येनाभिभवात् सदा दुःखानुपलब्धिवदात्मनोऽपि तदनुपलब्धिसम्भवात् । दुःखस्वाभाविकत्ववादिभिर्बौद्धैश्चित्तस्यैवात्मताभ्युपगमाच्च। अथैवमात्मनाशादेव मोक्षोऽस्त्विति चेन्न, अहं बद्धो विमुक्तः स्यामिति बन्धसामानाधिकरण्येनैव मोक्षस्य पुरुषार्थत्वादिति ॥७॥

भवत्वननुष्ठानम्, तेन किमित्यत आह—

[3]स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम्[4] ॥८॥

स्वभावस्य यावद्द्रव्यभावित्वान्मोक्षासम्भवेन तत्साधनोपदेशश्रुतेरननुष्ठानलक्षणमप्रामाण्यं स्यादित्यर्थः ॥८॥

ननु श्रुतिबलादेवानुष्ठानं स्यात्, तत्राह—

नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥९॥

नाशक्याय फलायोपदेशस्यानुष्ठानं सम्भवति । यत उपदिष्टेऽपि विहितेऽप्यशक्यस्योपाये स उपदेशो न भवति, किन्तूपदेशाभास एव; बाधितमर्थं वेदोऽपि न बोधयतीति न्यायादित्यर्थः ॥९॥

अत्र शङ्कते—

शुक्लपटवद्बीजवच्चेत् ॥१०॥

ननु स्वाभाविकस्याप्यायो दृश्यते । यथा शुक्लपटस्य स्वाभाविकं शौक्ल्यं रागेणापनीयते । यथा च बीजस्य स्वाभाविक्यप्यङ्कुरशक्तिरग्निनाऽपनीयते । अतः

---

१. द्र०' न हि स्वाभाविकस्य उच्छित्तिः कदाचिदपि उपपद्यते सवितुरिव औष्ण्यप्रकाशयोः' (बृहदा० ४।३।२० शाकंरभाष्य) । 'नहि स्वभावो भावानां व्यावर्त्येतौष्ण्यवद् रवेः' (उद्धृतमिदं गिरिटीकायाम् , बृहदा० ४।३।१५) ।

२. मलिनः सृष्टः इति मुद्रितपुराणपाठः ।

३. स्वभावो यावद्द्रव्यभावीति पूर्वाचार्यवचनतो विज्ञायते । 'स्वभावो नाम पदार्थानां प्रतिनियता शक्तिः' (शंकरकृतश्वेताश्वतरभाष्य १।२); स्वभावः स्वस्य पदार्थस्य भावः असाधारणकार्यकारित्वम्, यथाऽग्नेर्दाहादिकारित्वम् अपां निम्नदेशगमनादि (शंकरानन्दकृतदीपिका १।२) ।

४. शिवार्कमणिदीपिकायां स्मृतमिदम् (स्वभावनाशात् स्वरूपनाशप्रसंगादित्यादि कापिलसूत्रैः, २।२।८) ।

शुक्लपटवद् बीजवच्च स्वाभाविकस्य बन्धस्याप्यपायः पुरुषे सम्भवतीति तद्वदेव तत्साधनोपदेशः स्यादिति चेदित्यर्थः ॥१०॥

समाधत्ते—

शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥११॥

उक्तदृष्टान्तयोरपि नाशक्याय स्वाभाविकापायायोपदेशो[1] लोकानां भवति। कुतः, शक्त्युद्भवानुद्भवाभ्याम्। दृष्टान्तद्वये हि शौक्ल्यादेराविर्भावतिरोभाववेव भवतः, न तु शौक्ल्याङ्कुरशक्त्योरभावो भवति। रजकादिव्यापारैर्योगिसङ्कल्पादिभिश्च रक्तपट-भृष्टबीजयोः पुनः शौक्ल्याङ्कुरशक्त्याविर्भावादित्यर्थः।

नन्वेवं पुरुषेऽपि दुःखशक्तितिरोभाव एव मोक्षोऽस्त्विति चेन्न; दुःखात्यन्तनिवृत्तेरेव लोके पुरुषार्थत्वानुभवात्, श्रुतिस्मृत्योः पुरुषार्थत्वसिद्धेश्च। न तु दृष्टान्तयोरिव तिरोभावमात्रस्येति। किञ्च दुःखशक्तितिरोभावमात्रस्य मोक्षत्वे कदाचिद्योगीश्वरसङ्कल्पादिना शक्त्युद्भवस्य भृष्टबीजेष्विव मुक्तेष्वपि सम्भवेनानिर्मोक्षापत्तिरिति ॥११॥

स्वभावतो बन्धं निराकृत्य निमित्तेभ्योऽपि बन्धनमपाकरोति सूत्रजातेन (१२-५५)। पुरुषे दुःखस्य नैमित्तिकत्वेऽपि ज्ञानाद्युपायोच्छेद्यत्वं न घटते। अनागतावस्थसूक्ष्मदुःखस्य यावद्द्रव्यभावित्वादित्याशयेन नैमित्तिकत्वं निराक्रियते—

न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात्[2] ॥१२॥

नापि कालसम्बन्धनिमित्तकः पुरुषस्य बन्धः, कुतः व्यापिनो नित्यस्य कालस्य सर्वावच्छेदेन सर्वदा मुक्तामुक्तसकलपुरुषसम्बन्धात्। सर्वावच्छेदेन सदा सकलपुरुषाणां बन्धापत्तेरित्यर्थः।

अत्र च प्रकरणे कालदेशकर्मादीनां निमित्तत्वसामान्यं नापलप्यते श्रुतिस्मृतियुक्तिभिः सिद्धत्वात्, किन्तु यन्नैमित्तिकत्वं पाकजरूपादिवन्निमित्तजन्यत्वं तदेव बन्धे प्रतिषिध्यते, पुरुषे बन्धस्यौपाधिकत्वाभ्युपगमात्।

ननु कालादिनिमित्तकत्वेऽपि सहकार्यन्तरसम्भवाभ्यां व्यवस्था स्यादिति चेत्; एवं सति यत्संयोगे सत्यवश्यं बन्धस्तत्रैव सहकारिणि लाघवाद्बन्धो युक्तः; पुरुषे बन्धव्यवहारस्यौपाधिकत्वेनाप्युपपत्तेरिति कृतं नैमित्तिकत्वेनेति ॥१२॥

न देशयोगतोऽप्यस्मात् ॥१३॥

---

१. स्वाभाविकायापायोपदेशो (पाठा०)

२. कालस्य व्यापित्वं नित्यत्वं चाश्रित्य बन्धस्य कालसंबन्धनिमित्तकता खण्ड्यते। अन्यैः पुनः आत्मनो व्यापित्वं नित्यत्वं चाश्रित्य सा खण्ड्यते। सांख्यनये कालो नित्यो भवितुं नार्हति, तस्य व्यक्तपदार्थत्वात्। स न व्यापी, व्यक्तपदार्थभूतत्वादेव। कालस्य नित्यत्वं व्यापित्वं च अभ्युपगतमन्यैस्तैर्थिकैः। व्यापित्वस्य नित्यत्वस्य च यल्लक्षणं सांख्यशास्त्रे दृश्यते, तेन कालो व्यापी नित्यश्च न भवितुमर्हति।

देशयोगतोऽपि न बन्धः । कुतः, अस्मात् पूर्वसूत्रोक्तान्मुक्तामुक्तसर्वपुरुषसम्बन्धात् । मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥१३॥

नावस्थातो देहधर्मत्वात् तस्याः ॥१४॥

संघातविशेषरूपताख्या देहरूपा याऽवस्था न तन्निमित्ततोऽपि पुरुषस्य बन्धः । कुतः, तस्या अवस्थाया देहधर्मत्वात्, अचेतनधर्मत्वादित्यर्थः । अन्यधर्मस्य साक्षादन्यबन्धकत्वेऽतिप्रसङ्गात्, मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥१४॥

ननु पुरुषस्याप्यवस्थायां किं बाधकं तत्राह—

असंगोऽयं पुरुष इति[1] ॥१५॥

इतिशब्दो हेत्वर्थे । पुरुषस्यासङ्गत्वादवस्थाया देहमात्रधर्मत्वमिति पूर्वसूत्रेणान्वयः । पुरुषस्यावस्थारूपविकारस्वीकारे विकारहेतुसंयोगाख्यः सङ्गः प्रसज्येतेति भावः । असङ्गत्वे च श्रुतिः—स यदत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति, असङ्गो ह्ययं पुरुष इति ( बृहदा० ४।३।१६ ) । सङ्गश्च संयोगमात्रं न भवति । काल-देशसम्बन्धस्य पूर्वमुक्तत्वात् । श्रुतिस्मृतिषु पद्मपत्रस्थजलेनेव[2] पद्मपत्रस्यासङ्गतायाः पुरुषासङ्गतायां दृष्टान्तताश्रवणाच्च ॥१५॥

न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च[3] ॥१६॥

न हि विहितनिषिद्धकर्मणापि पुरुषस्य बन्धः, कर्मणामनात्मधर्मत्वात् । अन्यधर्मेण साक्षादन्यस्य बन्धे च मुक्तस्यापि बन्धापत्तेः । ननु स्वस्वोपाधिकर्मणा बन्धाङ्गीकारे नायं दोष इत्याशयेन हेत्वन्तरमाह—अतिप्रसक्तेश्चेति । प्रलयादावपि दुःखयोगरूपबन्धापत्तेश्चेत्यर्थः । सहकार्यन्तरविलम्बतो विलम्बकल्पनं च प्रागेव निराकृतम्, 'न कालयोग' (१।१२) इत्यादिसूत्र इति ॥१६॥

नन्वेवं दुःखयोगरूपोऽपि बन्धः कर्मसामानाधिकरण्यानुरोधेन चित्तस्यैवास्तु, दुःखस्य चित्तधर्मतायाः सिद्धत्वात्, किमर्थं पुरुषस्यापि कल्प्यते बन्ध इत्याशङ्कायामाह—

---

१. सूत्रमिदं कस्माच्चिद् ग्रन्थाद् उद्धृतमिति इतिपदेन सूच्यते; सूत्रकारः स्वमतदार्ढ्याय आगममूलकत्वसूचनाय वा वचनमिदमुद्धरति, अन्यथा स 'पुरुषस्यासङ्गत्वादि'त्येव ब्रूयात् ।

२. महाभारते पद्मपत्रजलदृष्टान्तो दत्तः (शान्ति ३१५।१६) । आसुरिं प्रति कपिलप्रोक्तमिदं वाक्यमत्र द्रष्टव्यम्—'व्यतिरिक्तं नाम आसुरे पुरुषः पञ्चविंशकः क्षेत्रज्ञो यथा पुष्करपर्णस्थो बिन्दुर्न श्लेषमुपगच्छति अन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञः' (कुम्भकोण संस्करणीय—शान्तिपर्वगतं सांख्यप्रकरणम्) । पुनरप्यत्रैव उक्तम्—'अन्यदुदकमन्यत् पुष्करपर्णम्, तथा अन्यत् क्षेत्रं क्षेत्रज्ञोऽन्यः पुरुषः पञ्चविंशकः' इति । सांख्यमतप्रतिपादनावसरे अन्यैर्वादिभिरपि दृष्टान्तोऽयं दीयते; द्र० 'पुरुषस्तु पुष्करपलाशवन् निर्लेपः' ( सिद्धान्तमुक्तावली, आत्मपरीक्षाप्रक० ) ।

३. मुक्तात्मनामपि बन्धः स्यादित्येव अतिप्रसक्तिः वृत्तिमते ।

विचित्रभोगानुपपत्तिरन्यधर्मत्वे[1] ॥१७॥

दुःखयोगरूपबन्धस्य चित्तमात्रधर्मत्वे विचित्रभोगानुपपत्तिः। पुरुषस्य हि दुःखयोगं विनापि दुःखसाक्षात्काराख्यभोगस्वीकारे सर्वपुरुषदुःखादीनां सर्वपुरुषभोग्यता स्यान्नियामकाभावात्। ततश्चायं दुःखभोक्ताऽयं च सुखभोक्तेत्यादिरूपभोगवैचित्र्यं नोपपद्यतेत्यर्थः।

अतो भोगवैचित्र्योपपत्तये भोगनियामकतया दुःखादियोगरूपो बन्धः पुरुषेऽपि स्वीकार्यः। स च पुरुषे दुःखयोगः।प्रतिबिम्बरूप एवेति प्रागेवोक्तम्। ( द्र० १।१ भाष्य )। प्रतिबिम्बश्च स्वोपाधिवृत्तेरेव भवतीति न सर्वपुंसां सर्वदुःखभोग इति भावः। चित्तवृत्तिरोधे पुरुषस्यानादिः स्वस्वामिभावः[2] सम्बन्धो हेतुरिति योगभाष्याद् (१।४) अयं सिद्धान्तः सिद्धः। चित्ते च पुरुषस्य स्वत्वं स्वभुक्तवृत्तिवासनावत्त्वमिति। यत् तु 'चित्तस्यैव बन्धमोक्षौ न पुरुषस्येति' श्रुतिस्मृतिषु गीयते, तद् बिम्बरूपदुःखयोगरूपं पारमार्थिकं बन्धमादाय बोध्यम् ॥१७॥

साक्षात् प्रकृतिनिमित्तकत्वमपि बन्धस्यापाकरोति—

प्रकृतिनिबन्धनाच्चेत् तस्या अपि पारतन्त्र्यम् ॥१८॥

ननु प्रकृतिनिमित्ताद् बन्धो भवत्विति चेन्न, यतस्तस्या अपि बन्धकत्वे संयोगपारतन्त्र्यमुत्तरत्र ( १।१९ ) वक्ष्यमाणमस्ति। संयोगविशेषं विनापि बन्धकत्वे प्रलयादावपि दुःखबन्धप्रसङ्गादित्यर्थः। प्रकृतिनिबन्धना चेदिति[3] पाठे तु प्रकृतिनिबन्धना चेद् बन्धनेत्यर्थः ॥१८॥

अतो यत्परतन्त्रा प्रकृतिर्बन्धकारणं सम्भवेत् तस्मादेव संयोगविशेषादौपाधिको बन्धोऽग्निसंयोगाज्जलौष्ण्यवदिति स्वसिद्धान्तमनेनैव प्रसङ्गेनान्तराल एवावधारयति—

न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते[4] ॥१९॥

तस्मात् तद्योगादृते प्रकृतिसंयोगं विना न पुरुषस्य तद्योगो बन्धसम्पर्कोऽस्ति, अपि तु स एव बन्धः। बन्धस्यौपाधिकत्वलाभाय नञ् द्वयेन वक्रोक्तिः। यदि हि बन्धः प्रकृतिसंयोगजन्यः स्यात् पाकजरूपवत्, तदा तद्वदेव तद्वियोगेऽप्यनुवर्त्तेत। न च द्वितीयक्षणादेर्दुःखनाशकत्वं कल्प्यम्, कारणनाशस्य कार्यनाशकतायाः क्लृप्तत्वेन तेनैवोपपत्तावस्माभिस्तदकल्पनात्। वृत्तिर्हि दुःखादेरुपादानम् अतो दीपशिखावत् क्षणभङ्गुराया वृत्तेराशुविनाशित्वेनैव तद्धर्माणां दुःखेच्छादीनां विनाशः सम्भवतीति। अतः प्रकृतिवियोगे बन्धाभावादौपाधिक एव बन्धो न तु स्वाभाविको नैमित्तिको वेति। तथा संयोगनिवृत्तिरेव साक्षाद्धानोपाय इत्यपि वक्रोक्तिफलम्। तथा च स्मृतिः—

---

१. 'अन्यस्य धर्मेण अन्यत्र कार्योत्पत्तिः खलु अन्यदीयधर्मत्वमिति वृत्तिमतम्।

२. भाष्ये स्व-स्वामिभावेति पदं नास्ति।

३. अयमनिरुद्धसंमतः पाठः

४. उद्धृतमिदं शिवार्कमणिदीपिकायाम् ( ब्र० सू० २।२।९)।

यथा ज्वलद्गृहाश्लिष्टगृहं विच्छिद्य रक्ष्यते।
तथा सदोषप्रकृतिविच्छिन्नोऽयं न शोचति ॥ इति।

वैशेषिकाणामिव पारमार्थिको दुःखयोग इति भ्रमो मा भूदित्येतदर्थं नित्येत्यादि। यथा स्वभावशुद्धस्य स्फटिकस्य रागयोगो न जपायोगं विना घटते, तथैव नित्यशुद्धादिस्वभावस्य दुःखसंयोगो न घटते स्वतो दुःखाद्यसम्भवादित्यर्थः[1]। तदुक्तं सौरे—

तथा हि केवलो रक्तः स्फटिको लक्ष्यते जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः ॥[2] ( तुल० सौर ११।३१ )

इति। नित्यत्वं कालानवच्छिन्नत्वम्। शुद्धादिस्वभावत्वं च नित्यशुद्धत्वादिकम्। तत्र नित्यशुद्धत्वं सदा पापपुण्यशून्यत्वम्। नित्यबुद्धत्वमलुप्तचिद्रूपत्वम्। नित्यमुक्तत्वं सदा पारमार्थिकदुःखायुक्तत्वम्। प्रतिबिम्बरूपदुःखयोगस्त्वपारमार्थिको बन्ध इति भावः। आत्मनो नित्यशुद्धत्वादौ च श्रुतिः—अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरित्यादिः ( नृसिंहता० २।६।६ )।

नन्वस्य मननशास्त्रत्वादत्रार्थे युक्तिरपि वक्तव्येति चेत् सत्यम्; 'न तद्योगस्तद्योगादृते' इत्यनेन नित्यशुद्धत्वादौ युक्तिरप्युक्तैव। तथाहि—आत्मनि नित्यत्वविभुत्वादिकं तावन्न्यायादिदर्शनेष्वेव साधितम्। तत्र नित्यस्य विभोरात्मनो यद्योगं विना दुःखाद्यखिलविकारैर्योगो न भवति तस्यैवान्तःकरणस्य सर्वसम्मतकारणस्य तदुपादानकारणत्वमेव युक्तं लाघवात्, सर्वविकारेष्वन्तःकरणस्यैवान्वयव्यतिरेकाभ्यां च; न पुनरन्तर्विकारेषु मनसो निमित्तत्वमात्मनश्चोपादानत्वं युक्तं कारणद्वयकल्पने गौरवात्।

नन्वहं सुखी दुःखी करोमीत्याद्यनुभवादात्मनो विकारोपादानत्वसिद्धिरिति चेन्न, अहं गौर इत्यादिभ्रमशतान्तःपातित्वेनाप्रामाण्यशङ्कास्कन्दिततयोक्तप्रत्यक्षाणामुक्ततर्कानुगृहीतानुमानापेक्षया दुर्बलत्वात्। आत्मनश्चिन्मात्रत्वे तु युक्तिरग्रे[3] वक्ष्यते इति दिक्।

अस्य सूत्रस्यैवार्थः कारिकयाऽप्युक्तः—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ ( २० ) इति।

कर्तृत्वमत्र दुःखित्वादिसकलविकारोपलक्षणम्। तथा योगसूत्रेऽप्यस्य सूत्रस्यै-

---

१. द्र० 'न स्वत आत्मनः संसारित्वम् अलक्तकाद्युपाधिसंयोगजनितरक्तस्फटिकादिबुद्धिवद् भ्रान्तमेव न परमार्थतः' (बृहदा० २।१।२० ब्रा० शांकरभाष्य)।

२. कूर्मे पठ्यते—यथा संलक्ष्यते रक्तः केवलं स्फाटिको जनैः ॥ रत्तिकाद्युपधानेन तद्वत् परमपुरुषः। ( २।२।२८–२९ )। सौरवचनं तु इदम्—अयमात्मा विभुः शुद्धः स्फटिकोपलसंनिभः। उपाधिरहितः शान्तः स्वयंज्योतिः प्रकाशकः ॥ (११।३१)।

३. १।१४५—१४८, १।१६१, ५।६६ इत्यादीनि सूत्राणि द्रष्टव्यानि।

वार्थ उक्तः—द्रष्टृदृश्ययोः संयोगो हेयहेतुरिति ( २।१७ )। गीतायां च—'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्' ( १३।२१ )। इति। प्रकृतिस्थः प्रकृतौ संयुक्तः। तथा च श्रुतावपि—'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति ( कठ० १।३।४ )।

न च कालादिवदेव प्रकृतिसंयोगोऽपि मुक्तामुक्तपुरुषसाधारणतया कथं बन्धहेतुरिति वाच्यम्; जन्मापरनाम्नः स्वस्वबुद्धिभावापन्नप्रकृतिसंयोगविशेषस्यैवात्र संयोगशब्दार्थत्वात्; योगभाष्ये व्यासैस्तथा व्याख्यातत्वात्,[1] बुद्धिवृत्त्युपाधिनैव पुरुषे दुःखयोगाच्च। वैशेषिकादिवदेव भोगजनकतावच्छेदकत्वेनान्तःकरणसंयोगे वैजात्यं चास्माभिरपीष्टम्; अतो न सुषुप्त्यादौ बन्धप्रसङ्गः। स्वत्वं[2] च स्वभुक्तवृत्तिवासनावत्त्वम्; यत्किञ्चिद्वृत्तितत्संस्कारप्रवाहोऽप्यनादिरतः स्वस्वामिभावव्यवस्थितिः।

कश्चित्[3] तु 'प्रकृतिपुरुषयोः संयोगाङ्गीकारे पुरुषस्य परिणामसङ्गौ प्रसज्येयाताम्। अतोऽत्राविवेक एव योगशब्दार्थो न तु संयोगः' इति, तन्न; तद्योगोऽप्यविवेकादिति ( १।५५ ) सूत्रेणाविवेकस्य योगहेतुताया एव सूत्रकारेण वक्ष्यमाणत्वात्। स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगस्तस्य हेतुरविद्येति सूत्राभ्यां ( २।२३-२४ ) पातञ्जलेऽपि संयोगहेतुत्वस्यैवाविद्याया उक्तत्वाच्च।

किञ्च विवेकाभावरूपस्याविवेकस्य संयोगत्वे प्रलयादावपि प्रकृतिपुरुषसंयोगसत्त्वेन भोगाद्यापत्तिः; मिथ्याज्ञानरूपस्याविवेकस्य च संयोगत्वे आत्माश्रयः, पुम्प्रकृतिसंयोगस्याज्ञानादिहेतुत्वादिति। तस्मादविवेकातिरिक्तो योगो वक्तव्यः। स च संयोग एव, अन्यस्याप्रामाणिकत्वात्। संयोगश्च न परिणामः सामान्यगुणातिरिक्तधर्मोत्पत्त्यैव परिणामित्वव्यवहारात्। अन्यथा कूटस्थस्य सर्वगतत्वरूपविभुत्वानुपपत्तेः; नापि संयोगमात्रं सङ्गः, परिणामहेतुसंयोगस्यैव सङ्गशब्दार्थताया वक्तव्यत्वादिति।

ननु तथापि कथं नित्ययोः प्रकृतिपुरुषयोर्महदादिहेतुरनित्यः संयोगो घटत इति चेन्न। प्रकृतेः परिच्छिन्नापरिच्छिन्नत्रिविधगुणसमुदायरूपतया परिच्छिन्नगुणावच्छेदेन पुरुषसंयोगोत्पत्तेः सम्भवात्, श्रुतिस्मृतिसिद्धत्वात् प्रकृतिसंयोगक्षोभयोरिति। एतच्च योगवार्त्तिके ( २।१८—२० ) प्रपञ्चितमस्माभिः।

अपरस्तु भोग्य-भोक्तृयोग्यतैवानयोः संयोग इत्याह[4]। तदपि न। योग्यताया नित्यत्वे ज्ञाननिवर्त्यत्वानुपपत्तेः। अनित्यत्वे किमपराद्धं संयोगेन परिणामित्वापत्तेः

---

१. द्र० भा० २।२३—२४

२. स्वस्वभुक्तवृत्तिवासनावद् यत्किञ्चित् ( पाठा० )।

३. यद्यपि अनिरुद्धेन 'तद्योगो बन्धयोगः, तद्योगात् प्रकृतियोगात्' इत्युक्तम्' तथापि तेन 'अविवेकं विना नात्मनः कदापि बन्धः किन्तु अविवेकाद् बन्ध इत्यभिप्रायः' इति सिद्धान्तितम्। अतः कश्चिदिति पदेन अनिरुद्धो लक्ष्यते इति निश्चप्रचम्।

४. तुलनाय तत्त्ववैशारदीवाक्यम् — दृगदर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोर्योग्यतालक्षणं सम्बन्धं दर्शयितुं शक्तिग्रहणम् (२।६)।

समानत्वात्। भोग्यभोक्तृयोग्यतायाः संयोगरूपत्वस्य सूत्रादिष्वनुक्तत्वेनाप्रामाणिकत्वाच्चेति। तस्मात् संयोगविशेष एवात्र बन्धाख्यहेयहेतुतया सूत्रकाराभिप्रेत इति स्वयं बन्धहेतु रवधारितः ॥१९॥

इदानीं नास्तिकाभिप्रेता अपि बन्धहेतवो निराकर्त्तव्याः। तत्र—'षडभिज्ञो दशबलोऽद्वयवादी विनायकः' (अमर १।१।१४) इत्यनुशासनादिसिद्धाः क्षणिकविज्ञानात्मवादिनो बौद्धप्रभेदा एवमाहुः—नास्ति प्रकृत्यादि बाह्यं वस्त्वन्यत्, येन तत्संयोगादौपाधिकस्तात्त्विको वा बन्धः स्यात्। किन्तु क्षणिकविज्ञानसन्तानमात्रमद्वितीयं तत्त्वमन्यत् सर्वं सांवृतिकं[1] संवृतिश्चाविद्या मिथ्याज्ञानाख्या तत एव बन्ध इति। तथा च तैरुक्तम्—

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासनिदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते[2] ॥ इति।

---

१. द्र० 'संव्रियते आव्रियते यथाभूतपरिज्ञानं स्वभावावरणाद् आवृतप्रकाशनाच्च अनयेति संवृतिः। अविद्या मोहो विपर्यास इति पर्यायाः। अविद्या हि असत्पदार्थस्वरूपारोपिका स्वभावदर्शनावरणात्मिका च सती संवृतिरुपपद्यते' (बोधिचर्यावितारपञ्जिका, पृ० ३५२)। मध्यमककारिकाव्याख्याने चन्द्रकीर्तिरप्याह-'समन्ताद् वरणं संवृतिः। अज्ञानं हि समन्तात् सर्वपदार्थतत्त्वाच्छादनात् संवृतिरुच्यते' इति (२४८)।

२. श्लोकोऽयं प्रमाणवार्त्तिकस्य (२।३५४)। (प्रमेयविनिश्चयेऽपि श्लोकोऽयमास्ते इति केचन आहुः)। क्वचिदयं श्लोकः 'अभिन्नोऽपि हि बुद्ध्यात्मा...' इत्येवंरूपेण पठ्यते (द्र० तत्त्ववैशारदी ४।२३)। औत्पत्तिकसूत्रीयशून्यवादव्याख्याप्रसंगे काशिकाटीकायाम् अयं श्लोक उद्धृतः; 'अविभक्तोऽपि...' इत्येवंरूपोऽस्य पाठोऽत्र। स्फोटसिद्धेः गोपालिकाटीकायाम् (पृ० १६०) उद्धृतोऽयम् (अविभागोऽपि बुद्ध्यात्मा ···)। सर्वदर्शनसंग्रहे (पृ० ३२) ऽप्ययमुद्धृतः (अविभागोऽपि) उद्धृतेयं बृहदारण्यकवार्त्तिकटीकायाम् (४।३।४७६)। न्यायविनिश्चयविवरणे (पृ० २५२) ऽपि अयमुद्धृतः (अविभागोऽपि...इति पाठः)। उपदेशसाहस्र्यामपि मूलकारिकारूपेणायं पठ्यते (१८।१४२, अभिन्नोऽपि हि बुद्ध्यात्मा..)। अत्र टीका—बुद्ध्यात्मा बुद्धिस्वभावः अभिन्नोऽपि एकोऽपि..संवित्तिशब्दो ग्रहणशब्दपर्यायः; प्रकरणपञ्चिकायामपि (पृ० ३१७ अविभागोऽपीतिरूपेण); तथैव व्योमवत्यामपि (पृ० ५२५)। कीर्तिकृतोऽयं श्लोक इति गिरिः (द्र० बृहदारण्यकवार्त्तिकटीका); कीर्तिः = धर्मकीर्तिः।

चित्रमिदं यन् मुद्रिते प्रमाणवार्त्तिके (२।३५४) 'बुद्ध्यात्मविपर्यासितदर्शनैः' इति पठ्यते, मनोरथनन्दिना अयमेव पाठो व्याख्यातश्च (बुद्ध्यात्मद्वयवासनया विपर्यासितम्...)। अत्र 'अविभाग-नामा पदार्थो ग्राह्यग्राहकसंवित्तिभेदवानिव बुद्ध्यात्मविपर्यासितदर्शनैः लक्ष्यते' इत्येवान्वयः। स जाने कथं वाचस्पतिप्रभृतिभिः 'अविभागो बुद्ध्यात्मा लक्ष्यते' इत्येवंरूपेण श्लोको पठितः व्याख्यातश्च।

तन्मतमादौ निराक्रियते—

[1]ना विद्यातोऽप्यवस्तुना[2] बन्धायोगात् ॥ २० ॥

अपिशब्दः पूर्वोक्तकालाद्यपेक्षया । अविद्यातोऽपि न साक्षाद् बन्धयोगः । [3]अद्वैतवादिनां तेषामविद्याया अप्यवस्तुत्वेन तया बन्धानौचित्यात् । न हि स्वाप्नरज्ज्वा बन्धनं दृष्टमित्यर्थः । बन्धोऽप्यवास्तव इति चेन्न; स्वयं सूत्रकारेण निराकरिष्यमाणत्वात् । विज्ञानाद्वैतश्रवणोत्तरं बन्धनिवृत्तये योगाभ्यासाभ्युपगमविरोधाच्च । बन्धमिथ्यात्वश्रवणेन बन्धनिवृत्त्याख्यफलसिद्धत्वनिश्चयात् तदर्थं बह्वायाससाध्ययोगाङ्गानुष्ठानासम्भवादिति ॥ २० ॥

वस्तुत्वे सिद्धान्तहानिः ॥ २१ ॥

यदि चाविद्याया वस्तुत्वं स्वीक्रियते तदा स्वाभ्युपगतस्याविद्यानृतत्वस्य हानिरित्यर्थः ॥ २१ ॥

विजातीयद्वैतापत्तिश्च[4] ॥ २२ ॥

किञ्चाविद्याया वस्तुत्वे क्षणिकविज्ञानसन्तानाद्विजातीयं द्वैतं प्रसज्येत; तच्च भवतामनिष्टमित्यर्थः । सन्तानान्तःपातिव्यक्तीनामानन्त्यात् सजातीयद्वैतमिष्यत एवेत्याशयेन विजातीयेति विशेषणम् । नन्वविद्याया अपि ज्ञानविशेषत्वाद् अविद्यायापि कथं विजातीयद्वैतमिति चेन्न; ज्ञानरूपाविद्याया बन्धोत्तरकालीनतया वासनारूपाविद्याया एव तैर्बन्धहेतुत्वाभ्युपगमात् । वासना तु ज्ञानाद् विजातीयैवेति ।

---

१. सूत्रमिदं व्या. ता. निर्णये उद्धृतम् ( पृ० १० ) ।

क्षणिकविज्ञानवादिमतमत्र खण्डितमिति भिक्षुः । वेदान्तिसंमताविद्यावादोऽत्र खण्डित इति अनिरुद्धः । बन्धस्य अविद्यात्मकत्वंमद्वैतवादिनये—'न च बन्धस्य अविद्यात्मकत्वम् असूत्रसूचितमिति वाच्यम् · · · ( वि० प्र० संग्रह, पृ० ७ ); "अस्माभिस्तु श्रुतार्थापत्या बन्धस्याविद्यात्मकत्वं कल्प्यते" ( पृ० ८ ); 'बन्धस्याज्ञानात्मकत्वम्' ( पृ० ८ )

२. तुल० 'अविद्याया अविद्यात्वमिदमेव तु लक्षणम् । यत् प्रमाणासहिष्णुत्वमन्यथा वस्तु सा भवेत्' ॥ ( बृहदारण्यकवार्त्तिक ); 'अनिर्वचनीयवादिनाम् अस्माकमध्यासस्य अवस्तुत्व - युक्तिविरोधयोः · · ·' ( वि० प्र० संग्रह, पृ० १२-१३ ) ।

३. वस्तुतस्तु बौद्धा न अद्वैतवादिनः, प्रत्युत अद्वयवादिनः । बुद्धोऽपि अद्वयवाद्येव आसीत् । यथोक्तं दिव्यावदाने 'बुद्धानां भगवतां महाकारुणिकानामद्वयवादिनाम्' ( पृ० ९५ ) । परस्परविरुद्धं दर्शनं द्वयम् । विरुद्धकोटिद्वयवर्जनमस्मिन् अद्वयवादे इति विज्ञायते । अतो मध्यमा प्रतिपदेव 'अद्वयवाद' इति गम्यते । यथोक्तं मध्यमकवृत्तौ—'भावाभावदर्शनद्वयप्रसंगो यावत् तावत् संसार इत्यवेत्य मुमुक्षुभिस्तद्दर्शनद्वयनिरासेन सद्भिर्मध्यमा प्रतिपद् भावनीया' इति ( पृ. २७५ ) ।

४. अविद्या स्वीक्रियते चेत् तर्हि सैव द्वितीयः पदार्थ इति अद्वैतमतमसिद्धमेव—इति मतं जयन्तभट्टेन प्रतिपादितम् । द्र० "योऽपि दोषश्चोद्यते कैश्चित्—अविद्यया किलात्मनः सद्वितीयत्वाद् अद्वैतानुपपत्तिः" (शारीरक ४।१।३) ।

एभिश्च सूत्रैर्ब्रह्ममीमांसासिद्धान्तो निराक्रियत इति भ्रमो न कर्त्तव्यः, ब्रह्ममीमांसायां केनापि सूत्रेणाविद्यामात्रतो बन्धस्यानुक्तत्वात् । अविभागो वचनाद् (४।२।१६) इत्यादि सूत्रैर्ब्रह्ममीमांसाया अभिप्रेतस्याविभागलक्षणाद्वैतस्याविद्यादिवास्तवत्वेऽप्यविरोधाच्च ।

यत् तु वेदान्तिब्रुवाणामाधुनिकस्य मायावादस्यात्र लिङ्गं दृश्यते तत् तेषामपि विज्ञानवाद्येकदेशितया युक्तमेव—

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
( ६।२६३।७० ख–७१ क )

इत्यादिपद्मपुराणस्थशिववाक्यपरम्पराभ्यः; न तु तद्वेदान्तमतम्, 'वेदार्थंवन्महाशास्त्रं मायावादमवैदिकम्' ( ६।२६३।७४ ) इति तद्वाक्यशेषादिति । मायावादिनोऽत्र च न साक्षात् प्रतिवादित्वं विजातीयेति विशेषणवैयर्थ्यात् । मायावादे सजातीयाद्वैतस्याप्यनभ्युपगमादिति । तस्मादत्र प्रकरणे विज्ञानवादिनां बन्धहेतुव्यवस्थैव साक्षान्निराक्रियते ।

अनयैव च रीत्या नवीनानामपि प्रच्छन्नबौद्धानां मायावादिनामविद्यामात्रस्य तुच्छस्य बन्धहेतुत्वं निराकृतं वेदितव्यम् । अस्मन्मते त्वविद्यायाः कूटस्थनित्यतारूपपारमार्थत्वाभावेऽपि घटादिवद्वास्तवत्वेन वक्ष्यमाणसंयोगद्वारा बन्धहेतुत्वे यथोक्तबाधानवकाशः । एवं योगमते ब्रह्ममीमांसामतेऽपीति ॥२२॥

शङ्कते—

[1]विरुद्धोभयरूपा चेत्[2] ॥२३॥

ननु विरुद्धं यदुभयं सदसच्च सदसद्विलक्षणं वा तद्रूपैवाविद्या वक्तव्या, अतो न तया पारमार्थिकाद्वैतभङ्ग इति चेदित्यर्थः । स्वयं तु सदसत्त्वं प्रपञ्चस्य यद्वक्ष्यति ( ५।५६ ) तत्र सत्त्वासत्त्वे व्यक्ताव्यक्तत्वरूपत्वाद्विरुद्धे एव न भवत इति सूचयितुं विरुद्धपदोपादानम् ॥२३॥

परिहरति—

न[3] तादृक्पदार्थाप्रतीतेः[4] ॥२४॥

---

१. उद्धृतमिदं व्यासतात्पर्यनिर्णये (पृ० १०)

२. तुल० 'अव्यक्त हि सा माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वात्' (शारीरक१।४।३) 'प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् । गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः' ॥ इति चित्सुखाचार्यः । 'अनिर्वचनीयवादिनामस्माकमध्यासस्य अवस्तुत्व युक्तिविरोधयोः ······( वि० प्र० सं० पृ० १२-१३ ।

३. व्या० ता० निर्णये उद्धृतम् ( पृ० १० ) ।

४. द्र० अविद्या नाम काचिद् अनिर्वचनीयभावरूपा नास्तीति वादिनः पक्षम्···( वि० प्र० संग्रह, पृ० ४५ ) ।

सुगमम् । अपि चाविद्यायाः साक्षादेव दुःखयोगाख्यबन्धहेतुत्वे ज्ञानेनाविद्याक्षयानन्तरं प्रारब्धभोगानुपपत्तिः, बन्धपर्यायस्य दुःखभोगस्य कारणनाशादिति । अस्मदादिमते तु नायं दोषः, संयोगद्वारैवाविद्याकर्मादीनां बन्धहेतुत्वात् । जन्माख्यश्च संयोगः प्रारब्धसमाप्तिं विना न नश्यतीति ॥२४॥

पुनः शङ्कते—

**न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ॥२५॥**

ननु वैशेषिकाद्यास्तिकवन्न वयं षट्षोडशादिनियतपदार्थवादिनः । अतोऽप्रतीतोऽपि सदसदात्मकः सदसद्विलक्षणो वा पदार्थोऽविद्येत्यभ्युपेयमिति भावः ॥२५॥

परिहरति—

**अनियतत्वेऽपि नायौक्तिकस्य संग्रहो[1]ऽन्यथा बालोन्मत्तादिसमत्वम् ॥२६॥**

पदार्थनियमो मास्तु, तथापि भावाभावविरोधेन युक्तिविरुद्धस्य सदसदात्मकपदार्थस्य संग्रहो भवद्वचनमात्राच्छिष्याणां न सम्भवति । अन्यथा बालकाद्युक्तस्याप्ययौक्तिकस्य संग्रहः स्यादित्यर्थः । श्रुत्यादिकं चास्मिन्नर्थे स्फुटं नास्ति; युक्तिविरोधेन च सन्दिग्धश्रुतेरर्थान्तरसिद्धिरिति भावः ।

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी ॥[2]

( द्र० सौर ११।२९ )

इत्यादिसौरादिवाक्यानां त्वयमर्थः । 'विकारजननीं मायामष्टरूपामजां ध्रुवाम्' ( चूलिकोप० ३ ) इत्यादिश्रुतिसिद्धा मायाख्या प्रकृतिः परमार्थसती न भवति-पूर्वपूर्वविकाररूपैः प्रतिक्षणमपायात्, नापि परमार्थासती भवत्यर्थक्रियाकारित्वेन शशशृङ्गविलक्षणत्वात्, नापि तदुभयात्मिका विरोधाच्च; अतः सदसद्भ्यामनिर्वाच्या सत्येवेत्यसत्येवेति च निर्धार्योपदेष्टुमशक्या । किन्तु मिथ्याभूता लयाख्यव्यावहारिकासत्त्ववती परिणामिनित्यतारूपव्यावहारिकसत्त्ववती चेति । एतच्चाग्रे प्रपञ्चयिष्याम इति दिक् ( द्र० १।६१, ६५ ) । एतत्प्रकरणोपन्यस्तानि च सर्वाण्येव दूषणान्याधुनिकेऽपि मायावादे योजनीयानि ॥ २६ ॥

अपरे नास्तिका आहुः—क्षणिका बाह्यविषयाः सन्ति, तेषां वासनया जीवस्य बन्ध इति; तदपि दूषयति—

---

१. यौक्तिकस्यैव संग्रह उचित इत्यस्मिन्नर्थे 'निश्चितं युक्तियुक्तं च यत् तद् भवति नेतरद्' इति माण्डूक्यकारिका ( ४।२३ ) द्रष्टव्या । द्र० 'अपि पौरुषमादेयं शास्त्रं चेद् युक्तिबोधकम् । अन्यत् त्वार्ष मपि त्याज्यं भाव्यं न्यायैकसेविना ॥ युक्तियुक्तमुपादेयं वचनं बालकादपि । अन्यत् तृणमिव त्याज्यमप्युक्तं पद्मयोनिना' ॥ (योगवासिष्ठ २।१८।२–३) ।

२. अत्रार्थे बृहन्नारदीयवचनम् ( ३१।७० ) 'नासद्रूपा न सद्रूपा माया वै नोभयात्मिका । अनिर्वाच्याश्रिता ज्ञेया भेदबुद्धिप्रदायिनी' ॥ इति ॥

[1]नानादिविषयोपरागनिमित्तकोऽप्यस्य ॥ २७ ॥

अस्यात्मनः प्रवाहरूपेणानादिर्या विषयवासना तन्निमित्तकोऽपि बन्धो न सम्भवतीत्यर्थः। निमित्ततोऽप्यस्येति पाठस्तु समीचीनः ॥२७॥

अत्र हेतुमाह—

न बाह्याभ्यन्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि देशव्यवधानात् स्रुघ्नस्थपाटलिपुत्रस्थयोरिव[2] ॥२८॥

तन्मते परिछिन्नो देहान्तःस्थ एवात्मा तस्याभ्यन्तरस्य न बाह्यविषयेण सहोपरज्योपरञ्जकभावोऽपि सम्भवति। कुतः, स्रुघ्नस्थ-पाटलिपुत्रस्थयोरिव देशव्यवधानादित्यर्थः। संयोगे सत्येव हि वासनाख्य उपरागो दृष्टः—यथा मञ्जिष्ठावस्त्रयोः, यथा वा पुष्पस्फटिकयोरिति। अपिशब्देन स्वमतेऽपि संयोगाभावादिः समुच्चीयते। स्रुघ्नपाटलिपुत्रौ विप्रकृष्टौ देशविशेषौ ॥२८॥

ननु भवतामिन्द्रियाणामिवास्मकमात्मनो विषयदेशे गमनाद्विषयसंयोगेन विषयोपरागो वक्तव्यस्तत्राह—

[3]द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥२९॥

द्वयोर्बद्धमुक्तात्मनोरेकस्मिन् विषयदेशे लब्धविषयोपरागान्न बन्धमोक्षव्यवस्था स्यात्। मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥२९॥

अत्र शङ्कते—

अदृष्टवशाच्चेत् ॥३०॥

नन्वेकदेशसम्बन्धेन विषयसंयोगसाम्येऽप्यदृष्टवशादेवोपरागलाभ इति चेदित्यर्थः ॥३०॥

परिहरति—

न द्वयोरेककालायोगादुपकार्योपकारकभावः ॥३१॥

क्षणिकत्वाभ्युपगमाद् द्वयोः कर्तृभोक्त्रोरेककालासत्त्वेन नोपकार्योपकारकभावः। न कर्तृनिष्ठादृष्टेन भोक्तृनिष्ठो विषयोपरागः सम्भवतीत्यर्थः ॥३१॥

शङ्कते—

[4]पुत्रकर्मवदिति चेत् ॥३२॥

ननु यथा पितृनिष्ठेन पुत्रकर्मणा पुत्रस्योपकारो भवति, तद्वद्व्यधिकरणेनैवादृष्टेन विषयोपरागः स्यादित्यर्थः ॥३२॥

---

१. बौद्धपक्षं निरस्यति इत्याहानिरुद्धः। निमित्ततोऽप्यस्य (पाठा०)। निमित्तोऽप्यस्य (पाठा०)।

२. एकस्मिन् वाक्ये स्रुघ्न-पाटलिपुत्रयोः कथनं बहुत्र दृश्यते—'नहि देवदत्तः श्रुघ्ने सन्निधीयमानः तदहरेव पाटलिपुत्रे सन्निधीयते ..... श्रुघ्न-पाटलिपुत्रनिवासिनः' (शारीरक २।१।१८)

३. द्वयोः = एकात्मवादि—नानात्मवादिनोरित्यर्थो वृत्तिमते।

४. पुत्रकर्म = पुत्रेष्ट्यादिकर्मेति वृत्तिः; पितृनिष्ठं पुत्रकर्म (= पितृकृतं पुत्र-विषयकं कर्म जातकर्मादि) इति भाष्यम्।

दृष्टान्तासिद्धया परिहरति—

**नास्ति हि तत्र स्थिर एकात्मा यो गर्भाधानादिना संस्क्रियेत ॥३३॥**

पुत्रेष्टयापि तन्मते पुत्रस्योपकारो न घटते हि यस्मात् तत्र तन्मते गर्भाधानमारभ्य जन्मपर्यन्तं स्थायी एक आत्मा नास्ति यो जन्मोत्तरकालीनकर्माधिकारार्थं पुत्रेष्टया संस्क्रियेतेति दृष्टान्तस्याप्यसिद्धिरित्यर्थः। अस्मन्मते तु स्थैर्याभ्युपगमात् तत्राप्यदृष्टसामानाधिकरण्यमेवास्ति, पुत्रेष्टया जनितेन पुत्रोपाधिनिष्ठादृष्टेनैव पुत्रोपाधिद्वारा पुत्रस्योपकारादित्यस्मन्मतेऽपि न दृष्टान्तासिद्धिरिति भावः ॥३३॥

ननु बन्धस्यापि क्षणिकत्वादनियतकारणकोऽभावकारणको[1] वा बन्धोऽस्त्वित्याशयेनापरो नास्तिकः प्रत्यवतिष्ठते—

**[2]स्थिरकार्यासिद्धेः क्षणिकत्वम् ॥३३॥**

बन्धस्येति शेषः। भावस्तूक्त एव। अत्रायं प्रयोगः—विवादास्पदं बन्धादि क्षणिकं सत्त्वाद् दीपशिखादिवदिति। न च घटादौ व्यभिचारस्तस्यापि पक्षसमत्वात्। एतदेवोक्तं स्थिरकार्यासिद्धेरिति ॥३४॥

समाधत्ते—

**न प्रत्यभिज्ञाबाधात्[3] ॥३५॥**

न कस्यापि क्षणिकत्वमिति शेषः। यदेवाहमद्राक्षं तदेवाहं स्पृशामीत्यादिप्रत्यभिज्ञया स्थैर्यसिद्धेः क्षणिकत्वस्य बाधात् — प्रतिपक्षानुमानेनेत्यर्थः। तद्यथा—बन्धादि स्थिरं सत्त्वाद्घटादिवदिति अस्मन्मत एवानुकूलतर्कसत्त्वेन न सत्प्रतिपक्षता। प्रदीपादौ च सूक्ष्मानेकक्षणानाकलनेन क्षणिकत्वभ्रम एव परेषामिति ॥३५॥

**श्रुतिन्यायविरोधाच्च ॥३६॥**

'सदेव सोम्येदमग्र आसीत्,' (छान्दोग्य० ६।२।१), तम एवेदमग्र आसीत् (मैत्रायणी आर० ५।२) इत्यादिश्रुतिभिः, कथमसतः सज्जायेतेत्यादि (छान्दोग्य० ६।२।२) - श्रौतादियुक्तिभिश्च कार्यकारणात्मकाखिलप्रपञ्चे क्षणिकत्वानुमानस्य विरोधान्न क्षणिकत्वं कस्यापीत्यर्थः ॥३६॥

---

१. अभावोऽपि कारणं भवतीति मतमस्ति; द्र० शारीरक २।२।२६-२७; ४।१।१४। अनियतवादो नाम यदृच्छावादः, स च आर्हतैरास्थित इति नीलकण्ठः (शान्ति. २३१।५३); वेदान्तकल्पतरु २।१।३३ अपि द्र०।

२. स्थिराद् वस्तुनः कार्यस्यासिद्धेः भावानां क्षणिकत्वम्, अतो बन्धस्यापि क्षणिकत्वम् इत्यर्थः। द्र० वि० प्र० संग्रह, पृ० ४१ (स्थायिनः कस्यचिदभ्युपगन्तव्यत्वात् ......)। स्थिरकार्यविषये द्र० न्यायसू० ३।२।२।

३. प्रत्यभिज्ञाबाधा-विषये द्र० न्यायवा ३।२।१४; योगवा० ३।१४; न्यायमञ्जरी भाग २, पृ० २० तः; पञ्चदशी ६७४ टीका; श्लोकवा० आत्म० १३६; प्रकरणपञ्चिका, प्रक० १० न्यायकुसुमाञ्जलि १।१६-१७।

दृष्टान्तासिद्धेश्च[1] ॥३७॥

प्रदीपशिखादिदृष्टान्ते क्षणिकत्वासिद्धेश्च न क्षणिकत्वानुमानमित्यर्थः ॥३७॥

किञ्च क्षणिकतावादिनां मृद्घटादिस्थलेऽपि कार्यकारणभावः प्रवृत्तिनिवृत्त्यन्यथानुपपत्तिसिद्धो नोपपद्येतेत्याह—

युगपज्जायमानयोर्न कार्यकारणभावः ॥३८॥

किं युगपज्जायमानयोः कार्यकारणभावः, किं वा क्रमिकयोः। तत्र नाद्यो विनिगमकाभावादिभ्य इति भावः ॥३८॥

नान्त्य इत्याह—

पूर्वापाये उत्तरायोगात्[2] ॥३९॥

पूर्वस्य कारणस्यापायकाले उत्तरस्य कार्यस्योत्पत्त्यनौचित्यादपि न क्षणिकवादे सम्भवति कार्यकारणभावः। उपादानकारणानुगततयैव कार्यानुभवादित्यर्थः ॥३९॥

उपादानकारणमधिकृत्यैव दूषणान्तरमाह—

तद्भावे तदयोगादुभयव्यभिचारादपि न ॥४०॥

यतः पूर्वस्य भावकाल उत्तरस्यासम्बन्धोऽत उभयव्यभिचारादन्वयव्यतिरेकव्यभिचारादपि न कार्यकारणभाव इत्यर्थः। तथाहि—यदोपादेयोत्पत्तिस्तदोपादानम्, यदा चोपादानाभावस्तदोपादेयोत्पत्त्यभाव इत्यन्वयव्यतिरेकेणैवोपादानोपादेययोः कार्यकारणभावग्रहो भवति। तत्र क्षणिकत्वेन क्रमिकयोस्तयोर्विरुद्धकालतयान्वयव्यतिरेकव्यभिचाराभ्यां न कार्यकारणभावसिद्धिरिति ॥४०॥

ननु निमित्तकारणस्येवोपादानकारणस्यापि पूर्वभावमात्रेणैव कारणताऽस्तु, तत्राह—

पूर्वभावमात्रे न नियमः ॥४१॥

पूर्वभावमात्राभ्युपगमे चेदमेवोपादानमिति नियमो न स्यान्निमित्तकारणानामपि पूर्वभावाविशेषात्। उपादाननिमित्तयोर्विभागः सर्वलोकसिद्ध इत्यर्थः ॥४१॥

अपरे तु नास्तिका आहुः—विज्ञानातिरिक्तवस्त्वभावेन बन्धोऽपि विज्ञानमात्रं स्वप्नपदार्थवत्, अतोऽत्यन्तमिथ्यात्वेन न तत्र कारणमस्तीति। तन्मतमपाकरोति—

न विज्ञानमात्रं बाह्यप्रतीतेः[3] ॥४२॥

---

१. क्षणिकवादसाधने न कश्चिदपि दृष्टान्तो विद्यते इत्याह उद्द्योतकरः (न्यायवा० ३।२।१७)। दृष्टान्ते दोषं प्रदर्श्य क्षणिकवादः खण्डितो नैयायिकैः; (न्यायसू० ३।२।१७)—'तस्मात् निरधिष्ठानोऽयं दृष्टान्तः' इति (भाष्य)।

२. कारणविनाशे सति कार्यस्योत्पत्तिः इति मतं न्यायसूत्रे प्रतिपादितम् (नानुपमृद्य प्रादुर्भावात् ४।१।१४)। मतस्यास्य खण्डनमपि बहुभिर्युक्तिभि नैयायिकैः कृतम्; द्र० न्यायसू० ४।१।१५–१८ व्याख्यानानि।

३. विज्ञानवादस्य खण्डनं बाह्यार्थसत्तास्थापनं च बहुत्र दृश्यते—शारीरकभाष्य २।२।२८; बृहदा० ४।३।७ शांकरभाष्य (ननु नास्त्येव बाह्योऽर्थः ···); व्यासभाष्य ४।१४—१५; ४।२३; न्यायमञ्जरी भाग २, पृ० १५—३६। 'अन्तर्ज्ञेयं ज्ञानं बाह्यवत् प्रकाशते' इति विज्ञानवादिदृष्टिः बाह्यप्रतीतिसापेक्षैवेति विज्ञानवादखण्डकानां मतम् (द्र० न्यायसू० ४।२।३७ व्याख्यानानि)। द्र० श्लोकवा० निरालम्बनवाद १४—२०३।

न विज्ञानमात्रं तत्त्वं बाह्यार्थानामपि विज्ञानवत् प्रतीतिसिद्धत्वादित्यर्थः ॥४२॥

ननु लाघवतर्केण स्वप्नादिदृष्टान्तैर्दृश्यत्वहेतुकमिथ्यात्वानुमानेन बाह्यवस्त्वनुभवो बाधनीयः; अत्रभवतां श्रुतिस्मृती अपि स्तः—चिद्धीदं सर्वम् (नृसिंहतापनी २।७), 'तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः' ( कूर्म० २।२।३९ ) इत्यादौ इत्यतो दूषणान्तरमाह—

## तदभावे तदभावाच्छून्यं तर्हि[1] ॥४३॥

तर्हि बाह्याभावे शून्यमेव प्रसज्येत न तु विज्ञानमपि। कुतः, तदभावे तदभावाद् बाह्याभावे विज्ञानस्याप्यभावप्रसङ्गाद्विज्ञानप्रतीतेरपि बाह्यप्रतीतिवदवस्तुविषयत्वानुमानसम्भवात्, विज्ञानप्रामाण्यस्य क्वाप्यसिद्धत्वाच्च; तथा विज्ञाने प्रमाणानामपि बाह्यतयापलापाच्चेत्यर्थः।

नन्वनुभवे कस्यापि विवादाभावेन नास्ति तत्र प्रमाणापेक्षेति चेन्न, शून्यवादिनामेव तत्र विवादात्। अथासतापि प्रमाणेन वस्तु सिध्यति विषयाबाधस्यैव प्रामाण्यप्रयोजकत्वान्न तु प्रमाणपारमार्थिकत्वस्येति चेन्न। एवं सत्यसत्प्रमाणस्य सर्वत्र सुलभत्वेन क्वाप्यर्थे प्रमाणान्वेषणस्यायोगात्।

अथासन्मध्येऽपि व्यावहारिकसत्त्वरूपो विशेषः प्रमाणादिष्वेष्टव्य इति चेत् ? आयातं मार्गेण। किं पुनरिदं व्यावहारिकत्वम्। यदि परिणामित्वं तदास्माभिरपीदृशमेव सत्त्वं ग्राह्यग्राहकप्रमाणानामिष्टं शुक्तिरजतादितुल्यत्वस्यैव प्रपञ्चेऽस्माभिः प्रतिषेधात्। यदि पुनः प्रतीयमानतामात्रं तदापि तादृशैरेव प्रमाणैर्बाह्यार्थस्यापि सिद्धिप्रसङ्गात्। लाघवतर्कानुगृहीतेन यथाकथञ्चिदनुमानेनैव बाधस्तु विज्ञानेऽपि समान इति।

---

१. विज्ञानाभावः शून्यवादिदृष्ट्योक्तः। मतमिदं शंकरेण स्फुटमुपवर्णितम्—'तस्यापि [ विज्ञानस्यापि ] शान्तिं केचिदिच्छन्ति। तदपि विज्ञानं संवृतं ग्राह्यग्राहकांशविनिर्मुक्तं शून्यमेव घटादिबाह्यवस्तुवद् इत्यपरे माध्यमिका आचक्षते'। (बृहदा० ४।३।७)। इदं शून्यवादिमतमिति गिरिः। सर्वं नास्ति (न ज्ञेयं नापि ज्ञानम्) इति मतमानुपलम्भिकानामासीदिति न्यायसूत्रतो विज्ञायते ( ४।२।३६ )। शून्यवादिनो माध्यमिका भ्रमज्ञानं दृष्टान्तमाश्रित्य बाह्यपदार्थसत्तां प्रतिपादयन्ति, ततश्च तेनैव दृष्टान्तेन ज्ञानस्यापि असत्तां दर्शयन्ति इति ( द्र० न्यायसू०, ४।२।३७ व्याख्यानानि )। 'योगाचारा हि ज्ञानमात्रमर्थशून्यं पारमार्थिकं मन्यन्ते। माध्यमिकास्तु ज्ञेयाभावाद् अकर्मकज्ञानानुत्पत्तेः ज्ञानस्याप्यभावमिच्छन्ति' ( श्लोकवा० निरालम्बन १९ काशिका )।

एतेनाधुनिकानां वेदान्तिब्रुवाणामपि मतं विज्ञानवादतुल्ययोगक्षेमतया निरस्तम्। विज्ञानमात्रसत्यताप्रतिपादकश्रुतिस्मृतयस्तु कूटस्थत्वरूपां पारमार्थिसत्तामेव बाह्यानां प्रतिषेधन्ति, नतु परिणामित्वरूपां व्यावहारिकसत्तामपि।

यत् तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसम्भूतां तत्स्तु नृप तच्च किम्॥
वस्तु[1] राजेति यल्लोके यत् तु राजभटादिकम्।
तथान्यच्च नृपेत्थं तु न सत् सङ्कल्पनामयम्॥ (२।१३।९४-९५)

इति विष्णुपुराणादिभ्यः परिणामित्वस्यैवासत्तात्वावगमादिति। सङ्कल्पनामयम्—ईश्वरादिसङ्कल्परचितम्। एतेन—'विज्ञानमयमेवैतदशेषमवगच्छत' (विष्णु० ३।१८।१६) इत्यादिना विष्णुपुराणे मायामोहरूपिणा विष्णुणाऽसुरेभ्योऽपि तत्त्वमेवोपदिष्टम्। ते त्वनधिकारादिदोषैर्विपरीतार्थग्रहणेन विज्ञानवादिनो नास्तिका बभूवुरित्यवगन्तव्यम्। तदेतत् सर्वं ब्रह्ममीमांसाभाष्ये (१।१-२-४) मायावादनिरसनप्रसङ्गतो विस्तारितमस्माभिः॥४३॥

नन्वेवं भवतु शून्यमेव तत्त्वं तदा सुतरामेव बन्धकारणान्वेषणं न युक्तं तुच्छत्वादिति नास्तिकशिरोमणिः प्रत्यवतिष्ठते—

**शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य[2]॥ ४४॥**

शून्यमेव तत्त्वं यतः सर्वोऽपि भावो विनश्यति, यश्च विनाशी स मिथ्या स्वप्नवत्। अतः सर्ववस्तूनामाद्यन्तयोरभावमात्रत्वान्मध्ये क्षणिकसत्त्वं सांवृतिकं न पारमार्थिकं बन्धादि। ततः किं केन बध्येतेत्याशयः। भावानां विनाशित्वे हेतुर्वस्तुधर्मत्वाद्विनाशस्येति। विनाशस्य वस्तुस्वभावत्वात्। स्वभावं तु विहाय न पदार्थस्तिष्ठतीत्यर्थः॥४४॥

---

१. क्वचित्पुराणे वस्तुस्थले वसु इतिपठ्यते, सोऽपपाठः।

२. यतो दि शून्यमेव तत्त्वंमतः 'शून्यमाध्यात्मिकं पश्य पश्य शून्यं बहिर्गतम्, इति उद्घुष्यते बौद्धैः शून्यवादिभिः। सर्वेषामेव प्रतीतिसिद्धानां भावानां परमार्थतः निःस्वरूपे सत्त्वाभावे पर्यवसानं भवतीति शून्यवादिनां माध्यमिकानां मतम्। तैः 'अस्तित्वनास्तित्वतदुभयानुभयपक्षविवर्जितं शून्यत्वमेव तत्त्वम्' इति प्रतिपाद्यते। एतेषां दृष्ट्या धर्माणां या धर्मता सा स्वभावः, स च शून्यतैव। माध्यमकवृत्तौ—'स चैष भावानामनुत्पादात्मकः स्वभावोऽकिञ्चित्त्वेन अभावमात्रत्वाद् अस्वभाव एवेति कृत्वा नास्ति भावस्वभाव इति विज्ञेयम्' इति। सर्वशून्यतावादस्य (असद्वादापरनामधेयस्य) खण्डनं न्यायभाष्ये विस्तरेण कृतम् (४।१।३७-४०)। आपेक्षिकत्वाद् न कश्चिदपि पदार्थो वास्तव इत्येव सर्वशून्यतावादिनां युक्तिः। एते वादिनः पदार्थस्य पदार्थस्वभावस्य च वास्तवत्वं नाङ्गीकुर्वन्ति। द्र० स्वाराज्यसिद्धि १।२६; पञ्चदशीटीका २।२६।

परिहरति—

अपवादमात्रमबुद्धानाम्[1] ॥४५॥

भावत्वाद्विनाशित्वमिति मूढानामपवादमात्रं मिथ्यावाद एव, नाशकारणाभावेन निरवयवद्रव्याणां नाशासम्भवात्, कार्याणामपि विनाशासिद्धेश्च। घटो जीर्ण इति प्रत्ययवदेव घटोऽतीत इत्यादिप्रतीत्या घटादेरतीताख्याया अवस्थाया एव सिद्धेः। अव्यक्ततायाश्च कार्यातीतताभ्युपगमेऽस्मन्मतप्रवेश एव। किञ्च विनाशस्य प्रपञ्चतत्त्वताभ्युपगमेऽपि विनाश एव बन्धस्य पुरुषार्थः सम्भवत्येवेति।

कश्चित् तु व्याचष्टे—शून्यं तत्त्वमित्यज्ञानां कुत्सितवादमात्रं न पुनरत्र युक्तिरस्ति, प्रमाणसत्त्वासत्त्वविकल्पासहत्वात्। शून्ये प्रमाणाङ्गीकारे तेनैव शून्यताक्षतिः। अनङ्गीकारे प्रमाणाभावान्न शून्यसिद्धिः। स्वतःसिद्धौ च चिद्रूपताद्यापत्तिरित्यर्थ इति।

न च—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता।
(माण्डूक्यकारिका २।३२)

सर्वशून्यं निरालम्बं स्वरूपं यत्र चिन्त्यते॥
अभावयोगः स प्रोक्तो येनात्मानं प्रपश्यति।[2]
(शिवपु० ७।२।७३।६–७)

इति श्रुतिस्मृतिभ्यामपि शून्यं तत्त्वतया प्रतिपाद्यत इति वाच्यम्। पुरुषाणां निरोधाद्यभावस्यैव तादृशीषु श्रुतिषु तत्त्वतयोक्तत्वात्। पूर्वोत्तरवाक्याभ्यां पुरुषस्यैव प्रकरणात्। विलीनविश्वचिदाकाशस्यैवैतादृशस्मृतिषु तत्त्वतया प्रतिपादनाच्च।

त्रैलोक्यं गगनाकारं नभस्तुल्यं वपुः स्वकम्।
वियद्गामि मनो ध्यायन् योगी ब्रह्मैव गीयते॥

---

१. तुल० शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते (बृहदा० ४।३।७ शां० भा०); उदयनेन बौद्धाधिकारे शून्यवाद इत्थं खण्डितः—'अस्तु तर्हि शून्यतैव परं निर्वाण मिति चेत् न, साहि यद्यसिद्धा कथं तदवशेषं विश्वम्, परतश्चेत् सिद्धा, परोप्युपगन्तगव्यः, स च परो यदि संवृतिरेव विश्वशून्यतयोर्न कश्चिद् विशेषः कथं तदप्यवशिष्येत, असंवृतिश्चेत् परः परत एव सिद्धा अनवस्था। स्वयंसिद्धा चेत् कथं शून्यत्वमपि साधयेत्। स्वतः सिद्धा चेदायातोऽसि मार्गेण' इति।

२. लिङ्गपु० २।५५।१४ इत्यत्र 'सर्वं शून्यं निराभासं स्वरूपं यत्र चिन्त्यते अभावयोगः संप्रोक्तः चित्तनिर्वाणकारकः'॥ 'शून्यं सर्वनिराभासं स्वरूपं यत्र चिन्त्यते। अभावयोगः स प्रोक्तो येनात्मानं प्रपश्यति'॥ (कूर्म० २।११।६)। द्र० ब्रह्मबिन्दु उपनिषद् १०।

इत्यादिवाक्यान्तरैरेकवाक्यत्वात्। आकाशशून्ययोः पर्यायत्वादिति। मनो महत्तत्त्वाद्यखिलान्तःकरणं वियद्गामि चिदाकाशे लीनम् ॥४५॥

दूषणान्तरमाह—

उभयपक्षसमानक्षेमत्वादयमपि ॥४६॥

क्षणिकबाह्यविज्ञानोभयपक्षयोः समानक्षेमत्वात् तुल्यनिरसनहेतुकत्वादयमपि पक्षो विनश्यतीत्यनुषङ्गः। क्षणिकपक्षनिरासहेतुर्हि प्रत्यभिज्ञानुपपत्त्यादिः शून्यवादेऽपि समानः। तथा विज्ञानपक्षनिरासहेतुर्बाह्यप्रतीत्यादिरप्यत्र समान इत्यर्थः ॥४६॥

यदपि—दुःखनिवृत्तिरूपतया तत्साधनतया वा शून्यतैवास्तु पुरुषार्थ इति तैर्मन्यते तदपि दुर्घटमित्याह—

अपुरुषार्थत्वमुभयथा ॥४७॥

उभयथा स्वतः परतश्च शून्यतायाः पुरुषार्थत्वं न सम्भवति। स्वनिष्ठत्वेनैव सुखादीनां पुरुषार्थत्वात्। स्थिरस्य च पुरुषस्यानभ्युपगमादित्यर्थः[1] ॥४७॥

तदेवं बन्धकारणविषये नास्तिकमतानि दूषितानि। इदानीं पूर्वनिरस्तावशिष्टान्यास्तिकसम्भाव्यान्यप्यन्यानि बन्धकारणानि निरस्यन्ते—

न गतिविशेषात् ॥४८॥

प्रकरणाद् बन्धो लभ्यते। न गतिविशेषात् शरीरप्रवेशादिरूपादपि पुरुषस्य बन्ध इत्यर्थः ॥४८॥

अत्र हेतुमाह—

निष्क्रियस्य तदसम्भवात् ॥४९॥

निष्क्रियस्य विभोः पुरुषस्य गत्यसम्भवादित्यर्थः ॥४९॥

ननु श्रुतिस्मृत्योरिहलोकपरलोकगमनागमनश्रवणात् पुरुषस्य परिच्छिन्नत्वमेवास्तु। तथा च श्रुतिरपि 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा (श्वेताश्व० ३।३) इत्यादिरित्याशङ्कामपाकरोति—

मूर्तत्वाद् घटादिवत् समानधर्मापत्तावपसिद्धान्तः ॥५०॥

यदि च घटादिवत् पुमान् मूर्तः परिछिन्नः स्वीक्रियते, तदा सावयवत्व-विनाशित्वादिना घटादिसमानधर्मापत्तावपसिद्धान्तः स्यादित्यर्थः ॥५०॥

गतिश्रुतिमुपपादयति—

गतिश्रुतिरप्युपाधियोगादाकाशवत् ॥५१॥

या च गतिश्रुतिरपि पुरुषेऽस्ति सा विभुत्वश्रुतिस्मृतियुक्त्यनुरोधेनाकाशस्येवोपाधियोगादेव मन्तव्येत्यर्थः। तत्र च प्रमाणम्—

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः॥ (ब्रह्मबिन्दु १३)

---

१. तुल० 'एवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैनाशिकैः सर्वमेवाकुलीकृतम् ...... सत्त्वस्य पुनः सत्त्वमेवापह्नुवते' इति (व्यासभा० ४।२१)

बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः (श्वेताश्व० ५।८)

इत्यादिश्रुतिः। नित्यः सर्वगतः स्थाणुरित्यादिका च स्मृतिः (गीता २।२४)। मध्यमपरिमाणत्वे सावयवत्वापत्त्या विनाशित्वमणुत्वे च देहव्यापिज्ञानाद्यनुपपत्तिरित्यादिश्च युक्तिरिति। अत एव—

प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम्।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा॥ (शान्ति० ३०३।४५)

इत्यादिस्मृतिभिः प्रकृतेरेव विशिष्य क्रियारूपा गतिः स्मर्यत इति ॥५१॥

न कर्मणाऽप्यतद्धर्मत्वात्[१] ॥५२॥

कर्मणाऽदृष्टेनापि साक्षान्न पुरुषस्य बन्धः। कुतः, पुरुषधर्मत्वाभावादित्यर्थः। पूर्वं विहितनिषिद्धव्यापाररूपेण कर्मणा बन्धो निराकृतः (द्र० १।१६ सू०); अत्र तु तज्जन्यादृष्टेनेत्यार्थिकविभागादपौनरुक्त्यम् ॥५२॥

नन्वन्यधर्मेणाप्यन्यस्य बन्धः स्यात्, तत्राह—

[२]अतिप्रसक्तिरन्यधर्मत्वे[३] ॥५३॥

बन्धतत्कारणयोर्भिन्नधर्मत्वेऽतिप्रसक्तिः, मुक्तस्यापि बन्धापत्तिरित्यर्थः ॥५३॥

किं बहुना, स्वभावादिकर्मान्तैरन्येन वा केनापि पुरुषस्य बन्धोत्पत्तिर्न घटते श्रुतिविरोधादिति साधारणं बाधकमाह—

निर्गुणादिश्रुतिविरोधश्चेति[४] ॥५४॥

पुरुषबन्धस्यानौपाधिकत्वे 'साक्षी चेता केवलो निर्गुणश्च' (श्वेताश्व० ६।११) इत्यादिश्रुतिविरोधश्चेत्यर्थः। इतिशब्दो बन्धहेतुपरीक्षासमाप्तौ ॥५४॥

तदेवं 'न स्वभावतो बद्धस्ये'त्यादिना (१।७) प्रघट्टकेनेतरप्रतिषेधतः प्रकृतिपुरुषसंयोग एव साक्षाद्बन्धहेतुरवधारितः (१।१९ सू०)। तत्रेयमाशङ्का—ननु प्रकृतिसंयोगोऽपि पुरुषे स्वाभाविकत्वादिविकल्पग्रस्तः कथं न भवति? संयोगस्य स्वाभाविकत्वकालादिनिमित्तकत्वे हि मुक्तस्यापि बन्धापत्तिरित्यादिदोषा यथायोग्यं समाना एवेति। तामिमामाशङ्कां परिहरति—

[५]तद्योगोऽप्यविवेकान्न समानत्वम्[६] ॥५५॥

---

१. तुल० 'अदृष्टवशाच्चेत्' इति सूत्रम् (१।३०)।

२. वृत्तौ ५३ सूत्रं ५४ सूत्ररूपेण, ५४ सूत्रं ५३ सूत्ररूपेण पठितम्।

३. बन्धतत्कारणयोरन्यधर्मत्वे इति भाष्यमतम्। कथमुभौ इमौ पदार्थौ लब्धाविति चिन्तनीयम्। कर्मणोऽन्यधर्मत्वे इति वृत्तिमतम्। १।५२ सूत्रीयकर्मपदं विभक्तिविपरिणामबलेनात्र संयोजितमिति प्रतीयते।

४. इतिकरणस्य समाप्तिद्योतनरूपं फलं भवतीति सत्यम्, परन्तु ग्रन्थेऽस्मिन् प्रत्यधिकरणं समाप्तौ नेतिपदप्रयोगो दृश्यते इत्यतो मतमिदं दृढमिति न प्रतिभाति। किमत्र चकारः समुच्चयार्थकः?

५. 'न समानत्वम्' इति वाक्यस्य यत् तात्पर्यं दर्शितं भाष्ये, तत् सूत्राक्षरतः प्रकरणतो वा कथं लब्धमिति न विज्ञायते।

६. अनेन सूत्रेणेदं सिद्धान्तितं यद् अनाद्यविवेकनिमित्तकः पुम्प्रकृतिसंयोगः, ततश्च दुःखयोगरूपो बन्धः।

पूर्वोक्तद्योगोऽपि पुरुषस्याविवेकाद्वक्ष्यमाणादविवेकादेव हि निमित्तात् संयोगो भवति। अतो नोक्तदोषाणां समानत्वमस्तीत्यर्थः। स चाविवेको मुक्तेषु नास्तीति न तेषां पुनः संयोगो भवतीति।

नन्वविवेकोऽत्र न प्रकृतिपुरुषाभेदसाक्षात्कारः, संयोगात्प्रागसत्त्वात्। किन्तु विवेकप्रागभावोऽविवेकाख्यज्ञानवासना वा; तदुभयमपि न पुरुषधर्मः, किन्तु बुद्धिधर्म एवेत्यन्यधर्मेणान्यत्र संयोगेऽतिप्रसङ्गदोषसाम्यमस्त्येवेति चेत्? मैवम्, विषयतासम्बन्धेनाविवेकस्य पुरुषधर्मत्वात्[1]। तथा च प्रकृति र्बुद्धिरूपा सती यस्मै स्वामिपुरुषाय तन्न विविच्य न दर्शितवती स्ववृत्तिदर्शनार्थं तदीयबुद्धिरूपेण तत्रैव पुरुषे संयुज्यत इति व्यवस्थयाऽतिप्रसङ्गाभावात्। तदुक्तं कारिकया—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥ (२१) इति।

स्वामिने पुरुषाय प्रधानेन दर्शयितुं तयोः कैवल्यार्थं चेत्यर्थः। अविवेकस्य-वृत्तिरूपत्वं तु 'वाङ्मात्रं न तु तत्त्वं चित्तस्थिते' रित्यागामिसूत्रे (१।५८) वक्ष्यामः। अविवेकश्च संयोगद्वारैव बन्धकारणं प्रलये बन्धादर्शनात्[2]। अविवेकनाशेऽपि जीवन्मुक्तस्य दुःखभोगदर्शनाच्च। अतः साक्षादेवाविवेको बन्धकारणं प्राङ्नोक्तः।

ननु भोग्यभोक्तृभावनियामकत्वेन क्लृप्तस्यानादिस्वस्वामिभावस्य कर्मादीनां वा संयोगहेतुत्वमस्तु, किमित्यविवेकोऽपि संयोगहेतुरिष्यत इति चेन्न—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥

इति गीतायां (१३।२१) सङ्गाख्याभिमानस्य संयोगहेतुत्वस्मरणात्। वक्ष्यमाणादिवाक्ययुक्तिभ्यश्च, अन्यथा ज्ञानतो मोक्षस्य श्रुतिस्मृतिसिद्धस्यानुपपत्तेश्च। अथैवमपि स्वोपाधिकर्मादिकमपि संयोगकारणं भवति तद्विहाय कथमविवेक एव केवलं तत्र कारणमुच्यत इति? उच्यते—अविवेकापेक्षया कर्मादीनामपि परम्परयैव पुरुषसम्बन्धः। तथाविवेक एव पुरुषेण साक्षाच्छेत्तुं शक्यते, कर्मादिकं त्वविवेकाख्यहेतूच्छेदद्वारैवेत्याशयेनाविवेक एव मुख्यतः संयोगहेतुतयोक्त इति।

अयं चाविवेकोऽगृहीतासंसर्गकमुभयज्ञानमविद्यास्थलाभिषिक्त एव विवक्षितः। बन्धो विपर्ययाद् (३।२४), विपर्ययभेदाः पञ्च (३।३७) इत्यागामिसूत्रद्वयात्, तस्य हेतुरविद्येति योगसूत्रे (२।२४) ऽप्यविद्याया एव पञ्चपर्वाया बुद्धिपुरुषसंयोगहेतुतावचनाच्चान्यथाख्यात्यनभ्युपगममात्र एव योगतोऽत्र विशेषौचित्यात् (द्र० योगवा० १।८); न पुनरविवेकोऽत्राभावमात्रं विवेकप्रागभावो वा, मुक्तस्यापि बन्धापत्तेः। जीवन्मुक्तस्यापि भाविविवेकव्यक्तिप्रागभावेन धर्माधर्मोत्पत्तिद्वारा पुनर्बन्धप्रसङ्गाच्च। तथागामिसूत्रस्थ (१।५६); ध्वान्तदृष्टान्तानुपपत्तेश्च अभावस्य ध्वान्तवदावरकत्वासम्भवात्। तथा वृद्धिह्रासावप्यविवेकस्य श्रूयमाणौ नोपपद्येयातामिति।

---

१. तुलः 'इष्यते तु आत्मन एव भ्रान्तत्वादिकं तच्चारनाश्रितज्ञानोपादानत्वपक्षे सिध्यति नान्यथा' (वि० प्र० संग्रह, १, पृ० १५)।

२. तत्त्वतस्तु बन्धोऽस्त्येवेति वयम्।

अस्मन्मते च वासनारूपस्यैवाविवेकस्य संयोगाख्यजन्महेतुतया तमोवदावरकत्व-वृद्धिह्रासादिकमञ्जसैवोपपद्यते। तस्य हेतुरविद्येति पातञ्जलसूत्रे (२।२४) च भाष्यकारैरविद्याशब्देनाऽविद्याबीजं व्याख्यातम्[१]। ज्ञानस्य संयोगोत्तरकालीनत्वेन संयोगाजनकत्वादिति। अपि च 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते' इत्यादिवाक्येषु (गीता १३।२१) अभिमानाख्य-संयोगस्यैव प्रकृतिस्थताख्यसंयोगहेतुतावगम्यते। अत एव चा[२]विद्या नाभावोऽपि तु विद्याविरोधिज्ञानान्तरमिति योगभाष्ये[३] व्यासदेवैः प्रयत्नेनावधृतम्। तस्मादविवेकाविद्ययोस्तुल्ययोगक्षेमतयाऽविवेकस्यापि ज्ञानविशेषत्वमिति सिद्धम्।

अयं चाविवेकस्त्रिधा संयोगाख्यजन्महेतुः साक्षाद, धर्माधर्मोत्पत्तिद्वारा, रागादि-दृष्टद्वारा च भवति। सति मूले तद्विपाक इति योगसूत्रात् (२।१३), 'कर्तास्मीति निबद्ध्यते' इति स्मृतेः, 'वीतरागजन्मादर्शनादिति' (३।१।२५) न्यायसूत्राच्च। तदुक्तं मोक्षधर्मेऽपि—

ज्ञानेन्द्रियाणीन्द्रियार्थान् नोपसर्पन्त्यतर्षुलम्।
हीनश्च करणैर्देही न देहं पुनरर्हति॥ (शान्ति २१३।२१)
तस्मात् तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः। (शान्ति २१३।१०)

इति। रागस्त्वविवेककार्य इति योगसूत्राभ्यामप्येततत् प्रत्येतव्यं समानतन्त्र-न्यायात्। तच्च सूत्रद्वयं—'क्लेशमूलः कर्माशयः', 'सति मूले तद्विपाको जात्यायु-र्भोगाः' इति (२।१२—१३)। क्लेशश्चाविद्यादिपञ्चकमिति (द्र० यो० सू० २।३)।

अविवेकस्य बन्धजनने द्वारजातं च पिण्डीकृत्येश्वरगीतायामुक्तम्—

अनात्मन्यात्मविज्ञानं तस्माद् दुःखं तथेतरत्॥
रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः।
[४]कार्यो ह्यस्य भवेद् दोषः पुण्यापुण्यमिति श्रुतिः॥
तद्दोषादेव सर्वेषां सर्वदेहसमुद्भवः। (कूर्म २।२।२०ख—२२क)।

---

१. दृश्यतां भाष्यवाक्यम्—विपर्ययज्ञानवासनेत्यर्थः। विपर्ययज्ञानवासनावासिता च न कार्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति, साधिकारा पुनरावर्तते इति। आहात्र भिक्षुः—सर्गान्तरीयाविद्याया स्वचित्तेन सह निरुद्धायाः प्रधाने या वासना स्थिता तया वासितं प्रधानं तत्पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृजतीत्यनादित्वान्न दोषः (योगवा०)।

२. तुल० 'स्वाश्रया स्वविषया स्वानुभवगम्या स्वभास्या अवस्तु अनिवच्या अविद्या अस्ति' (अज्ञानबोधिनी १४); अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं" (वेदान्तसार ३४)।

३. व्यासभाष्ये उक्तम्—तस्याः [अविद्यायाः] च अमित्रागोष्पदवद् वस्तुसतत्त्वं विज्ञेयम्, यथा नामित्रो मित्राभावो न मित्रमात्रं किन्तु तद्विरुद्धः सपत्नः तथाऽगोष्पदं न गोष्पदाभावो, न गोष्पदमात्रं किन्तु देश एव ताभ्यामन्यद् वस्त्वन्तरम् एवमविद्या न प्रमाणं न प्रमाणाभावः किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति।

४. 'कर्माण्यस्य महान् दोषः' 'इति स्थितिः' 'तद्वशादेव' इति मुद्रितपुराणपाठः।

इति । एतदेव न्याये सूचितम्—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ( १।१।२ ) इति । तदेवं संयोगाख्यजन्मद्वारा बन्धाख्यहेयस्य मूलकारणमविवेक इति हेयहेतुः प्रतिपादितः ॥५५॥

इतः परं क्रमप्राप्तं हानोपायव्यूहमतिविस्तरेणाशास्त्रसमाप्ति प्रतिपादयति । अन्तराऽन्तरा चोक्तव्यूहानपि विस्तारयिष्यति—

नियतकारणात् तदुच्छित्तिर्ध्वान्तवत् ॥५६॥

शुक्तिरजतादिस्थले लोकसिद्धं यन्नियतकारणं विवेकसाक्षात्कारस्तस्मात् तस्याविवेकस्योच्छित्तिर्भवति[1] ध्वान्तवत् । यथा ध्वान्तमालोकादेव नियतकारणान्नश्यति नोपायान्तरेण, तथैवाविवेकोऽपि विवेकादेव नश्यति न तु कर्मादिभ्यः साक्षादित्यर्थः । तदेतदुक्तं योगसूत्रेण—विवेकख्यातिरविप्लवा हानोपाय इति (२।२६) । कर्मादीनि तु ज्ञानस्यैव साधनानि' 'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्याते' रिति ( २।२८ ) योगसूत्रेण सत्त्वशुद्धिद्वारा ज्ञान एव योगाङ्गान्तर्गतसर्वकर्मणां साधनत्वावधारणादिति ।

प्राचीनास्तु वेदान्तिनो मोक्षेऽपि कर्मणो ज्ञानाङ्गत्वमाहुः[2]—विद्यां चाविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ( ईशोप०१२ ) इति श्रुतौ, सहकारित्वेन चेति (३।४।३३) वेदान्तसूत्रे चाङ्गाङ्गिभावेन ज्ञानकर्मणोः सहकारित्वावधारणात्[3] ।

ज्ञानिनाज्ञानिना वापि यावद्देहस्य धारणम् ।
तावद्वर्णाश्रमप्रोक्तं कर्तव्यं कर्म मुक्तये ॥

इत्यादिस्मृतेश्च ।

उपमर्दं चेति वेदान्तसूत्रेण ( ३।४।१६ ) तु कर्मत्यागो योगारूढस्य न्यायप्राप्तोऽनूद्यत एव, ज्ञानस्य मुख्यतो मोक्षहेतुत्वं व्यवस्थापयितुम् । यदि हि विक्षेपकत्वात् कर्म ज्ञानाभ्यासस्य विरोधि भवेत् तदा 'गुणलोपे न गुणिनः' इति न्यायेन

---

१. द्र० 'तस्मादज्ञानविच्छित्यै ज्ञानं संपादयेत् सुधीः' ( स० वे० सि० सा० संग्रह ५१९ ); 'न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीति ' ( शारीरक २।३।३० ); 'अतो विवेकज्ञानमेव साक्षादविद्यानिवृत्त्या मोक्षहेतु' रिति भिक्षु राह सांख्यसारे ( परि० २० ) ।

२. प्राचीनवेदान्तिनो ब्रह्मदत्तस्य मतम् इत्थं वर्णयाम्बभूव नैष्कर्म्यसिद्धिटीकायां ( १।६७ ) ज्ञानोत्तमः—'वाक्यजन्यज्ञानोत्तरकालीनभावनोत्कर्षाद् भावनाजन्यसाक्षात्कार-लक्षण-ज्ञानान्तरेणैव अज्ञानस्य निवृत्तेः ज्ञानाभ्यासदशायां ज्ञानस्य कर्मणा समुच्चयोपपत्तिः' इति ।

३. अत्र विज्ञानामृतभाष्ये तेषां मतमपि दूषितं ये सहकारिशब्दस्य स्वकारणेति अर्थं प्रदर्शयन्ति लक्षणया । स्वोत्पत्तये स्वफलाय च विद्ययाऽवश्यं कर्मापेक्षत इति अत्र सिद्धान्तितं भिक्षुणा ।

प्रधानरक्षार्थमङ्गभूतं कर्मैव त्याज्यं जडभरता[1] दिवदित्याशयादिति ; तेषां मतेऽपि विवेकद्वारतां विना विवेकनाशकत्वं कर्मणो नैव सिध्यतीति न तद्विरोधः ।

अत्र सूत्रे ध्वान्तस्यालोकनाश्यत्ववचनात्[2] तमोऽपि द्रव्यमेव, न त्वालोकाभावः ; असति बाधके नीलं तम इत्यादिप्रत्ययानां भ्रमत्वानौचित्यात् । न च क्लृप्तेनैवोपपत्तावतिरिक्तकल्पनागौरवमेव बाधकमिति वाच्यम्; एवं च सति विज्ञानमात्रेणैव स्वप्नवत् सर्वव्यवहारोपपत्तावतिरिक्तकल्पनागौरवेण बाह्यार्थप्रतीतेरपि बाधापत्तेः । तस्मादत्र प्रामाणिकत्वाद् गौरवं न दोषायेति ।

ननु विवेकज्ञानं विनाप्यविवेकाख्यज्ञानव्यक्तीनां स्वस्वतृतीयक्षणेऽवश्यं विनाशाज्ज्ञानस्य तन्नाशकत्वं किमर्थमिष्यत इति चेत् ? अविवेकशब्देन तद्वासनाया एव पूर्वसूत्रे ( १।५५ ) व्याख्यातत्वात् । अनागतावस्थस्याविवेकस्यास्मन्मते नाशसम्भवाच्चेति ॥५६॥

ननु प्रकृतिपुरुषाविवेक एव चेत्थं संयोगद्वारा बन्धहेतुस्तयोर्विवेक एव च मोक्षहेतुस्तर्हि देहाद्यभिमानसत्त्वेऽपि मोक्षः स्यात् । तच्च श्रुतिस्मृतिन्यायविरुद्धमिति तत्राह—

प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ॥५७॥

पुरुषे प्रधानाविवेकात् कारणाद्योऽन्याविवेको बुद्ध्याद्यविवेको जायते कार्याविवेकस्य कार्यतयाऽनादिकारणाविवेकमूलकत्वात् तस्य प्रधानाविवेकहाने सत्यवश्यं हानमित्यर्थः । यथा शरीरादात्मनि विविक्ते शरीरकार्येषु रूपादिष्वविवेको न सम्भवति तथा कूटस्थत्वादिधर्मैः प्रधानात् पुरुषे विविक्ते तत्कार्येषु परिणामादिधर्मकेषु बुद्ध्यादिष्वभिमानो नोत्पत्तुमुत्सहते तुल्यन्यायात् कारणनाशाच्चेति भावः । तदेतत् स्मर्यते—

चित्राधारपटत्यागे त्यक्तं तस्य हि चित्रकम् ।
प्रकृतेर्विरमे चेत्थं ध्यायिनां के स्मरादयः ॥

इति । विरमो विरामस्त्यागः । आदिशब्देन द्रव्यरूपा अपि विकारा ग्राह्या इति ।

---

१. जडभरतोपदेशविषये विष्णुपुराणम् ( २।१३-१४ अ० ), भागवतम् ( ५।७-१३ अ० ) नारदीयपुराणं ( १।४८-४९ अ० ) च द्र० ।

२. भाट्टानां वेदान्तिनां च केषांश्चिन्मते तमो द्रव्यमेव । 'एवमविद्यात एव अन्धकारोऽपि भावरूप एव आवरणात्मा ······' ( सिद्धान्तबिन्दु, ७ श्लो० ); द्र० वि० प्र० संग्रह पृ० १०-११ । नैयायिकास्तमस आलोकाभावरूपत्व मेवातिष्ठन्ते । एतेषां मते छायाया गतिमत्त्वमेवासिद्धम् ( द्र० न्यायभा १।२।८ ) । द्र० 'द्रव्यगुणकर्मनिष्पत्ति वैधर्म्याद् भाऽभावस्तमः' इति । ( ५।२।१९ ) पृथिवीगुणस्तम इत्यपि मतमस्ति केषांचिन्मीमांसकानाम् ।

यच्च[1] बुद्धिपुरुषविवेकादेव मोक्ष इत्यपि क्वचिदुच्यते, तत्र स्थूलसूक्ष्मबुद्धिग्रहणात् प्रकृतेरपि ग्रहणम् : अन्यथा बुद्धिविवेकेऽपि प्रकृत्यभिमानसम्भवादिति ।

ननु बुद्ध्याद्यभिमानातिरिक्ते प्रकृत्यभिमाने किं प्रमाणमहमज्ञ इत्याद्यखिलाभिमानानां बुद्ध्यादिविषयत्वेनैवोपपत्तेरिति चेन्न—'मृत्वा मृत्वा पुनः सृष्टौ स्वर्गी स्यां मा च नारकी' इत्याद्यभिमानानां प्रधानविषयत्वं विनानुपपत्तेः । अतीतानां बुद्ध्याद्यखिलकार्याणां पुनः सृष्ट्यभावात् । प्रधानस्य त्विदमेव प्रलयानन्तरं जन्म यद् बुद्ध्यादिरूपैकपरिणामत्यागेनापरबुद्ध्यादिरूपतया परिणमनमिति ।

न चात्मनि जन्मादिज्ञानमभिमान एव न भवति पुरुषस्यापि लिङ्गशरीरसंयोगवियोगरूपयोर्जन्ममरणयोः पारमार्थिकत्वादिति वाच्यम्, 'न जायते म्रियते वा कदाचिन् नायं भूत्वा भविता वा न भूयः' ( गीता २।२० ) इत्यादिवाक्यैर्जन्मादिप्रतिषेधेनोत्पत्तिविनाशाभिमानरूपस्यात्मनि जन्मादिज्ञानस्य सिद्धेरप्रसक्तस्य प्रतिषेधायोगात् ।

किञ्च बुद्ध्यादिषु पुरुषाणामभिमानोऽनादिर्वक्तुं न शक्यते बुद्ध्यादीनां कार्यत्वात् । अतः कार्येष्वभिमानव्यवस्थार्थं नियामकाकाङ्क्षायां कारणाभिमान एव नियामकतया सिद्ध्यति लोके दृष्टत्वात्, कल्पनायाश्च दृष्टानुसारित्वात् । यथा लोके दृष्टः क्षेत्राभिमानात् क्षेत्रजन्यधान्यादिष्वभिमानः, सुवर्णाभिमानाच्च तज्जन्यकटकादिष्वभिमानः, तयोर्निवृत्त्या च तयोर्निवृत्तिरिति प्रधानाभिमानतद्वासनयोश्च बीजाङ्कुरवदनादित्वान्न तदभिमाने नियामकान्तरापेक्षेति ॥५७॥

एवं प्रतिपादिते चतुर्व्यूहे[2] पुनरियमाशङ्का—ननु पुरुषे चेद् बन्धमोक्षौ विवेकाविवेकौ स्वीकृतौ तर्हि नित्यशुद्धबुद्धमुक्तस्येति (द्र० १।१९) स्वोक्तिविरोधः । तथा च—

> न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
> न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता[3] ॥ ( माण्डूक्यकारिका २।३२ )

इत्यादिश्रुतिविरोधश्चेति । तां परिहरति—

---

१. वस्तुतस्तु योगसाधनदृष्ट्या 'बुद्धि-पुरुषान्यताप्रत्ययः' इति, तत्त्वदृष्ट्या 'प्रकृति-पुरुषान्यताप्रत्ययः' इति उच्यते इति योगविदां मतम् । भिक्षुस्तु–'अतएव पातञ्जले सत्त्वपुरुषान्यताख्यातिरेव मोक्षहेतुतया स्थले स्थले व्यासभाष्ये प्रोक्ता । सत्त्वपुरुषान्यताख्यातिरूप-दृग्दृश्यविवेकग्रहोत्तरं यथोक्तरीत्या प्रकृत्यादिविवेकग्रहात् । तत्र च सत्त्वशब्देन बुद्धिसत्त्वम् उक्तमित्याह' ( सांख्यसार परि २ ) ।

२. हेय-हेयहेतु-हान-हानोपाय-रूपा चत्वारो व्यूहाः । द्र० व्यासभाष्य २।१५ ( एवमिदमपि शास्त्रं चतुर्व्यूहमेव'''—) ।

३. श्लोकोऽयमन्यत्रापि दृश्यते—ब्रह्मबिन्दूपनिषद् ३०; अवधूतोपनिषद् ८; आत्मोपनिषद् ३१; त्रिपुरातापिन्युपनिषद् ५।१० च ।

[1]वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः[2] ॥ ५८ ॥

बन्धादीनां सर्वेषां चित्त एवावस्थानात् तत् पुरुषे वाङ्मात्रं सर्वं स्फटिकलौहित्यवत् प्रतिबिम्बमात्रत्वान्न तु तत्त्वं तस्य भावः—अनारोपितं जपालौहित्यवद् इत्यर्थः। अतो नोक्तविरोध इति भावः। 'स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव ( बृहदा० ४।३।७ ) इत्यादि श्रुतयस्त्वत्र प्रमाणम्। पुरुषः समानो लोकयोरेकरूपः। इवशब्दाभ्यां नानारूपत्वस्यौपाधिकत्वमुक्तम्। तथा चोक्तम्—

बन्धमोक्षौ सुखं दुःखं मोहापत्तिश्च मायया।
स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी॥

इति। मायया मायाख्यप्रकृत्यौपाधिकीत्यर्थः।

नन्वेवं तुच्छस्य बन्धस्य हानं कथं पुरुषार्थः, कथं वान्यधर्माभ्यामविवेकविवेकाभ्यामन्यस्य बन्धमोक्षस्वीकारे कर्मादिभिरिव नाव्यवस्थेति चेदत्रोक्तप्रायमपि पुनः प्रपञ्च्यते।

यद्यपि दुःखयोगरूपो बन्धो वृत्तिरूपौ च विवेकाविवेकौ चित्तस्यैव,[3] तथापि पुरुषे दुःखप्रतिबिम्ब एव भोग इत्यवस्तुत्वेऽपि तद्धानं पुरुषार्थः, दुःखं मा भुञ्जीयेति प्रार्थनात्। एवं यस्मै पुरुषाय प्रकृतिरविवेकेनात्मानं दर्शितवती तद्वासनावशात् तमेव संयोगद्वारा बध्नाति नान्यम्। तथा यस्मै विवेकेनात्मानं दर्शितवती तमेव स्ववियोगद्वारा मोचयति वासनोच्छेदादिति व्यवस्थापि घटत इति। कर्मादिभिर्बन्धाभ्युपगमे त्वेवं व्यवस्था न घटते। कर्मादीनां साक्षिभास्यत्वाभावेन साक्षात् पुरुषेष्वप्रतिबिम्बनादिति ॥५८॥

ननु बन्धादिकं चेत् पुरुषे वाङ्मात्रं तर्हि श्रवणेन युक्त्या वा तस्य बाधो भवतु किमर्थं श्रुतिस्मृत्योः साक्षात्कारपर्यन्तं विवेकज्ञानमुपदिश्यते मोक्षहेतुतयेति। तत्राह—

युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ॥५९॥

युक्तिर्मननम्। अपिशब्दः श्रवणसमुच्चयार्थः। वाङ्मात्रमपि पुरुषस्य बन्धादिकं श्रवणमननमात्रेण न बाध्यते साक्षात्कारं विना, यथा दिङ्मूढस्य जनस्य वाङ्मात्रमपि दिग्वैपरीत्यं श्रवणयुक्तिभ्यां न बाध्यते साक्षात्कारं विनेत्यर्थः। प्रकृते

---

१. उद्धृतमिदं योगवार्त्तिके (१।५१)।

२. भाष्यदर्शितः सूत्रार्थः क्लिष्ट एव। किं खलु वाङ्मात्रमिति न स्फुटं विज्ञायते। किं च बन्धादीनां चित्ते अवस्थानादेव कथं तेषां वाङ्मात्रता सिद्ध्यति इत्यपि न विज्ञायते। 'तत् पुरुषे वाङ्मात्रम्' इति भाष्याशयः। पुरुष इति कथं लब्धमिति प्रश्नः दुःसमाधेय एव। 'विवेक आत्मसंबन्धी इति कथनं वाङ्मात्रम्' इति वृत्तिदर्शितोऽर्थः। अस्वारसिकोऽयमर्थः।

३. तुल० 'न च सांख्यैर्बन्धो मोक्षो वार्थः पुरुषसमवेतोऽभ्युपगम्यते' (माण्डूक्यकारिकाभाष्य ३।५)।

चेदमेव बाध्यत्वं यत्पुरुषे बन्धादिबुद्धिनिवृत्तिर्न त्वभावसाक्षात्कारः, श्रवणादिना तदुत्पत्ति-सम्भावनाया अप्यभावादिति ।

अथवेत्थं व्याख्येयम् । ननु नियतकारणात् तदुच्छित्तिरित्यनेन (१।५६) विवेकज्ञानमविवेकोच्छेदकमुक्तम् । तज्ज्ञानं किं श्रवणादिसाधारणमुतास्ति कश्चिद्विशेष इत्याकाङ्क्षायामाह—युक्तितोऽपीत्यादिसूत्रम् । अविवेको युक्तितः श्रवणतश्च न बाध्यते नोच्छिद्यते विवेकापरोक्षं विना दिङ्मोहवदित्यर्थः । साक्षात्कारभ्रमे साक्षात्कारविशेषदर्शनस्यैव विरोधित्वादिति ।।५९।।

तदेवं विवेकसाक्षात्कारान्मोक्षं प्रतिपाद्य, इतः परं विवेकः प्रतिपादनीयः । तत्रादौ प्रकृतिपुरुषादीनां विवेकतः सिद्धौ प्रमाणान्युपन्यस्यन्ते—

**अचाक्षुषाणामनुमानेन[1] बोधो धूमादिभिरिव वह्नेः ।।६०।।**

अचाक्षुषाणामप्रत्यक्षाणाम् । केचित् तावत् पदार्थाः स्थूलभूततत्कार्यदेहादयः प्रत्यक्षसिद्धा एव । प्रत्यक्षेणासिद्धानां प्रकृतिपुरुषादीनामनुमानेन प्रमाणेन बोधः पुरुषनिष्ठफलसिद्धिर्भवति, यथा धूमादिभिर्जनितेनानुमानेन वह्नेः सिद्धिरित्यर्थः । अनुमानासिद्धमप्यागमात् सिध्यतीत्यपि बोध्यम् । अस्य शास्त्रस्यानुमानप्राधान्यात् तु केवलानुमानस्य मुख्यतयैवोपन्यासो न त्वागमस्यानपेक्षेति । तथा च कारिका—

सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ।।
( का.६ ) इति ।

अनेन च सूत्रेणेदं मननशास्त्रमित्यवगम्यते ।।६०।।

उक्तप्रमाणैः साध्यस्य विवेकस्य प्रतियोग्यनुयोगिपदार्थानां सङ्ग्रहसूत्रं वक्ष्यमाणानुमानोपयोगिकार्यकारणभावमपि प्रदर्शयति—

**सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः[2] प्रकृतेर्महान् महतोऽहङ्कारोऽ**

---

१. सांख्याचार्यैः अनुमानस्य पुष्कला चर्चा कृतेति विज्ञायते । षष्टितन्त्रे त्रिविधानुमान-चर्चाऽऽसीदिति केचन टीकाकाराः स्पष्टं कथयन्ति ( षष्टितन्त्रे व्याख्यातं पूर्ववत् शेषवत् सामान्यतो दृष्टमिति, जयमङ्गला—५) । सांख्यानां दर्शने केचन पदार्था नित्यानुमेया एव, यथोक्तम्—'प्रधान-पुरुष-संयोगा नित्यानुमेया इति सांख्या मन्यन्ते' ( शारीरक १।१।५ ) । बुद्ध्यादीनां सिद्धि रनुमानबलेन सांख्याचार्यैः कृता इति इतिहासपुराणादिगत—सांख्यप्रकरणीयश्लोकविशेषेभ्यो ज्ञायते—'अनुमानाद् विजानीमः पुरुषं सत्त्वसंश्रयम्, ( अश्वमेध ४८।६ ) 'अलिङ्गां प्रकृतिं प्राहुर्लिङ्गै रनुमिमीमहे' (शान्ति० ३०३।४७), 'एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते' (शान्ति० ३०५।२७) इति च ।

२. 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' इति मतम् पूर्वाचार्यैर्बहुश उक्तम्—"यदा भवन्तः सत्त्वरजस्तमसां साम्यावस्थां प्रकृतिं वर्णयन्ति" इति ( न्यायवा० पृ० ४५८ ); 'प्रकृतिः सत्त्वरजस्तमसां साम्यावस्था अव्यक्ताख्या" (अमरकोषोद्घाटन १।३।२९); जयरथकृततन्त्रालोकटीका ८।२५४; द्र० सांख्यदर्शन का इतिहास, प्रक० ४ ।

हङ्कारात् पञ्च तन्मात्राण्युभयमिन्द्रियं[1] तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशति[2]र्गणः ॥६१॥

सत्त्वादीनि द्रव्याणि न वैशेषिका गुणाः संयोगविभागवत्त्वात्। लघुत्वचलत्वगुरुत्वादिधर्मत्वाच्च। तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्दः[3] पुरुषोपकरणत्वात् पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते। तेषां सत्त्वादिद्रव्याणां या साम्यावस्था न्यूनानतिरिक्तावस्था न्यूनाधिकभावेनासंहतावस्थेति यावत्, अकार्यावस्थेति निष्कर्षः। अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात्।

सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा।
एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्॥

इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च, सत्त्वादीनामनुगमाय सामान्येति। पुरुषव्यावर्त्तनाय गुणेति। महदादिव्यावर्तनाय चोपलक्षितान्तमिति। महादादयोऽपि हि कार्यसत्त्वादिरूपाः पुरुषोपकरणतया गुणाश्च भवन्तीति। तदत्र प्रकृतेः स्वरूपमेवोक्तम्। अस्या विशेषस्तु पश्चाद्वक्ष्यते।[4]

प्रकृतेः कार्यो महान् महत्तत्त्वम्। महदादीनां स्वरूपं विशेषश्च वक्ष्यते[5]। महतश्च कार्योऽहङ्कारः। अहङ्कारस्य कार्यद्वयं तन्मात्राण्युभयमिन्द्रियं च। तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेनैकादशविधम्। तन्मात्राणां कार्याणि पञ्च स्थूलभूतानि। स्थूलशब्दात् तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम्। पुरुषस्तु कार्यकारणविलक्षण इति। इत्येवं पञ्चविंशतिर्गणः पदार्थव्यूह एतदतिरिक्तः पदार्थो नास्तीत्यर्थः। अथवा सत्त्वादीनां प्रत्येकव्यक्त्यानन्त्यं गणशब्दो वक्ति।

अयं च पञ्चविंशतिको गणो द्रव्यरूप एव। धर्मधर्म्यभेदात् तु गुणकर्मसामान्यादीनामत्रैवान्तर्भावः। एतदतिरिक्तपदार्थसत्त्वे हि ततोऽपि पुरुषस्य विवेक्तव्यतया तदसंग्रहन्यूनतापद्येत। एतेन साङ्ख्यानामनियतपदार्थाभ्युपगम इति मूढप्रलाप

---

१. 'उभयमिन्द्रियं मनश्च' इति पाठान्तरं क्वचिदेव दृश्यते।

२. पञ्चविंशतितत्त्वज्ञानं सांख्यमिति देवलः। पुरुषं वा पञ्चविंशकमिति ब्रुवन् निरुक्तकारोऽपि इमां गणनां प्रदर्शयति। (अ०१४)।

३. द्र० सत्त्वादयश्च द्रव्यत्वेऽपि पुरुषोपकरणत्वाद् गुणा इत्युच्यन्ते। (ललितासहस्रनामभाष्य, पृ० १२६)। तुल० 'सत्त्वंरजस्तम इति गुणाः'''निबधन्ति देहे देहिनम्' (गीता १४।५)। अतो बन्धनकारणाद् सत्त्वादयो गुणा इत्युच्यन्ते इति कथनं साध्वेव।

४. द्र०१।६५ तत्सूत्रभाष्यं, द्वितीयाध्यायभाष्यं च।

५. द्वितीयाध्या॰। द्र०

उपेक्षणीयः[१]। दिक्कालौ चाकाशमेव। दिक्कालावाकाशादिभ्य इत्यागामिसूत्रात् (२।३३)।

एत एव पदार्थाः परस्परप्रवेशाभ्यां क्वचित् तन्त्र एकमेव, क्वचित् तु षट्, क्वचिच्च षोडश, क्वचिच्च सङ्ख्यान्तरैरप्युपदिश्यन्ते। विशेषस्तु साधर्म्यवैधर्म्यमात्र इति मन्तव्यम्। तथा चोक्तं भागवते—

एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च।
पूर्वस्मिन् वा परस्मिन् वा तत्त्वे तत्त्वानि सर्वशः। (११।२२।८)
इति नानाप्रसङ्ख्यानं तत्त्वानामृषिभिः कृतम्।
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम्॥ (११।२२।२५)

एते च पदार्था श्रुतिष्वपि गणिताः, यथा गर्भोपनिषदि—अष्टौ प्रकृतयः षोडश विकारा इति (३)। प्रश्नोपनिषदि च—पृथिवी च पृथिवीमात्रा चेत्यादिना (प्रश्नोप ४।८)। एवं मैत्रेयोपनिषदादिष्वपि। अष्टौ च प्रकृतयः कारिकया व्याख्याताः—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥ (का-३) इति।

एकमेवाद्वितीयं तत्त्वमिति श्रुतिस्मृतिप्रवादस्तु सर्वतत्त्वानां पुरुषे विलापनेन शक्तिशक्तिमदभेदेनेत्यविरोधः। लयस्तु सूक्ष्मीभावेनावस्थानं न तु नाश इति। तदुक्तम्—आसोज् ज्ञानमयोऽप्यर्थ एकमेवाविकल्पितम्। अविकल्पितमविभक्तम्। एतच्च ब्रह्ममीमांसाभाष्ये (१।१।४—५, अन्यत्र च) ऽद्वैतप्रसङ्गतो विस्तरेणोपपादितम्।

विशेषस्त्वयं यत् सेश्वरवादेऽन्यतत्त्वानां तत्रैवाविभागादीश्वरचैतन्यमेवैकं तत्त्वम्। निरीश्वरवादे[२] तु त्रिगोणिवदन्योन्याविभक्ततयैकस्मिन् कूटस्थे तेजोमण्डलवदादित्यमण्डले प्रकृत्याख्यसूक्ष्मावस्थाया महदादेरविभागादात्मैवैकं तत्त्वमिति; तथा च वक्ष्यति—नाद्वैतश्रुतिविरोधो जातिपरत्वादिति (१।१५४)॥६१॥

एतेषु पदार्थेष्वचाक्षुषाणामनुमानेन बोधं प्रतिपादयति सूत्रजातेन—

**स्थूलात् पञ्चतन्मात्रस्य॥६२॥**

---

१. सांख्यानामनियतपदार्थवादित्वं पदार्थानाम् अनियतत्वं चानिरुद्धोऽसकृदाह (द्र० १।४५, १।५६, ५।८५, ५।१०७—१०८, ६।३८)

२. अस्मन्मते तु सेश्वर-निरीश्वर-रूपो विभागः सर्वथाऽज्ञानमूलक एव, सांख्यशास्त्रे ईश्वरतारूपबुद्धिरूपस्य प्रकर्षेण प्रतिपादनात्। 'सांख्यं निरीश्वरम्'—इति मतमपि प्राची ग्रन्थेषुनेषु न दृश्यते। अर्वाचीनाः केचन आचार्यास्तु इत्थं कथयन्ति। कथनमिदं सांख्यशास्त्रस्वरूपाज्ञानमूलकमेव। ईश्वरतास्वरूपविषये बहूनामाचार्याणां मतानि न सांख्याचार्यैः स्वीकृतानि, इत्येतावता न सांख्यं निरीश्वरं भवति। ईश्वरतारूपधर्मस्य कृत्स्नं विश्लेषणं सांख्ये एव दृश्यते नान्यत्रेति विज्ञेयम्।

बोध इत्यनुवर्तते (१।६० सूत्रतः)। स्थूलं तावच्चाक्षुषमेव तच्च तन्मात्रकार्यतयोक्तम्। ततः स्थूलभूतात् कार्यात् तत्कारणतया तन्मात्रानुमानेन स्थूलविवेकतो बोध इत्यर्थः। आकाशसाधारण्याय स्थूलत्वमत्र बाह्येन्द्रियग्राह्यगुणकत्वं शान्तादिविशेषवत्त्वं वा। तन्मात्राणि च यज्जातीयेषु शान्तादिविशेषत्रयं न तिष्ठति तज्जातीयानां शब्दस्पर्शरूपरसगन्धानामाधारभूतानि सूक्ष्मद्रव्याणि स्थूलानामविशेषाः—

तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता।
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः॥ (१।२।४३)

इति विष्णुपुराणादिभ्यः[1]। अस्यायमर्थः—तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्तीति कृत्वा धर्मधर्म्यभेदाद् द्रव्याणामपि तन्मात्रता स्मृता। ते च पदार्थाः शान्तघोरमूढाख्यैः स्थूलगतशब्दादिविशेषैः शून्या एकरूपत्वात्। तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः। अतोऽविशेषिणोऽविशेषसंज्ञिता इति। शान्तं सुखात्मकं घोरं दुःखात्मकं मूढं मोहात्मकम्। तन्मात्राणि च देवादिमात्रभोग्यत्वेन केवलं सुखात्मकान्येव सुखाधिक्यादिति[2]।

अत्रेदमनुमानम्—अपकर्षकाष्ठापन्नानि स्थूलभूतानि स्वविशेषगुणवद्द्रव्योपादानकानि स्थूलत्वाद् घटपटादिवदिति। अत्रानवस्थापत्त्या सूक्ष्ममादायैव साध्यं पर्यवस्यति। अनुकूलतर्कश्चात्र कारणगुणक्रमेण कार्यगुणोत्पत्तेर्बाधकव्यतिरेकेणापरिहार्यत्वम्; श्रुतिस्मृतयश्चेति। प्रकृतेः शब्दस्पर्शादिमत्त्वे तु बाधकमस्ति—

शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम्[3]।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्॥ (१।२।२०-२१)

इति विष्णुपुराणादिवाक्यजातम्। बुद्ध्यहङ्कारयोश्च शब्दस्पर्शादिमत्त्वे भूतकारणत्वश्रुतिस्मृतय एव बाधिकाः सन्ति। बाह्येन्द्रियग्राह्यजातीयविशेषगुणवत्त्वस्यैव भूतलक्षणत्वेन तयोरपि भूतत्वापत्त्या स्वस्य स्वकारणत्वानुपपत्तेरिति।

नन्वेवं कारणद्रव्येषु रूपाद्यभावे तन्मात्ररूपादेः किं कारणमिति चेत्, स्वकारणद्रव्याणां न्यूनाधिकभावेनान्योऽन्यं संयोगविशेष एव, हरिद्रादीनां संयोगस्य तदुभयारब्धद्रव्ये रक्तरूपादिहेतुत्वदर्शनात्। दृष्टानुसारेण स्वाश्रयहेतुसंयोगानामेव रूपादिहेतुत्वसम्भवे तार्किकाणां परमाणुषु रूपकल्पनं तु हेयम्। सजातीयकारणगुणस्यैव कार्यगुणारम्भकतेति तु तेषामपि न नियमः। त्रसरेणुमहत्त्वादाववयवबहुत्वादेरेव तैरपि हेतुत्वाभ्युपगमादिति दिक्।

---

१. मार्क० ४५।४६-४७ क० इत्यत्र 'अविशेषवाचकत्वादविशेषास्ततश्च ते' इत्यप्युक्तम्। वायु० ४।५ क-६ ख इत्रापि 'अविशेषवाचकत्वादविशेषास्ततः स्मृताः। अशान्तघोरमूढत्वात् अविशेषा स्ततः पुनः' इति पाठः।

२. मतमिदमसमीचीनम्। तन्मात्रं न सुखदुःखमोहजनकम्, तच्च विचारानुगतसंप्रज्ञातस्थैर्यबलेन प्रत्यक्षीभवति। न खलु सर्वे देवाः संप्रज्ञातसमाधिमन्त इति।

३. रूपादिभिरसंहतम् इति मुद्रितपुराणपाठः।

इन्द्रियानुमानं चाकाशानुमानवद्दर्शनस्पर्शनवचनादिभिः प्रत्यक्षाभिर्वृत्तिभिरेवेति तदत्र नोक्तम्। तत्त्वान्तरेण तत्त्वान्तरानुमानानामेव प्रकृतत्वादिति न न्यूनता। तन्मात्राणां चोत्पत्तौ योगभाष्योक्तप्रक्रियैव ग्राह्या। यथा—अहङ्काराच्छब्दतन्मात्रं ततश्चाहङ्कारसहकृताच्छब्दतन्मात्राच्छब्दस्पर्शगुणकं स्पर्शतन्मात्रम्। एवं क्रमेणैकैकगुणवृद्ध्या तन्मात्राण्युत्पद्यन्ते[1] इति। या तु—

आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह।

बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः॥ (१।२।३८)

इत्यादिना विष्णुपुराणे स्पर्शादितन्मात्रसृष्टिराकाशादिस्थूलभूतचतुष्टयादुक्ता। सा भूतरूपेण परिणामनरूपैव मन्तव्या। आकाशादीनि जलान्तानि हि स्थूलभूतानि स्वस्वोत्तरभूतरूपेण स्वानुगततन्मात्राः स्वोपष्टम्भतः परिणमयन्तीति॥६२॥

बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य॥६३॥

बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्यैस्तत्कारणतयाहङ्कारस्यानुमानेन बोध इत्यर्थः। अहङ्कारश्चाभिमानवृत्तिकमन्तःकरणद्रव्यं नत्वभिमानमात्रं[2] द्रव्यस्यैव लोके द्रव्योपादानत्वदर्शनात्। सुषुप्त्यादावहङ्कारवृत्तिनाशेन भूतनाशप्रसङ्गाद्वासनाश्रयत्वेनैवाहङ्काराख्यद्रव्यसिद्धेश्चेति। अत्रेत्थमनुमानम्—तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकान्यभिमानकार्यद्रव्यत्वात्, यन्नैवं तन्नैवम्, यथा पुरुषादिरिति।

नन्वभिमानवद् द्रव्यमेवासिद्धमिति चेदहं गौर इत्यादिवृत्त्युपादानतया चक्षुरादिवत् तत्सिद्धेः। अनेन चानुमानेन मन आद्यतिरेकमात्रस्य तत्कारणतया प्रसाध्यत्वात्। अत्र चायमनुकूलस्तर्कः। बहु स्यां प्रजायेय (छान्दोग्य ६।२।३) इत्यादि श्रुतिस्मृतिभ्यस्तावद् भूतादिसृष्टेरभिमानपूर्वकत्वाद् बुद्धिवृत्तिपूर्वकसृष्टौ कारणतयाऽभिमानः सिद्धः। तत्र चैकार्थसमवायप्रत्यासत्त्यैवाभिमानस्य सृष्टिहेतुत्वं लाघवात् कल्प्यत इति।

नन्वेवं कुलालाहङ्कारस्यापि घटोपादानत्वापत्त्या कुलालमुक्तौ तदन्तःकरणनाशे तन्निर्मितघटनाशः स्यात्; न चैतद्युक्तम्, पुरुषान्तरेण स एवायं घट इति प्रत्यभिज्ञायमानत्वादिति। मैवम्; मुक्तपुरुषभोगहेतुपरिणामस्यैव तदन्तःकरणमोक्षोत्तरमुच्छेदात्, न तु परिणामसामान्यस्यान्तःकरणस्वरूपस्य वोच्छेदः—कृतार्थं प्रति नष्टमप्यनष्टं

---

१. द्रष्टव्यं भाष्यम्—'षडविशेषास्तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेत्येकद्वित्रिचतुष्पञ्चलक्षणाः शब्दादयः पञ्चाविशेषाः षष्ठश्चाविशेषोऽस्मितामात्र इति। एते सत्तामात्रस्यात्मनो महतः षडविशेषपरिणामाः'; पुनरपि—'तथा षडविशेषाः लिङ्गमात्रे संसृष्टा विविच्यन्ते, परिणामक्रमनियमात् तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते' (२।१९)।

२. अभिमानोऽहङ्कार इति सांख्यकारिकाव्याख्यानान्यत्र द्रष्टव्यानि। सत्त्वं (= बुद्धिः) द्रव्यरूपम्—द्रव्यमात्रमभूत् सत्त्वं पुरुषस्येति निश्चयः इति (अश्व० ५०।१३) उक्तम्। अतो बुद्धिजातोऽहङ्कारोऽपि द्रव्यरूप एव।

तदन्यसाधारणत्वादिति ( २।२२ ) योगसूत्रे मुक्तपुरुषोपकरणस्याप्यन्यपुरुषार्थसाधकत्वासिद्धेरिति । अथवा घटादिष्वपि हिरण्यगर्भाहङ्कार एव कारणमस्तु न कुलालाद्यहङ्कारस्तथापि सामान्यव्याप्तौ न व्यभिचारः; समष्टिबुद्ध्याद्युपादानिकैव हि सृष्टिः पुराणादिषु[1] साङ्ख्ययोगयोश्च प्रतिपाद्यते,न तु तदंशव्यष्टिबुद्ध्याद्युपादानिका । यथा महापृथिव्या एव स्थावरजङ्गमाद्युपादानत्वं न तु पृथिव्यंशलोष्टादेरिति ॥ ६३ ॥

तेनान्तःकरणस्य[2] ॥ ६४ ॥

तेनाहङ्कारेण कार्येण तत्कारणतया मुख्यस्यान्तःकरणस्य महदाख्यबुद्धेरनुमानेन बोध इत्यर्थः । अत्राप्ययं प्रयोगः—अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्यद्रव्यत्वात्, यन्नैवं तन्नैवं यथा पुरुषादिरिति ।

अत्राप्ययं तर्कः-सर्वोऽपि लोकः पदार्थमादौ स्वरूपतो निश्चित्य पश्चादभिमन्यते 'अयमहं ममेदं कर्त्तव्यमि' त्यादिरूपेणेति तावत् सिद्धमेव । तत्राहङ्कारद्रव्यकारणाकाङ्क्षायां वृत्त्योः कार्य-कारणभावेन तदाश्रययोरेव कार्यकारणभावो लाघवात् कल्प्यते, कारणस्य वृत्तिलाभेन कार्यवृत्तिलाभस्यौत्सर्गिकत्वादिति । श्रुतावपि 'स ईक्षाञ्चक्रे' (बृहदा० १।४।२), 'तदैक्षते'त्यादौ (छान्दोग्य ६।२।३) सर्गाद्युत्पन्नबुद्धित एव तदितराखिलसृष्टिरवगम्यत इति ।

यद्यप्येकमेवान्तःकरणं वृत्तिभेदेन विविधं लाघवात्—
गुणक्षोभे जायमाने महान् प्रादुर्बभूव ह ।
मनो महांश्च विज्ञेय एकं तद् वृत्तिभेदतः ॥

---

१. बुद्धिपूर्विकाऽबुद्धिपूर्विका च सृष्टी पुराणेषु प्रतिपादिते; तथाहि—इत्येष प्राकृतः सर्गः संभूतोऽबुद्धिपूर्वकः (६२), प्राकृतास्तु त्रयः सर्गा कृतास्तेऽबुद्धिपूर्वकाः, बुद्धिपूर्वं प्रवर्तन्ते षट् सर्गा ब्रह्मणस्तु ते ( ६६ ) [वायु० ६ अ०] । अत्र विष्णु० १।५।२० श्लोकोऽपि द्रष्टव्यः । एतादृशाः श्लोकाः पुराणान्तरेष्वपि; 'संभूतो बुद्धिपूर्वकः' इत्यत्र अकारप्रश्लेषविषये विवदन्ते व्याख्यातारः । श्रीधर आह—अबुद्धिरविद्याख्या प्रकृतिस्तत्पूर्वकः संभूतः, यद् वा बुद्धिर्महत्-तत्त्वं तत् पूर्वकस्तदादिरित्यर्थः ( १।५।२१ टीका ); द्र० ललितासहस्रनामभाष्यम् (पृ० १०३–१०५) ।

२. अन्तःकरणशब्देन बुद्धितत्त्वस्य (महत्तत्वस्य) ग्रहणं पूर्वाचार्यसंमतम् । आह शंकरः विज्ञानशब्दव्याख्याने—विज्ञायतेऽनेनेति अन्तःकरणं बुद्धिरुच्यते (बृहदा० २।१।१६ भाष्य) । अन्तःकरणशब्देन यदा बुद्धितत्त्वमेव उच्यते तदा तद् एकमेवेति स्वीकार्यम् । शब्दोऽयं बुद्धि-अहंकार-मनःसु अपि प्रयुज्यते । अस्यां दृष्टौ त्रीण्येव अन्तःकरणानीति अभ्युपेयमेव । अतएव सांख्यमतासंगति—प्रदर्शनावसरे यत् शंकरेणोक्तम्—'क्वचित् त्रीणि अन्तःकरणानि वर्णयन्ति सांख्याः, क्वचिदेकम्' ( शारीरक २।२।१० ), तन्न साधु । योगसाधनोत्कर्षजनितानुभवभेदादपि प्रमेयसंख्यानिर्धारणे मतभेदो जायते इति योगविदां मतम् । ईदृशेषु मतभेदस्थलेषु न मतविरोधगन्धोऽपि ।

इति लैङ्गात्[1]। पञ्चवृत्तिर्मनोवद्व्यपदिश्यते (२।४।१२) इति वेदान्तसूत्रेण प्राणदृष्टान्तविषया मनसोऽपि वृत्तिमात्रभेदेन बहुत्वसिद्धेश्च। अन्यथा निश्चयादिवृत्तिभिरिव भ्रमसंशयनिद्राक्रोधादिवृत्तिभिरपि स्वसमसङ्ख्यानन्तान्तःकरणापत्तेः। बुद्ध्यादिष्वव्यवस्थया मन आदिप्रयोगस्य पातञ्जलादिसर्वशास्त्रेष्वनुपपत्तेश्च[2]। तथापि वंशपर्वस्विवावान्तभेदमाश्रित्यान्तःकरणत्रये क्रमः कार्यकारणभावश्चोक्तः, योगोपयोगिश्रुतिस्मृतिपरिभाषानुसारादिति मन्तव्यम्। तदुक्तं वासिष्ठे—

अहमर्थोदयो योऽयं चित्तात्मा वेदनात्मकः।
एतच्चित्तद्रुमस्यास्य बीजं विद्धि महामते॥
एतस्मात् प्रथमोद्भिन्नादङ्कुरोऽभिनवाकृतिः।
निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते॥
अस्य बुद्ध्यभिधानस्य याऽङ्कुरस्य प्रपीनता।
सङ्कल्परूपिणी तस्याश्चित्तं चेतो मनोऽभिधा॥

इति। अहमर्थोऽन्तःकरणसामान्यम्। अत्र वाक्ये बीजाङ्कुरन्यायेनैकस्यैवान्तःकरणवृक्षस्य वृत्तिमात्ररूपेण चित्ताद्याख्यावस्थाभेदाः क्रमिकास्त्रिविधाः परिणामा उक्ता इति। साङ्ख्यशास्त्रे च चिन्तावृत्तिकस्य चित्तस्य बुद्धावेवान्तर्भावः। अहङ्कारस्य चात्र वाक्ये बुद्धावन्तर्भावः ॥६४॥

ततः प्रकृतेः ॥६५॥

ततो महत्तत्त्वात् कार्यात् कारणतया प्रकृतेरनुमानेन बोध इत्यर्थ। अन्तःकरणसामान्यस्यापि कार्यत्वं तावदेकदा पञ्चेन्द्रियज्ञानानुत्पत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धम्, श्रुतिस्मृतिप्रामाण्याच्च। तस्य च प्रकृतिकार्यत्वेऽयं प्रयोगः— सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या कार्यत्वे सति सुखदुःख-

---

१. लिङ्गपुराणे श्लोकोऽयं यद्यपि नोपलभ्यते तथापि एतदर्थपरकः श्लोको दृश्यते—'महतस्तु तथा वृत्तिः संकल्पाध्यवसात्मिका' इति (१।३।१७)। मनो-मति—ब्रह्म-ख्याति-ईश्वरादीनि नामानि महत्-तत्त्वस्यैवेति वायौ उक्तम् (४।२७)। वायुपुराणे 'संकल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम्' इत्यप्युक्तम् (४।४६); अध्यवसायलक्षणा बुद्धिः, संकल्पकं च मन इति प्रसिद्धमेव, अतः पुराणीयमिदं वचनं संगतमेव।

२. बुद्धि-मनोऽहंकारादिशब्दप्रयोगाणां सांकर्य-भेद-विषये इमानि वचनानि द्रष्टव्यानि– बुद्धिर्मनश्च लिङ्गश्च महानक्षर एव च। पर्यायवाचकैः शब्दै स्तमाहुस्तत्त्वचिन्तकाः (वायु० १०२।२१); मनो विसृजते भावं बुद्धिरध्यवसायिकी। हृदयं प्रियाप्रिये वेद त्रिविधा कर्मचोदना (शान्ति० १४८।६)। अव्यवस्थितः प्रयोगाः न्यायादिषु अपि दृश्यन्ते। प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः (१।१।१७) इति न्यायसूत्रे-भाष्ये वात्स्यायन आह—बुद्धिरत्र मनोऽभिप्रेतम् इति। यद्यपि बुद्धिर्गुणः मनश्च द्रव्यं तथापि बुद्धिपदेन मनसो ग्रहणं भवतीति चित्रम्।

मोहात्मकत्वात्[1] कान्तादिवदिति; कारणगुणानुसारेणैव कार्यगुणौचित्यं चात्रानुकूलस्तर्कः, श्रुतिस्मृतयोऽपीति मन्तव्यम् ।

ननु विषयेषु सुखादिमत्त्वे प्रमाणं नास्ति, अहं सुखीत्याद्येवानुभवात्; तत् कथं कान्तादिविषयो दृष्टान्त इति चेन्न; सुखाद्यात्मकबुद्धिकार्यतया स्रक्सुखं चन्दनसुखमित्याद्यनुभवेन च विषयाणामपि सुखादिधर्मकत्वसिद्धेः, श्रुतिस्मृतिप्रामाण्याच्च ।

किञ्च यस्यान्वयव्यतिरेकौ सुखादिना सह दृश्येते तस्यैव सुखाद्युपादानत्वं कल्प्यते । तस्य निमित्तत्वं परिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वयकल्पनागौरवात् । अपि चान्योऽन्यसंवादेन प्रत्यभिज्ञया च विषयेषु सर्वपुरुषसाधारणस्थिरसुखसिद्धिः । तत्सुखग्रहणायास्मन्नये वृत्तिनियमादिकल्पनागौरवं च फलमुखत्वान्न दोषावहम् । अन्यथा प्रत्यभिज्ञयावयव्यसिद्धिप्रसङ्गात् तत्कारणादिकल्पनागौरवादिति ।

विषयेऽपि सुखादिकं च मार्कण्डेये प्रोक्तम्—'तत् सन्तु चेतस्यथवापि देहे सुखानि दुःखानि च किं ममात्र' (मार्क० ३७।२८) इति ।

अहं सुखीत्यादिप्रत्ययस्तु अहं धनीत्यादिप्रत्ययवत् स्वस्वामिभावाख्यसम्बन्धविषयकस्तेषां प्रत्ययानां समवायसम्बन्धविषयकत्वभ्रमनिरासार्थं तु सुखिदुःखिमूढेभ्यः पुरुषो विविच्यते शास्त्रेष्विति । शब्दादिषु च सुखाद्यात्मताव्यवहार एकार्थसमवायात् । अस्तु वा शब्दादिषु साक्षादेव सुखमुक्तप्रमाणेभ्यः, विषयगतसुखादेश्च बुद्धिमात्रग्राह्यत्वं फलबलात् । यत् तु विषयासम्प्रयोगकाले शान्तिसुखं सात्त्विके सुषुप्त्यादौ व्यज्यते, तदेव बुद्धिधर्म आत्मसुखमुच्यते इति ।

यद्यपि वैशेषिकाद्या अपि तार्किकाः प्रपञ्चेऽन्यथापि कार्यकारणव्यवस्थामनुमिमते तथापि बहुलश्रुतिस्मृत्युपोद्बलनेनास्माभिरनुमितैव व्यवस्था मुमुक्षुभिरुपादेया, मूलशैथिल्यदोषेण परानुमानानां दुर्बलत्वात् । अतएव तर्काप्रतिष्ठानाद् (२।१।११) इति वेदान्तसूत्रेणाप्रतिष्ठादोषतः केवलतर्कोऽपास्तः । तथा मनुनापि—

---

१. वस्तुतस्तु सुखदुःखमोहा न गुणस्वरूपाः, गुणकार्यत्वात् तेषाम् । अतएव सत्त्वं सुखहेतुः, रजो दुःखहेतुः, तमो मोहहेतुः इति कथनं पूर्वाचार्यग्रन्थेषूपलभ्यते । सत्त्वादीनां सुखाद्यात्मकत्वमाश्रित्य यत् गुणविषयकसांख्यमतखण्डनं कृतं तैर्थिकैः तदज्ञानमूलकमेव । द्र० सुखदुःखमोहात्मकं हि प्रधानम् (प्रमाणवार्तिकभाष्य ४।१४५); विमताः सर्वे विकाराः सुखदुःखमोहसामान्यप्रकृतिकाः तदन्वितस्वभावत्वात्... इति सांख्या प्रधानं जगदुपादानमनुमिमते' (वि० प्र० संग्रह पृ० २०८; पृ० २०६ मतमिदं खण्डितम्) । नेयं सांख्यीया दृष्टिः । भामत्यामपि ( २।२।१ ) ईदृशी भ्रान्ता दृष्टिरेवावलोक्यते । 'एते गुणा इतरेतराश्रयेण उपार्जितसुखदुःखमोहप्रत्ययाः' ( व्यास० २।१५ ) इत्यनेन सुखदुःखमोहानां गुणविकाररूपत्वमेव सिद्धम् ।

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ (१२।१०६)

इति वेदाविरुद्धतर्कस्यैवार्थनिश्चायकत्वमुक्तम् । तस्मात् 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इत्यादिवाक्येभ्यः श्रवणसमानार्थमेव मननं बलवत् । अन्याकारं मननं तु परेषां दुर्बलम् । एवं पुरुषेऽपि सुखदुःखादिमत्त्वेन तेषामनुमानं बहुलश्रुत्यादिविरोधाद् दुर्बलमिति दिक् । प्रकृतिगतविशेषं च पश्चाद्वक्ष्यामः ॥६५॥

नन्वखिलजडेभ्यः पुरुषविवेक एव मुक्तौ हेतुस्तत् किमर्थं जडानामन्योऽन्यविवेकोऽत्र दर्शित इति चेत्; प्रकृत्यादितत्त्वोपासनया सत्त्वशुद्ध्यर्थं विवेकस्याप्यपेक्षितत्वादिति । कार्यकारणमुद्रया प्रकृतिपर्यन्तस्यानुमानेन विवेकतः सिद्धिमुक्त्वा यथोक्तकार्यकारणभावशून्यस्य पुरुषस्य प्रकारान्तरेणानुमानतस्तथा सिद्धिमाह—

संहतपरार्थत्वात् पुरुषस्य[1] ॥६६॥

संहननमारम्भकसंयोगः, स चावयवावयव्यभेदात् प्रकृतिकार्यसाधारणः । तथा च संहतानां प्रकृतितत्कार्याणां परार्थत्वानुमानेन पुरुषस्य बोध इत्यर्थः। तद्यथा विवादास्पदं प्रकृतिमहदादिकं परार्थं स्वेतरस्य भोगापवर्गफलकं संहतत्वात् शय्यासनादिवदित्यनुमानेन प्रकृतेः परोऽसंहत एव पुरुषः[2] सिध्यति तस्यापि संहतत्वेऽनवस्थापत्तेः ।

पातञ्जले च परार्थं संहत्यकारित्वादिति (४।२४) सूत्रकारेणानुमानं कृतं तत् तु यथाश्रुतमेवान्त्यावयवसाधारणम्, इतरसाहित्येनार्थक्रियाकारित्वस्यैव संहत्यकारिताशब्दार्थत्वात् । पुरुषस्तु विषयप्रकाशरूपायां स्वार्थक्रियायां नान्यदपेक्षते नित्यप्रकाशरूपत्वात् । पुरुषस्यार्थसम्बन्धमात्रे बुद्धिवृत्त्यपेक्षणात् । सम्बन्धस्तु नासाधारण्यर्थक्रियेति । अत्र च'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति' (बृहदा० २।४।५) इत्यादि श्रुतिस्मृतयोऽनुकूलतर्काः ।

अन्यच्च सुखादिमत् प्रधानादिकं यदि स्वस्य सुखादिभोगार्थं स्यात् तदा तस्य साक्षात् स्वज्ञेयत्वे कर्मकर्तृविरोधः, न हि धर्मिभानं विना सुखस्य भानं सम्भवति ।

---

१. द्र० 'यथा आत्मास्ति नवेति विवादे तत् साधनार्थं सांख्येन परार्थाः चक्षुरादयः संघातत्वात् शयनासनाद्यङ्गवत्……' (प्रमाणवार्तिक, परार्थानुमान, श्लो० २९, मनोरथनन्दिटीका) । संहतपरार्थत्वयुक्तिः पूर्वाचार्यैः बहुत्र प्रयुक्ता । द्र० 'अस्ति हि श्रोत्रादिभिरसंहतो यत्-प्रयोजनप्रयुक्तः श्रोत्रादिकलापो गृहादिवदिति संहतानां परार्थत्वाद् अवगम्यते श्रोत्रादीनां प्रयोक्ता (कठ० १।१।१ पदभाष्य); उपदेशसाहस्री, पृ० १४७; संहतत्वाच्च पारार्थ्योपपत्तिः प्राणस्य' (बृहदा० २।१।१५ शां० भा०) ।

२. श्लोकवार्त्तिकानुमानपरिच्छेद- १०९ श्लोक- व्याख्यायां काशिकाकारेण दर्शितं यद् नानेन हेतुना असंहतरूपात्मार्थता सिध्यति, प्रत्युत आत्मनः संहतत्वमेव सिद्धं भवतीति ।

अहं सुखीत्येवं सुखानुभवादिति। अपि च संहन्यमानानां बहूनां गुणानां तत्कार्याणां चानेकविकाराणामनेकचैतन्यगुणकल्पनायां गौरवेण लाघवादेक एव चित्प्रकाशरूपः पुरुषः सर्वसंहतेभ्यः परः कल्पयितुं युज्यत इति।

अनेन सूत्रेण निमित्तकारणतया पुरुषानुमानमुक्तं पुरुषार्थस्याखिलवस्तुसंहनननिमित्तत्ववचनात्। अत एव सर्गाद्युत्पन्नं पुरुषं प्रकृत्य विष्णुपुराणादौ स्मर्यते—

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः॥ (विष्णु० १।४।५१)
गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने।
गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम॥ (विष्णु० १।२।३३)

इत्यादिक्षेत्रज्ञाधिष्ठानं चासमाप्तपुरुषार्थस्य संयोगमात्रं गुणव्यञ्जनं महत्तत्त्वं कारणतया त्रिगुणात्मप्रधानव्यञ्जकत्वादिति। तदेवमचाक्षुषाणामनुमानेन सिद्धिरुक्ता (द्र०सू० १।६०)॥६६॥

इदानीं सर्वकारणत्वोपपत्तये प्रकृतिनित्यत्वमुपपाद्यते पुरुषकौटस्थ्यसिद्धचर्थम्—

**मूले मूलाभावादमूलं मूलम्॥६७॥**

त्रयोविंशतितत्त्वानां मूलमुपादानं प्रधानं मूलशून्यम्, अनवस्थापत्त्या तत्र मूलान्तरासम्भवादित्यर्थः॥६७॥

ननु 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम (शान्ति० ३३४।३१) इत्यादिना प्रधानस्यापि पुरुषादुत्पत्तिश्रवणात् पुरुष एव प्रकृतेर्मूलं भवतु, पुरुषस्य नित्यतया च नानवस्था अविद्याद्वारकतया च न पुरुषकौटस्थ्यहानिः; तथा च स्मर्यते—'तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि[1]' इति। इत्याशङ्क्याह—

**पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम्॥६८॥**

अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽप्येकस्मिन्नविद्यादौ यत्र कुत्रचिन्नित्ये द्वारे परम्परायाः पर्यवसानं भविष्यति पुरुषस्यापरिणामित्वात्। अतो यत्र पर्यवसानं सैव नित्या प्रकृतिः। प्रकृतिरिह मूलकारणस्य संज्ञामात्रमित्यर्थः॥६८॥

नन्वेवं पञ्चविंशतितत्त्वानीति नोपपद्यते महत्तत्त्वकारणाव्यक्तापेक्षयापि जडतत्त्वान्तरापत्तेरित्याशयेन मूलसमाधानमाह—

**समानः प्रकृतेर्द्वयोः[2]॥६९॥**

वस्तुतस्तु प्रकृतेर्मूलकारणविचारे द्वयोर्वादिप्रतिवादिनोरावयोः समानः पक्षः। एतदुक्तं भवति—यथा प्रकृतेरुत्पत्तिः श्रूयते एवमविद्याया अपि—'अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः' (विष्णु पु० १।५।५) इत्यादिवाक्यैः, अत एकस्या

---

१. द्र० कूर्म० २।२।१६ (तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम्)।

२. द्वयोः=वादिप्रतिवादिनोरिति भाष्यं वृत्तिश्च। वादि-प्रतिवादि-रूपोऽर्थः कथं लब्ध इति न ज्ञायते। भाष्यवृत्तिदर्शितः सूत्रार्थोऽपि न सूत्राक्षरतो न वा प्रकरणतः सुष्ठु प्रतीयते। अस्पष्टार्थकमिदं सूत्रम्।

अवश्यं गौण्युत्पत्तिर्वक्तव्या। तत्र च प्रकृतेरेव पुरुषसंयोगादिभिरभिव्यक्तिरूपा गौण्युत्पत्तिर्युक्ता। 'संयोगलक्षणोत्पत्तिः कथ्यते कर्मज्ञानयोः' इति कौर्मवाक्ये प्रकृतिपुरुषयोर्गौणोत्पत्तिस्मरणात्। अविद्यायाश्च क्वापि गौणोत्पत्त्यश्रवणात्; तस्या अनादितावाक्यानि तु प्रवाहरूपेणैव वासनाद्यनादिवाक्यवद्व्याख्येयानीति।

अविद्या च मिथ्याज्ञानरूपा बुद्धिधर्म इति योगे सूत्रितम् (२।८), अतो न तत्त्वाधिक्यम्। अथवा द्वयोः प्रकृतिपुरुषयोः समान एव न्याय इत्यर्थः।

यतः प्रधानपुरुषौ यतश्चैतच्चराचरम्।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु॥

इत्यादिवाक्यैः पुरुषस्याप्युत्पत्तिश्रवणादिति भावः। तथा च पुरुषस्येव प्रकृतेरपि गौण्येवोत्पत्तिः; नित्यत्वश्रवणादित्यपि समानमिति। तस्मात् प्रकृतिरेवोपादानं जगतः, प्रकृतिधर्मश्चाविद्या जगन्निमित्तकारणं तथा पुरुषोऽपीति सिद्धम्।

यत् तु—

अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणम्।
सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम्[1]॥ (शान्ति० ३०७।२)

इति मोक्षधर्मे प्रकृतिपुरुषयोरविद्याविद्येति वचनं तत् तदुभयविषयतयोपचरितमेव; परिणामित्वेन हि पुरुषापेक्षया प्रकृतिरसतीति तस्या अविद्याविषयत्वमुक्तम्। एवमेव तस्मिन् प्रकरणे स्वस्वकारणापेक्षया भूतान्तं कार्यजातमविद्येत्युक्तं स्वस्वापेक्षया च स्वस्वकारणं विद्येति। पुरुषस्य परिणामरूपं जगदुपादानत्वं तु प्रकृत्युपाधिकमेव कर्तृत्वादिवच्छ्रुतिस्मृत्योरुपासार्थमेवानूद्यते। अन्यथा 'अस्थूलमनण्वह्रस्वम्' (बृहदा० ३।८।८) इत्यादि श्रुतिविरोधापत्तेरिति मन्तव्यम्।

मायाशब्देन च प्रकृतिरेवोच्यते, मायां तु प्रकृतिं विद्याद् (श्वेताश्व० ४।१०) इति श्रुतौ, अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः (श्वेताश्व० ४।९), इति पूर्वप्रक्रान्त-मायायाः प्रकृतिस्वरूपतावचनात्।

सत्त्वं रजस्तम इति प्राकृतं तु गुणत्रयम्।
एतन्मयी च प्रकृतिर्माया या वैष्णवी श्रुता।
लोहितश्वेतकृष्णेति तस्यास्तादृग्बहुप्रजाः।

इत्यादिस्मृतिभ्यश्च। न तु ज्ञाननाश्या अविद्या मायाशब्दार्थो[2] नित्यत्वानुपपत्तेः। किञ्चाऽविद्याया द्रव्यत्वे शब्दमात्रभेदो गुणत्वे च तदाधारतया प्रकृतिसिद्धिः पुरुषस्य निर्गुणत्वादिभ्यः। अथ द्रव्यगुणकर्मविलक्षणैवास्माभिरविद्या वक्तव्येति चेन्न तादृक्पदार्थाप्रतीतेरुक्तत्वादिति (१।२४)॥६९॥

---

१. 'अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मि वै। सर्गप्रलयनिर्मुक्तां विद्यां वै पञ्चविंशकः' इति मुद्रितः पाठः।

२. द्र० 'अविद्यानादित्वं च 'प्रकृतिं पुरुषं चैव विद्धयनादी उभावपी'ति स्मृतौ (गीता) उक्तम्। प्रकृतिर्नाम माया। मायां तु प्रकृतिम् (श्वेताश्व०) इति श्रुतेः। मायाविद्ययोश्च एकत्वमवोचाम'। (वि० प्र० संग्रह, पृ० ४६)।

नन्वेवं चेत् प्रकृतिपुरुषाद्यनुमानप्रकारोऽस्ति, तर्हि सर्वेषामेव कथं विवेकमननं न जायते, तत्राह–

अधिकारित्रैविध्यान्न नियमः[1] ॥७०॥

श्रवणादाविव मननेऽप्यधिकारिणस्त्रिविधा मन्दमध्यमोत्तमा इत्यतो न सर्वेषामेव मनननियमः कुतर्कादिभिर्मन्दमध्यमयोर्बाधसत्प्रतिपक्षतासम्भवादित्यर्थः। मन्दैर्हि बौद्धाद्युक्तकुतर्कजातेनोक्तानुमानानि बाध्यन्ते। मध्यमैश्च बुद्धाद्युक्तैरेव विरुद्धासल्लिङ्गैः सत्प्रतिपक्षितानि क्रियन्ते। अत उत्तमाधिकारिणामेवैतादृशमननं भवतीति भावः ॥७०॥

प्रकृतेः स्वरूपं गुणसाम्यं प्रागेवोक्तम्, सूक्ष्मभूतादिकं च प्रसिद्धमेवास्तीति। अवशिष्टयोर्महदहङ्कारयोः स्वरूपमाह सूत्राभ्याम्—

महदाख्यमाद्यं कार्यं तन्मनः[2] ॥ ७१ ॥

महदाख्यमाद्यं कार्यं तन्मनो मननवृत्तिकम्। मननमत्र निश्चयस्तद्वृत्तिका बुद्धिरित्यर्थः।

यदेतद्विस्तृतं बीजं प्रधानपुरुषात्मकम्।
महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते ॥

---

१. अप्राकरणिकमिदं सूत्रम्। ६।२२ सूत्रमपि एतदनुरूपमेव।

२. महतो मनोनामत्वविषये हेतुरस्ति। मनःप्रधानत्वात् लिङ्स्य लिङ्गं (महत्, महदादिसूक्ष्मपर्यन्तो विकारो वा) मन इत्युच्यते। उक्तं च शंकरेण 'मनःप्रधानत्वाल् लिङ्गस्य मनो लिङ्गमित्युच्यते' (बृहदा० ४।४।६ भाष्य)। 'स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते' (शान्ति० २१९। ४०) इत्यनेनापि मनःशब्दप्रयोगस्य सार्थक्यं विज्ञायते। 'प्रतिबुद्धश्च सृजति मनः सदसदात्मकम्' (मनु० १।७४) इत्यस्य व्याख्याने मेधातिथिः 'महत्तत्त्वमेव मनः' इत्युक्त्वा 'मनो महान् मतिर्बुद्धिर्महत्तत्त्वं च कीर्त्यते' इति पुराणवचनमुदाजहार। 'प्रथमजो महान् सत्तामात्र इत्युच्यते— यथा महच्छब्दः सांख्यै सत्तामात्रेऽपि प्रथमजे प्रयुक्तः' इत्याह शंकरः (शारीरक १।४।७)। बुद्धि-मनो-लिङ्गादयः पर्याया महतः। "बुद्धिर्मनश्च लिङ्गं च महानक्षर एव च। पर्यायवाचकैः 'शब्दैस्तमाहुस्तत्त्वचिन्तकाः (वायु० १०२।२१); 'सत्तामात्रो महानग्रे सत्तामात्र-प्रकाशकः ॥ ९ मनो महांस्तु विज्ञेयमेकं तत् कारणं स्मृतम्। समुत्पन्नं लिङ्गमात्रं क्षेत्रज्ञाधिष्ठितं हितम् ॥ (लिङ्ग १।७०।९-१०); महतो मनोमहन्मतिब्रह्मेत्यादि-नाम्नां तात्पर्यमत्रैव दर्शितम् (१।७०।११-२७)। यः पदार्थः केनचिदाचार्येण महान् इत्युच्यते स एव अन्येन मनः-शब्देनोच्यते—इत्यप्यर्थो भवितुमर्हति सूत्रस्य; तुल० 'अन्येषां महति सर्वार्थोपलब्धिः, मनसि विन्ध्यवासिनः (युक्तिदी० २२ का०)।

इत्यादिवाक्येभ्यो बुद्धेरेवाद्यकार्यत्वावगमात्[1] ॥७१॥

चरमोऽहङ्कारः[2] ॥७२॥

तस्यानन्तरो यः सोऽहङ्करोतीत्यहङ्कारोऽभिमानवृत्तिक इत्यर्थः ॥७२॥

यतोऽभिमानवृत्तिकोऽहङ्कारोऽतस्तत्कार्यत्वमुत्तरेषामुपपन्नमित्याह—

तत्कार्यत्वमुत्तरेषाम्[3] ॥७३॥

सुगमम्। एवं त्रिसूत्रीं व्याख्याय पौनरुक्त्याशङ्काऽपास्ता ॥७३॥

नन्वेवं प्रकृतिः सर्गकारणमिति श्रुतिस्मृतिविरोध इत्याशङ्कायामाह—

आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ॥७४॥

पारम्पर्येऽपि साक्षादहेतुत्वेऽप्याद्यायाः प्रकृतेर्हेतुताऽहङ्कारादिषु महदादिद्वाराऽस्ति। यथा वैशेषिकमतेऽणूनां घटादिहेतुता द्व्यणुकादिद्वारैवेत्यर्थः। ७४॥

ननु प्रकृतिपुरुषयोरुभयोरेव नित्यत्वात् प्रकृतेरेव कारणत्वे किं नियामकं तत्राह—

पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥७५॥

द्वयोरेव पुम्प्रकृत्योरखिलकार्यपूर्वभावित्वेऽप्येकतरस्य पुरुषस्यापरिणामित्वेन कारणताहान्याऽन्यतरस्याः कारणत्वौचित्यमित्यर्थः[4]। पुरुषस्यापरिणामित्वे चेदं बीजम्। पुरुषस्य संहत्यकारित्वे परार्थत्वापत्त्याऽनवस्था। असंहत्यकारित्वे सर्वदा महदादिकार्यप्रसङ्गः। प्रकृतिद्वारा परिणामकल्पने च लाघवात् तस्या एव परिणामोऽस्तु, पुरुषे तु स्वामित्वेन स्रष्टृत्वोपचारो यथा योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते[5] तत्फलसुखदुःखभोक्तृत्वेन तत्स्वामित्वादिति।

किञ्च धर्मिग्राहकमानेन कारणतयैव प्रकृतेः सिद्धौ नान्यकारणाकाङ्क्षाऽस्ति। यथा धर्मिग्राहकप्रमाणेन द्रष्टृतया पुरुषसिद्धौ नान्यद्रष्ट्राकाङ्क्षेति, अपि च पुरुषस्य परिणामित्वे कदाचिच्चक्षुर्मनआदिवद् बन्ध्यत्वमपि स्यात्। तथाच विद्यमान-

१. महत्तत्त्वमिदमवैदिकमिति शंकराचार्यः। द्र० 'प्रधानाद् इतराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि न तानि वेदे लोके वा उपलभ्यन्ते' (शारीरक २।१।२)।

२. अन्त्यवाची चरमशब्दः अत्र अनन्तर-कार्यार्थे प्रयुक्त इति प्रतिभाति। शब्दस्यास्य तात्पर्यान्तरं मृग्यम्।

३. उत्तरेषाम्=एकादशेन्द्रियाणां पञ्चानां तन्मात्राणां च (वृत्तिः); अर्थोऽयं भाष्यकारस्यापि संमतः, यद्यपि कण्ठतः सोऽर्थो नोक्तः।

४. प्रकृतिरुपादानकारणं पुरुषस्तु सर्वेषां व्यक्तभावानां हेतुः। व्यक्तं हेतुमत्; अव्यक्तं त्वह्म अहेतुमान् इति वेदितव्यम्।

५. अत्रेदं व्यासभाष्यवचनं द्र०—ते (क्लेशकर्मादयः) च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति। यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते (१।२४)।

मपि सुखदुःखादिकं न ज्ञायेत; ततश्चाहं सुखी न वेत्यादिसंशयापत्तिः। अतः सदा प्रकाशस्वरूपत्वानपायेन पुरुषस्यापरिणामित्वं सिध्यति। तदुक्तं योगसूत्रेण—सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वादिति (४।१८)। तद्भाष्येण च—सदाज्ञातविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयतीति[1] (२।२०)। सदा प्रकाशस्वरूपत्वेऽपि यथा नैकदा विश्वप्रकाशत्वं तथा वक्ष्यामः ॥७५॥

प्रकृतेर्युगपत्कारणत्वोपपत्तये विभुत्वमपि प्रतिपादयति—

परिच्छिन्नं न सर्वोपादानम्[2] ॥७६॥

सर्वोपादानं प्रधानं न परिच्छिन्नं व्यापकमित्यर्थः[3]। सर्वोपादानत्वमत्र हेतुगर्भविशेषणम्, परिच्छिन्ने तदसम्भवादिति। ननु प्रकृतेरपरिच्छिन्नत्वं नोपपद्यते, प्रकृति हि सत्त्वादिगुणत्रयादतिरिक्ता न भवति 'सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादि' त्यागामिसूत्रात् (६।२०), योगसूत्रभाष्याभ्यां स्पष्टमवधृतत्वाच्च (द्र० २।१८-१९)। तेषां च सत्त्वादीनां लघुत्वचलत्वगुरुत्वादयो धर्मा वक्ष्यमाणा विभुत्वे सति विरुध्यन्ते, सृष्ट्यादिहेतवः संयोगविभागादयश्च नोपपद्यन्त इति।

अत्रोच्यते—परिच्छिन्नत्वमत्र दैशिकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वं तदभावश्च व्यापकत्वम्; तथा च जगत्कारणत्वस्य दैशिकाभावप्रतियोगितानवच्छेदकत्वमेवेति प्रकृतेर्व्यापकत्वमिति पर्यवसितम्। यथा प्राणस्य स्थावरजङ्गमाद्यखिलशरीरव्यापकत्वं प्राणत्वसामान्येनोच्यते, प्राणव्यक्तीनां सर्वदेहासम्बन्धात् तद्वत् प्रकृतेर्व्यापकत्वमिति। प्रकृतेरक्रियैकत्वादिकं च साधर्म्यवैधर्म्यसूत्रे (१।१२८) प्रतिपादयिष्यामः ॥७६॥

न केवलं सर्वोपादानत्वात्, अपि तु—

तदुत्पत्तिश्रुतेश्च ॥७७॥

तेषां परिच्छिन्नानामुत्पत्तिश्रवणाच्च। अथ यदल्पं तन्मर्त्यम् (छान्दोग्य

---

१. सदाज्ञातत्वं तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वम् अनुमापयतीति भाष्य-(४।१८) वाक्यम्। अन्यत्रोक्तम्—ज्ञाताज्ञातविषयत्वात् परिणामिनी हि बुद्धिः, तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञाताश्चाज्ञाताश्चेति परिणामित्वं दर्शयति। सदाज्ञातविषयत्वं तु पुरुषस्य अपरिणामित्वं परिदीपयति (२।२०)।

२. उद्धृतमिदं शिवार्कमणिदीपिकायाम्-प्रधानकारणवादे पक्षपातहेतुं 'परिच्छिन्नत्वात् न सर्वोपादानम्' इत्यादिकापिलसूत्रोक्तं सूचयन् पूर्वपक्षयति प्रधानेति (ब्र० सू० २।२।१)।

३. कार्यं खलु परिच्छिन्नं स्थूलं च भवति, तच्च कारणेन सूक्ष्मेण अपरिच्छिन्नेन व्याप्तं भवति। उक्तं च शंकरेण—'यत् कार्यं परिच्छिन्नं स्थूलं कारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति दृष्टम् (३।६।१)। आह गिरिः—'यत् कार्यं तत् कारणेन व्याप्तं यत् परिच्छिन्नं तद् व्यापकेन व्याप्तं, यच्च स्थूलं तत् सूक्ष्मेण व्याप्तमिति त्रिप्रकारा व्याप्तिः' इति।

७।२४।१) इत्यादिश्रुतिषु करणधर्मकत्वेन परिच्छिन्नस्योत्पत्त्यवगमात्। श्रुत्यन्तरैम्यश्चेत्यर्थः ॥७७॥

इदानीं प्रकृतिकारणतोपपत्तयेऽभावादि-कारणतां निरस्यति—

नाऽवस्तुनो वस्तुसिद्धिः[1] ॥७८॥

अवस्तुनोऽभावान्न वस्तुसिद्धिर्भावोत्पत्तिः। शशशृङ्गाज्जगदुत्पत्त्या मोक्षाद्यनुपपत्तेः, तददर्शनाच्चेत्यर्थः ॥७८॥

ननु जगदप्यवस्त्वेवास्तु स्वप्नादिवदिति तत्राह—

अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम्[2] ॥७९॥

स्वप्नपदार्थस्येव प्रपञ्चस्य बाधः श्रुत्यादिप्रमाणैर्नास्ति। तथा शङ्खपीतिमादेरिव दुष्टेन्द्रियादिजन्यत्वमपि नास्ति, दोषकल्पने प्रमाणाभावादित्यतो न कार्यस्यावस्तुत्वमित्यर्थः।

ननु 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि' त्यादिश्रुतिभिरेव (छान्दोग्य ६।१।४) प्रपञ्चस्य बाधो बाधाचाविद्याख्यदोषोऽपि स्वकारणेऽस्तीति चेन्न। मृद्दृष्टान्तसिद्धयन्यथानुपपत्त्या स्वकारणापेक्षयाऽस्थैर्यरूपासत्त्वपरत्वात् तादृग्वाक्यानामन्यथासृष्ट्यादिवाक्यविरोधाच्च।

किञ्च श्रुत्या प्रपञ्चबाधे आत्माश्रयः स्वस्यापि प्रपञ्चान्तर्गततया बाधेन तद्बोधितार्थे पुनः संशयापत्तिश्चेति। अत एव बाधाबाधादिवैधर्म्यादुपलम्भाच्च जाग्रत्प्रपञ्चस्य स्वप्नखपुष्पादितुल्यत्वमतिनिर्बन्धेन प्रत्याचष्टे वेदान्तसूत्रद्वयम् 'वैधर्म्याच्च न स्वप्नादिवदि'ति, 'उपलब्धेश्चे'ति च (२।२।२९-३०)। नेति नेतीत्येवंविधवाक्यानि[3] (बृहदा० २।३।६) च विवेकपराण्येव न तु स्वरूपतः प्रपञ्चनिषेधपराणि 'प्रकृतैतावत्त्वं हि प्रतिषेधती'ति वेदान्तसूत्रात् (३।२।२२)। एवमन्यान्यपि वाक्यानि ब्रह्ममीमांसाभाष्येऽस्माभिर्व्याख्यातानि[4] ॥७९॥

नावस्तुनो वस्तुसिद्धिरिति (१।७८) यदुक्तं तत्र हेतुमाह—

भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तरां तत्सिद्धिः ॥८०॥

भावे कारणस्य सद्रूपत्वे तद्योगेन सत्तायोगेन कार्यसिद्धिर्घटेत कारणस्याभाव-

---

१. अभावाद् भावोत्पत्तिर्भवतीति मतस्य प्रतिपादनं खण्डनं न न्यायसूत्रे दृश्यते (४।१।१४-१८)। अभाव उपादानकारणं च भवितुमर्हतीति नैयायिकाः, स तु निमित्तकारणं स्यादेव, अतएव पाकजन्याभिनवरूपं प्रति पूर्वरूपविनाशो निमित्तकारणमिति स्वीक्रियते एव (द्र० न्या० वा० ता० टी० ४।१।१७-१८)।

२. सांख्यमते सर्वं त्रैगुणिकं वस्तु प्रतिक्षणं परिणामि, न स्वेन रूपेण क्षणमपि अवस्थातुमीहते। एकस्यापेक्षयापरस्यापेक्षिकी नित्यतास्त्येव; घटापेक्षया मृत्तिकाया नित्यत्वम्, पृथ्वीभूतापेक्षया घटस्यानित्यत्वमिति सांख्यीया दृष्टिः। न खलु अनात्मवस्तुनः अत्यन्तनाशः संभवति इति।

३. अथात आदेशो नेति नेति। आदेशः = निर्देशो ब्रह्मणः (शांकरभाष्य)।

४. द्र० विज्ञानामृतभाष्यम् (३।१—२ पादयोः यथास्थानम्)।

ऽसद्रूपत्वे तु तदभावात् कार्यस्याप्यसत्त्वात् कथं वस्तुभूतकार्यसिद्धिः, कारण-स्वरूपस्यैव कार्यस्यौचित्यादित्यर्थः ॥८०॥

ननु तथापि कर्मैवावश्यकत्वाज्जगत्कारणमस्तु किं प्रधानकल्पनयेति तत्राप्याह—

न कर्मण उपादानत्वायोगात्[1] ॥८१॥

कर्मणोऽपि न वस्तुसिद्धिर्निमित्तकारणस्य कर्मणो न मूलकारणत्वं गुणानां द्रव्योपादानत्वायोगात् । कल्पना हि दृष्टानुसारेणैव भवति । वैशेषिकोक्तगुणानां चोपादानत्वं न क्वापि दृष्टमित्यर्थः । अत्र कर्मशब्दोऽविद्यादीनामप्युपलक्षको गुणत्वाविशेषेण तेषामप्युपादानत्वायोगात् । चक्षुषः पटलादिवदविद्यायाश्चेतनगत-द्रव्यत्वे तु प्रधानस्य संज्ञामात्रभेद इति ॥८१॥

तदेवं परिणामित्वापरिणामित्व-परार्थत्वापरार्थत्वाभ्यां पुम्प्रकृत्योर्विवेको दर्शितः[2] । इदानीं विवेकज्ञानस्यैवाविवेकनाशद्वारा परमपुरुषार्थहेतुत्वम् न तु तत्र वैदिककर्मणां साक्षाद्धेतुताऽस्तीति यत् प्रागुक्तम्'विशेषश्चोभयो'रिति सूत्रेण (१।६) तदेव प्रपञ्चयति पञ्चभिः सूत्रैः—

नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम्[3] ॥८२॥

अपिशब्देन 'न दृष्टात् तत्सिद्धिरि'ति (१।२) प्रागुक्तदृष्टसमुच्चयः । गुरोरनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितो यागादिरानुश्रविकं कर्म तस्मादपि न पूर्वोक्तपुरुषार्थसिद्धिः । यतः कर्मसाध्यत्वेन पुनरावृत्तिसम्बन्धादत्यन्तपुरुषार्थत्वाभाव इत्यर्थः । कर्मसाध्यस्य चानित्यत्वे श्रुतिः—तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते (छान्दोग्य ८।१।६) इति ।

न कर्मणान्यधर्मत्वादिति सूत्रेण (१।१६) पूर्वं कर्मणा बन्धो निराकृतः, इदानीं च मोक्षो निराक्रियत इत्यपौनरुक्त्यम् । अन्यधर्मत्वेन पूर्वोक्तहेतुना बन्ध इव मोक्षेऽपि कर्मणो हेतुत्वं निराकृतप्रायमिति पुनराशङ्कैव नोदेतीति चेन्न; बन्धहेतुत्वेनाविवेके सिद्धे तत्पुरुषीयाविवेकजत्वेन कर्मणां तदीयत्वव्यवस्थो-पपत्तेरिति ॥८२॥

---

१. द्र० 'कारणभावाच्च' इति सांख्यकारिकागता युक्तिः । 'कार्यस्य कारणात्मकत्वात् । न हि कारणाद् भिन्नं कार्यम्; कारणं च सद् इति कथं तदभिन्नं कार्यमसद् भवेत् ? (तत्त्वकौमुदी) ।

२. आत्मानात्मविवेकज्ञानस्य स्वरूपं विस्तरेण भिक्षुणा सांख्यसारे प्रत्यपादि (परि० २) ।

३. तत्सिद्धिरित्यत्र—'तत्-पदेन पुरुषार्थस्य ( अत्यन्तपुरुषार्थस्येत्यर्थः ) ग्रहण-मिति भिक्षुः; मोक्षस्येति वृत्तिः । अत्रोभयोरैकमत्यमेव । परन्तु पदमिदम-नुवृत्तिबलेन न लब्धुं शक्यते, अनेकप्रकरणैर्व्यवधानात् । सूत्रस्यास्यायमेवार्थः समीचीन इत्यत्र न संशयलेशोऽपि । अत इदं स्वीकरणीयं यद् अस्मिन् ग्रन्थे सूत्रोपस्थापनक्रमः न सर्वत्र न्यायोपेतः ।

नन्वेवं पञ्चाग्निविद्यारूपेणोपासनाख्यकर्मणा[1] तीर्थमरणादिकर्मणा च ब्रह्मलोकं गतस्यानावृत्तिश्रुतिः कथमुपपद्यते तत्राह—

तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥८३॥

तत्रानुश्रविककर्मणि ब्रह्मलोकगतानां याऽनावृत्तिश्रुतिः सा तत्रैव प्राप्तविवेकस्य मन्तव्या। अन्यथा हि ब्रह्मलोकादप्यावृत्तिं प्रतिपादयतां वाक्यान्तराणां विरोध इत्यर्थः। तथापि साऽप्यनावृत्तिर्विवेकज्ञानस्यैव फलं न तु साक्षादेव कर्मण इति। एतच्च षष्ठाध्याये (१२-१६ सू०) प्रपञ्चयिष्यति। ब्रह्ममीमांसाभाष्ये (अ० ४, पा० ४) च तयोर्वाक्यान्युदाहृत्यास्माभिर्व्याख्यातानि ॥८३॥

कर्मणस्तु फलं तदाह—

दुःखाद् दुःखं जलाभिषेकवन्न जाड्यविमोकः ॥८४॥

आनुश्रविकात् तु हिंसादिदोषेण दुःखात्मकभोगेन च दुःखाद् दुःखं दुःखधारेव भवति न तु जाड्यविमोकोऽविवेकनिवृत्तिदुःखविमोकस्त्वतिदूर एव तिष्ठति। यथा जाड्यार्त्तस्य जलाभिषेकाद् दुःखानिवृत्तिरेव भवति न तु जाड्यविमोक्ष इत्यर्थः। तदुक्तम्—

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम्।
भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥ (भाग० १।८।५२) इति।

श्रूयते च ब्रह्मलोकस्थानां विष्णुपार्षदानामपि जयविजयादीनां पुना राक्षसयोनौ दुःखधारेति (भाग० ३।१५-१६)। कारिकया चेदमुक्तम्—दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः (२)॥ इति ॥ ८४ ॥

ननु निष्कामादन्तर्यागजपादिरूपकर्मणो न दुःखं प्रत्युत मोक्षः फलं श्रूयत इति तत्राह—

काम्येऽकाम्येऽपि साध्यत्वाविशेषात्[2] ॥८५॥

काम्येऽकाम्ये च कर्मणि दुःखाद् दुःखं भवति, कुतः साध्यत्वाविशेषात्। कर्मसाध्यस्य सत्त्वशुद्धिद्वारकज्ञानस्यापि त्रिगुणात्मकतया दुःखात्मकत्वादित्यर्थः। न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरित्यादिश्रुतिभ्यश्च (तै० आ० ११।१०) कर्मणो न साक्षान्मोक्षः फलमिति भावः। त्यागेनाभिमानत्यागेन। एके केचिदेवामृतत्वमानशुः प्राप्तवन्तो न सर्वे। अभिमानत्यागस्य तत्त्वज्ञानजन्यतया दुर्लभत्वादित्यर्थः ॥८५॥

ननु भवन्मतेऽपि कथं ज्ञानसाध्यस्य न दुःखत्वं साध्यत्वाविशेषादिति; तत्राह—

१. पञ्चाग्निविद्या छान्दोग्ये ५।४-६ प्रपञ्चिता।

२. 'साध्यत्वाविशेषात्' इत्यस्य भिक्षुदर्शितोऽर्थः न प्रकरणत उपलभ्यत इति विज्ञेयम्। वृत्तिमते—'काम्याकाम्येऽपि' इति पाठः। यथा काम्ये तथा अकाम्येऽपि कर्मणि मोक्षे कर्मसाध्यत्वस्य अविशेषात् पुनरपि दुःखं स्यात् मोक्षस्य विनाशित्वाद् इति सूत्रतात्पर्यं वृत्तिमते।

निजमु[1]क्तस्य बन्धध्वंसमात्रं परं न समानत्वम्[2] ॥८६॥

निजमुक्तस्य स्वभावमुक्तस्याविद्याख्यकारणनाशेन यथोक्तबन्धनिवृत्तिमात्रं परमात्यन्तिकं विवेकज्ञानस्य फलम् ध्वंसश्चाविनाशी न तु कर्मण इव सुखादिकं भावरूपं कार्यं येन नाशितया दुःखदं तत् स्यात्। कर्मणश्च दृष्टकारणं विना न साक्षादेवाविद्यानाशकत्वं घटत इति। अतो ज्ञानस्याक्षयत्वान्न समानत्वं ज्ञान-कर्मणोरित्यर्थः। ज्ञानान्न पुनरावृत्तिः सम्भवति, अविवेकाख्यकारणनाशादिति सिद्धम्। तदेवं विवेकज्ञानमेव साक्षाज् ज्ञानोपाय इत्युक्तम् ॥६८॥

इदानीं विवेकज्ञानस्यापि साक्षादुपायाः प्रमाणानि परीक्ष्यन्ते। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः (बृहदा० २।४।५; ४।५।६) इत्यादिश्रुतिभिर्हि प्रमाणत्रयेणात्मज्ञानमित्यवगम्यते। कर्मादिकं त्वन्यन्मननश्रवणादिप्रमाणानां शुद्धयादि-करमेवेति।

[3]द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा तत्साधकतमं यत् तत् त्रिविधं प्रमाणम्[4] ॥८७॥

असन्निकृष्ट. प्रमातर्यनारूढाऽनधिगत इति यावत्। एवंभूतस्यार्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा सा च द्वयोर्बुद्धि-पुरुषयोरुभयोरेव धर्मो भवतु। किं वैकतरमात्रस्योभययैव तस्याः प्रमाया यत् साधकतमं फलायोगव्यव-च्छिन्नं कारणं तच्च त्रिविधं वक्ष्यमाणरूपेणेत्यर्थः। स्मृतिव्यावर्तनायान-धिगतेति। भ्रमव्यावर्तनाय वस्त्विति। संशयव्यावर्तनाय त्ववधारणमिति।

अत्र यदि प्रमारूपं फलं पुरुषनिष्ठमात्रमुच्यते तदा बुद्धिवृत्तिरेव प्रमाणम्। यदि च बुद्धिनिष्ठमात्रमुच्यते तदा तूक्तेन्द्रियसन्निकर्षादिरेव प्रमाणम्। पुरुषस्तु प्रमासाक्ष्येव न प्रमातेति। यदि च पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते[5]

---

१. तुल० मुक्तिरन्तरायध्वस्तेर्न परः (६।२०)।

२. 'न समानत्वम्' इत्यस्य 'ज्ञानकर्मणोरिति शेषः' इति भाष्यम्। शेषोऽयं न प्रकरणलब्धो न वा सूत्रस्वारस्यलब्ध इति विज्ञेयम्। न समानत्वं वादि-प्रतिवादिपक्षयोः इति वृत्तिमतम्। मोक्षः प्रकृतिपुरुषविवेकजन्य इत्येकः, निष्कामकर्मजन्य इत्यपरः। सूत्रीयमतमन्यत्रापि दृश्यते। 'अविद्यास्तमयो मोक्षः' (ब्रह्मसिद्धि) इति। तुल० 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः' इति (भागवत २।१०।६)।

३. त्रिविधमिति क्वचिन्न पठ्यते। सूत्रमिदं योगवार्त्तिके उद्धृतम्—'प्रमाद्वयं च सांख्ये सूत्रितम्–द्वयोरेकतरस्य·······' (१।७)।

४. द्वयोः = बुद्धिपुरुषयोरिति भाष्यम्, इन्द्रियार्थयोरिति वृत्तिः। द्वयोरेकतरस्य वा प्रमायामुपयोगः, प्रमा चासन्निकृष्टार्थपरिच्छित्तिः—इति वृत्तिमतम्। अन-धिगतबोधरूपा प्रमा द्वयोर्बुद्धिपुरुषयोः, पुरुषस्य बुद्धेर्वा धर्मः-इति भाष्यमतम्।

५. द्र० ननु रूपादिषु चक्षुरादीनामेव करणत्वं श्रुतिस्मृत्योरवगम्यत इति चेत्, सत्यम्, किन्तु बुद्धिवृत्त्याख्यं प्रमान्तरं प्रत्येव तेषां करणत्वं न तु पौरुषेय-बोधरूपां मुख्यप्रमां प्रति। प्रमाद्वयं च सांख्ये (१।८७) सूत्रितम् (योगवा० १।७)।

तदा तूक्तमुभयमेव प्रमाभेदेन प्रमाणं भवति। चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैव सर्वथेति भावः।

पातञ्जलभाष्ये तु व्यासदेवैः पुरुषनिष्ठबोधः प्रमेत्युक्तः[1] पुरुषार्थमेव करणानां प्रवृत्त्या फलस्य पुरुषनिष्ठताया एवौचित्यात्। अतोऽत्रापि स एव मुख्यः सिद्धान्तः। न च पुरुषबोधस्वरूपस्य नित्यतया कथं फलत्वमिति वाच्यम्। केवलस्य नित्यत्वेऽप्यर्थोपरक्तस्य कार्यत्वात्। पुरुषार्थोपरागस्यैव वा फलत्वादिति।

अत्रेयं प्रक्रिया। इन्द्रियप्रणालिकयाऽर्थसन्निकर्षेण लिङ्गज्ञानादिना वादौ बुद्धेरर्थाकारा वृत्तिर्जायते[2], तत्र चेन्द्रियसन्निकर्षजा प्रत्यक्षा वृत्तिरिन्द्रियविशिष्ट-बुद्ध्याश्रिता नयनादिगतपित्तादिदोषैः पित्ताद्याकारवृत्त्युदयादिति विशेषः। सा च वृत्तिरर्थोपरक्ता प्रतिबिम्बरूपेण पुरुषारूढा सती भासते, पुरुषस्यापरिणामितया बुद्धिवत् स्वतोऽर्थाकारत्वासम्भवात्, अर्थाकारताया एव चार्थग्रहणत्वात्, अन्यस्य दुर्वचत्वादिति। तदेतद्वक्ष्यति—'जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः' इति (६।२८)। योगसूत्रं च – 'वृत्तिसारूप्यमितरत्रेति' (१।४) स्मृतिरपि[3]—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ (योगवासिष्ठ, उपशम ६१।११३)

इति। योगभाष्यञ्च—बुद्धेः प्रतिसंवेदी पुरुष इति (२।२०) प्रतिध्वनिवत् संवेदनप्रतिबिम्बस्तस्याश्रय इत्यर्थः[4]।

एतेन पुरुषाणां कूटस्थविभुचिद्रूपत्वेऽपि न सर्वदा सर्वभासनप्रसङ्गः। असङ्गतया स्वतोऽर्थाकारत्वाभावात्। अर्थाकारतां बिना च संयोगमात्रेणार्थ-ग्रहणस्यातीन्द्रियादिस्थले बुद्धावदृष्टत्वादिति। पुरुषे च स्वस्वबुद्धिवृत्तीनामेव प्रतिबिम्बार्पणसामर्थ्यमिति फलबलात् कल्प्यते[5]। यथा रूपवतामेव जलादिषु

---

१. प्रत्यक्षानुमानागमाः प्रमाणानि (१।७) इत्यत्र भाष्यम्—इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषाव-धारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्; फलम् अविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः इति। विषयेऽस्मिन् १।४ भाष्यमपि द्रष्टव्यम्।

२. यथाह वाचस्पतिः—उपात्तविषयाणाम् इन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति च आख्यायते (तत्त्वकौमुदी ५)।

३. अन्नपूर्णोपनिषद् ४।७१; द्र० विज्ञानामृतभाष्यम् (पृ० ७४-७५)।

४. पुरुष-प्रतिसंवेदित्वविषये योगवार्त्तिकं (४।२२) द्र०।

५. सांख्यीय-प्रतिबिम्बसिद्धान्तस्य विशदीकरणं वाक्यपदीय—(२।३१) भर्तृहरि-टीकायां द्रष्टव्यम्। अयं हि अत्रत्यो ग्रन्थः—"अन्ये तु संक्रान्त-विषयरूपाया बुद्धेरात्मनि समवायाद् बुद्धिरूपनिवेशेन तत्तद्रूपतामिवापन्ने बोधात्मके पुरुषे पुरुषार्थस्य प्रसिद्धिं मन्यन्ते। प्रकाशस्वभावया बुद्धया चितिस्वरूपस्यार्थस्य प्रतिबिम्बकयोगेन उपग्रहे संभवति प्राप्तविषयरूपविपर्यासायाम् उपगृहीत-पुरुषरूपायां बुद्धौ भोग्यभोक्तृशक्त्योः अत्यन्तविविक्तयोरत्यन्तासंकीर्णयोः अविभागप्राप्ताविव सत्यां विभागः प्रकल्पते"। अत्र 'भोगः प्रकल्पते' इत्येव पाठः साधुः स्यादिति प्रतिभाति।

प्रतिबिम्बनसामर्थ्यं नेतरस्येति। रूपवत्त्वं च न सामान्यतः प्रतिबिम्बप्रयोजकं शब्दस्यापि प्रतिध्वनिरूपप्रतिबिम्बदर्शनात्। न च शब्दजन्यं शब्दान्तरमेव प्रतिध्वनिरिति वाच्यं स्फटिकलौहित्यादेरपि जपासन्निकर्षजन्यतापत्त्या प्रतिबिम्बमिथ्यात्वसिद्धान्तक्षतेरिति। प्रतिबिम्बश्च बुद्धेरेव परिणामविशेषो बिम्बाकारो जलादिगत इति मन्तव्यम्।

केचित् तु वृत्तौ प्रतिबिम्बितं सदेव चैतन्यं वृत्तिं प्रकाशयति तथा वृत्तिगतप्रतिबिम्ब एव वृत्तौ चैतन्यविषयता न तु चैतन्ये वृत्तिप्रतिबिम्बोऽस्तीत्याहुः। तदसत्; उपदर्शितशास्त्रविरोधेन केवलतर्कस्याप्रयोजकत्वात्। विनिगमनाविरहेण वृत्तिचैतन्ययोरन्योन्यविषयताख्यसम्बन्धरूपतयाऽन्योन्यस्मिन्नन्योन्यप्रतिम्बिसिद्धेश्च[1]। बाह्यस्थलेऽर्थाकारताया एव विषयतारूपत्वसिद्ध्याऽऽन्तरेऽपि तत्तदर्थाकारताया एव विषयतात्वौचित्याच्चेति।

ये तु तार्किका ज्ञानस्य विषयतां नेच्छन्ति तन्मते ज्ञानव्यक्तीनामनुगमकधर्माभावेन घटविषयकं पटविषयकं ज्ञानमित्याद्यनुगतव्यवहारानुपपत्तिः।

केचित् तु तार्किका अनयैवानुपपत्त्या विषयतामतिरिक्तपदार्थमाहुः[2]। तदप्यसत्; अनुभूयमानामर्थाकारतां विहाय विषयतान्तरकल्पने गौरवादिति। ननु तथापि स्वस्वोपाधिवृत्तिरूपैव वृत्तिचैतन्ययोरन्योन्यविषयताऽस्तु स्वोपाधिवृत्तित्वेनैवानुगमाद् अलमाकाराख्यप्रतिबिम्बद्वयेनेति चेन्न; प्रतिबिम्बं विना स्वत्वस्यापि दुर्वचत्वात्। स्वत्वं हि स्वभुक्तवृत्तिवासनावत्त्वम्। भोगश्च ज्ञानम्[3], तथा च विषयतालक्षणस्य विषयसामग्रीघटितत्वेनात्माश्रयः। तस्मादचैतन्यचैतन्ययोरन्योन्यविषयतारूपोऽन्योन्यस्मिन्नन्योन्यप्रतिबिम्बः सिद्धः। अधिकन्तु योगवार्तिके (२।२०) द्रष्टव्यमिति दिक्।

---

१. 'बुद्धिवृत्तिमविशिष्टाम्' इत्यस्य व्याख्याने भिक्षुराह—'अविशिष्टता च परस्परं प्रतिबिम्बवद् उभयोरेव विषयाकारत्वं चेतनसाम्यम इत्युक्तम्' (योगवा० ४।२२)। वादमहार्णवोऽप्याह—बुद्धिदर्पणसंक्रान्तमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे पुंसि अध्यारोहति तदेव भोक्तृत्वमस्य नत्वात्मनो विकारापत्तिरिति (स्याद्वादमञ्जरी' पृ० ११६)।

२. विषयता च विषयाकार, प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः' (न्यायसिद्धान्तमञ्जरी, पृ० १६)। तुल० 'नव्यास्तु विषयत्वं पदार्थान्तरमेव, न तु स्वरूपसम्बन्धविशेषः' (विषयतावाद, पृ० १)।

३. भोगः खलु ज्ञानरूप इत्यत्र इमानि व्यासभाष्यवचांसि द्रष्टव्यानि—दृश्यस्योपलब्धिर्भोगः (२।२३); इष्टानिष्टगुणस्वरूपावधारणमविभागापन्नं भोगः (२। १६) इति च। सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोग इत्याह पतञ्जलिः (३।३५)।

अत्रायं प्रमात्रादिविभागः—

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव न ।
प्रमाऽर्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते ।
साक्षाद्दर्शनरूपं च साक्षित्वं वक्ष्यति स्वयम् ॥
अतः स्यात् कारणाभावाद् वृत्तेः साक्ष्येव चेतनः ।
विष्ण्वादेः सर्वसाक्षित्वं गौणं लिङ्गाद्यभावतः[1] ॥इति॥८७॥

ननु—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ (गीता १३।३३)

इत्यादिवाक्येषूपमानादि प्रकृतिपुरुषविवेके प्रमाणमुपन्यस्तं तत् कथमुच्यते त्रिविधमिति; तत्राह—

**तत्सिद्धौ[2] सर्वसिद्धेर्नाधिक्यसिद्धिः ॥८८॥**

त्रिविधप्रमाणासिद्धौ च सर्वस्यार्थस्य सिद्धेर्न प्रमाणाधिक्यं सिद्ध्यति गौरवादित्यर्थः । अतएव मनुनापि प्रमाणत्रयमेवोपन्यस्तम्—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ (मनु १२।१०५)

उपमानैतिह्यादीनां चानुमानशब्दयोः प्रवेशः । अनुपलब्ध्यादीनां च प्रत्यक्षे प्रवेश इति । उक्तवाक्ये चेदमनुमानमभिप्रेतम्—आपादतलमस्तकं कृत्स्नं स्वव्यतिरिक्तेनैकेन प्रकाश्यं स्वयमप्रकाशत्वात् त्रैलोक्यवदिति । तेजश्चैतन्यसाधारणं च प्रकाशत्वमखण्डोपाधिः प्रकाशव्यवहारनियामकतया सिद्ध इति[3] ॥८८॥

पुरुषनिष्ठा प्रमेति मुख्यसिद्धान्तमाश्रित्य प्रमाणानां विशेषलक्षणानि वक्तुमुपक्रमते—

**यत् सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम्[4] ॥८९॥**

---

१. इमाः कारिकाः विज्ञानामृतभाष्ये (पृ९०) योगवार्त्तिके (१।७) च दृश्यन्ते । पाठाधिक्यं पाठभेदाश्च अवलोक्यन्ते । 'वृत्तयः साक्षिभास्याः स्युःकरणस्यानपेक्षणात्' इत्यर्धम् अत्र सांख्यभाष्ये न पठ्यते; साक्षित्वं सांख्यसूत्रितमिति (साक्षित्वं वक्ष्यति स्वयम् इतिस्थले) योगवार्त्तिके पठ्यते ।

२. त्रिविधं प्रमाणम् ततसिद्धौ इति वृत्त्यनुसारो पाठः ।

३. यः पदार्थः केनापि विशेषणेनाविशेषितः सन् स्वरूपतः विशिष्टबुद्धेः (सविकल्पज्ञानस्य) विषयो (प्रकारो वा विशेषणं वा) भवति स एव अखण्डोपाधिरित्युच्यते ।

४. विज्ञानं बुद्धिवृत्ति रेव प्रत्यक्षं प्रमाणमिति सांख्योया दृष्टिः । यत्संबन्धसिद्धमिति वृत्त्यनुसारी पाठः । वृत्तिमते 'इन्द्रियार्थसन्निकर्षार्थकेन्द्रियसंबन्धविषयाकारतापन्नवृत्तित्वं' प्रत्यक्षप्रमाणस्य लक्षणम् इति विज्ञेयम् । 'स्वार्थसन्निकर्षजन्याकारस्याश्रयो वृत्तिः' खलु प्रत्यक्षप्रमाणमिति भाष्यकारस्य तात्पर्यम् ।

सम्बद्धं भवत् सम्बद्धवस्त्वाकारधारि भवति यद्विज्ञानं बुद्धिवृत्तिस्तत्प्रत्यक्षं प्रमाणमित्यर्थः। अत्र सदित्यन्तं हेतुगर्भविशेषणम्। तथा च स्वार्थसन्निकर्षजन्याकारस्याश्रयो वृत्तिः प्रत्यक्षं प्रमाणमिति निष्कर्षः। वृत्तिः सम्बन्धार्थं सर्पतीत्यागामिसूत्रात् (५।१०७) न वृत्तेः सन्निकर्षजन्यत्वमित्याकाराश्रयग्रहणम्। चक्षुरादिद्वारकबुद्धिवृत्तिश्च प्रदीपस्य शिखातुल्या बाह्यार्थसन्निकर्षानन्तरमेव तदाकारोल्लेखिनी भवतीति नासम्भवः ॥८९॥

ननु योगिनामतीतानागतव्यवहितवस्तु-प्रत्यक्षेऽव्याप्तिः सम्बद्धवस्त्वाकाराभावादित्याशङ्क्य तस्यालक्ष्यत्वेन समाधत्ते—

**योगिनामबाह्यप्रत्यक्षत्वान्न दोषः[1] ॥ ९० ॥**

ऐन्द्रियकप्रत्यक्षमेवात्र लक्ष्यं योगिनश्चाबाह्यप्रत्यक्षकाः। अतो न दोषो न तत्प्रत्यक्षेऽव्याप्तिरित्यर्थः ॥ ९० ॥

वास्तवं समाधानमाह—

**लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः[2] ॥ ९१ ॥**

अथवा तदपि लक्ष्यमेव तथापि न दोषो नाव्याप्तिः। यतो लीनवस्तुषु लब्धयोगजधर्मजन्यातिशयस्य योगिचित्तस्य सम्बन्धो घटत इत्यर्थः। अत्र लीनशब्दः पराभिप्रेतासन्निकृष्टवाची, सत्कार्यवादिनां ह्यतीतादिकमपि स्वरूपतोऽस्तीति[3] तत्सम्बन्धः सम्भवेदिति व्यवहितविप्रकृष्टेषु सम्बन्धहेतुविधया लब्धातिशयेति विशेषणम्। अतिशयश्च व्यापकत्वं वृत्तिप्रतिबन्धकतमोनिवृत्त्यादिश्चेति।

इदं चात्रावधेयम्। यत्सम्बद्धं सदिति पूर्वसूत्रे (८९ सू०) बुद्धेरर्थसन्निकर्षस्यैव प्रत्यक्षहेतुतालाभात् प्रत्यक्षसामान्ये बाह्यार्थसाधारणे बुद्ध्यर्थसन्निकर्ष एव कारणम्। इन्द्रियसन्निकर्षास्तु चाक्षुषादिप्रत्यक्षेषु विशिष्यैव कारणानि।

नन्वेवमिन्द्रियसन्निकर्ष-योगजधर्माद्यभावेऽपि बुद्ध्या बाह्यार्थप्रत्यक्षापत्तिः। मैवम्; तमःप्रतिबन्धेन तदानीं बुद्धिसत्त्वस्य वृत्त्यसम्भवात्। तच्च तमः कदाचिदर्थेन्द्रिययोः सन्निकर्षेण कदाचिच्च योगजधर्मेणापसार्यते, अञ्जनसंयोगेन नयनमालिन्यवत्। न चैवं 'तद्धेतोरेव तदस्त्विति' न्यायेनेन्द्रिय-सन्निकर्षादेरेव बाह्यार्थप्रत्यक्षसामान्ये हेतुतास्त्विति वाच्यम्, सुषुप्त्यादौ तमसो बुद्धिवृत्तिप्रतिबन्धकत्वसिद्धेः।

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्।
प्रस्वापनं तु तमसा तुरीयं त्रिषु सन्ततम्[4] ॥ (भाग० ११।२५।२०)

---

१. योगिप्रत्यक्षं लौकिकप्रत्यक्षाद् भिद्यते। द्र० 'न चास्य सूक्ष्मव्यवहितविप्रकृष्टवस्तुनो लोकप्रत्यक्षेण ग्रहणमस्ति। न चास्य विशेषस्य अप्रमाणकस्य अभावोऽस्तीति समाधिप्रज्ञानिर्ग्राह्य एव सः विशेषो भवति' (व्यासभा० १।४९)।

२. उद्धृतमिदं योगवार्त्तिके (१।४९); 'वा न दोषः' इति मुद्रित पाठः)।

३. अतीतानागतं वस्तु स्वरूपतोऽस्त्यध्वभेदाद् धर्माणाम् (४।१२) इति योगसूत्रं सभाष्यम् आलोच्यम्।

४. प्रस्वापं तमसा जन्तोः' इति मुद्रितभागवतपाठः।

इत्यादिस्मृतिभ्यः सुषुप्त्यादौ वृत्तिप्रतिबन्धकान्तराऽसम्भवाच्च । चाक्षुषवृत्तावपि तमसः प्रतिबन्धदर्शनाच्च ।

यत् तु शुष्कतार्किकाः सुषुप्तौ वृत्त्यनुत्पादार्थं ज्ञानसामान्ये त्वङ्मनोयोगं कारणं कल्पयन्ति[1], तदसत्; त्वगिन्द्रियोत्पत्तेः प्रागपि केवलबुद्ध्या स्वयम्भुवः सर्वप्रत्यक्षश्रवणात् त्वङ्मनोयोगानुत्पादेऽपि तमस एव निमित्ततया वक्तव्यत्वाच्च, केवलतर्कस्याप्रतिष्ठादोषग्रस्तत्वाच्चेति दिक् ॥९१॥

ननु तथापीश्वरप्रत्यक्षेऽव्याप्तिः तस्य नित्यत्वेन सन्निकर्षाजन्यत्वादिति तत्राह—

ईश्वरासिद्धेः[2] ॥९२॥

ईश्वरे प्रमाणाभावान्न दोष इत्यनुवर्तते । अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढिवादेनैवेति प्रागेव प्रतिपादितम्[3], अन्यथा हीश्वराभावादित्येवोच्येत । ईश्व-

---

१. द्र० त्वङ्मनःसंयोगो ज्ञानसामान्यकरणम् । किमत्र प्रमाणम् ? सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननम् इति (सिद्धान्तमुक्तावली ५७) । सुषुप्ति-प्रक्रियेत्थं वर्णिता दिनकरीग्रन्थे—'प्रथमं सुषुप्त्यनुकूलमनःक्रियया मनसा आत्मनो विभागः, तत आत्ममनः संयोगनाशः, ततः पुरीतदात्मकोत्तरदेशेन मनसः संयोग उत्पद्यते, सैव सुषुप्तिः' ।

२. हेतुप्रदर्शनमात्रपरमिदं सूत्रम् । ईश्वरासिद्धिरूपहेतुना किं साध्यते इति न स्पष्टं विज्ञायते । १।९० सूत्रे अस्ति हेतुः—'अबाह्यप्रत्यक्षत्वाद्' इति; १।९१ सूत्रेऽप्यस्ति हेतुः 'अतिशयसंबन्धात्' इति । प्रत्यक्षप्रमाणविषयकायाः कस्याश्चित् शङ्काया निवृत्ति राभ्यां हेतुभ्यां क्रियते । १।९२ सूत्रीयाद् ईश्वरासिद्धिरूपहेतुनाऽपि प्रत्यक्षप्रमाणविषयकशङ्काविशेषस्य समाधानं करणीमेव । का सा शङ्का इति न विज्ञायते । भिक्षुणा या शङ्का उत्थापिता पातनिकायां सा काल्पनिक्येव । यथा 'न दोषः' १।९० सूत्रे, 'अदोषः' इति १।९१ सूत्रे च पठ्यते, तथा १।९२ सूत्रे किमपि पदं न प्रयुक्तम् । पृथक् शैलीग्रहणस्य को हेतुरित्यपि विचार्यम् । यतो हीश्वरे बुद्धिरस्ति, अतः अध्यवसायोऽपि तस्मिन्नस्ति; अतएव 'प्रतिविषयाध्यवसायो दृष्टम्' इत्येवंरूप-दृष्टप्रमाणं भगवतीश्वरेऽस्त्येव । अतएव तदाकारोल्लेखि विज्ञानमपि ईश्वरे विद्यते एव । ईश्वर-करणस्य स्वरूपं योगर्धिसंपन्नमतः तस्य प्रत्यक्षमपि करणानुसार्येवेति विज्ञेयम् । वस्तुतस्तु सूत्रमिदं प्रत्यक्षप्रसंगे संपातायातम् ।

३. सात्त्विकबुद्धिधर्मरूपस्य ऐश्वर्यस्य सत्ता सांख्येऽभ्युपगतैव । 'ईश्वरताविशिष्टान्तः करणवान् पुरुषः ईश्वरः' इति सांख्याः । ईदृशमन्तः करणं बहुविधमिति नैकप्रकारा ईश्वराः सन्तीति स्वीकार्यमेव । यथा भूत-तन्मात्राभिमानिन ईश्वराः तथैव ब्रह्माण्डाधीशभूता बहवो हिरण्यगर्भा अपि सन्ति, ब्रह्माण्डानाम् असंख्येयत्वात् । अनादिमुक्तचित्त-व्यपदिष्ट ईश्वरोऽपि सांख्यसंमत एव ।

राभ्युपगते तु सन्निकर्षजन्यजातीयत्वमेव प्रत्यक्षलक्षणं विवक्षितम्, साजात्यं च ज्ञानत्वसाक्षाद्व्याप्यजात्येति भावः ॥९२॥

श्रुतिस्मृतिभ्यां कथमीशो न सिध्यतीत्याकाङ्क्षायां तर्कविरोधं लौकिकमेव बाधकमाह—

**मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः[1] ॥९३॥**

ईश्वरोऽभिमतः किं क्लेशादिमुक्तो वा तैर्बद्धो वा ? अन्यतरस्याप्यसम्भवान्नेश्वरसिद्धिरित्यर्थः ॥९३॥

**[2]उभयथाऽप्यसत्करत्वम्[3] ॥९४॥**

मुक्तत्वे सति स्रष्टृत्वाद्यक्षमत्वं तत्प्रयोजकाभिमानरागाद्यभावात् । बद्धत्वेऽपि मूढत्वान्न सृष्ट्यादिक्षमत्वमित्यर्थः ॥९४॥

नन्वेवमीश्वरप्रतिपादकश्रुतीनां का गतिस्तत्राह—

**मुक्तात्मनः प्रशंसा, उपासा सिद्धस्य वा[4] ॥९५॥**

यथायोगं काचित् श्रुतिर्मुक्तात्मनः केवलात्मसामान्यस्य ज्ञेयताभिधानाय सन्निधिमात्रैश्वर्येण स्तुतिरूपा प्ररोचनार्था । काचिच्च सङ्कल्पपूर्वकस्रष्टृत्वादिप्रतिपादिका श्रुतिः सिद्धस्य ब्रह्मविष्णुहरादेरेवानित्यैश्वरस्याभिमानादिमतोऽपि गौणनित्यत्वादिमत्त्वान्नित्यत्वाद्युपासापरेत्यर्थः ॥९५॥

---

१. ४।१।२१ न्यायसूत्रतोऽवगम्यते यद् ईश्वरः न बद्धो नापि मुक्तः । तस्मिन् न मिथ्याज्ञानमिति न स बद्धः; स च न मुक्तः, ऐश्वर्यस्य धर्मजन्यत्वात्, धर्मस्य च कर्मजन्यत्वात् । अतएवोद्द्योतकरः 'मुक्ताद् बद्धाच्च भिन्न ईश्वरः' इत्येव प्रतिपादयति । ईश्वरानस्तित्ववादिभिर्याभिर्युक्तिभिरीश्वरसत्ता खण्ड्यते, ताः १।९३-९४ सूत्रयोरनूदिताः । सांख्यसंमतः प्रजापतिः, अनादिमुक्तचित्तव्यपदिष्ट ईश्वरश्च न प्रत्याख्यातो भवति आभिर्युक्तिभिरिति विज्ञेयम् ।

२. तुल० गिरिटीका—"तस्य ईश्वरस्य देहित्वे अस्मदादितुल्यत्वात् तदभावे मुक्तवज् जगत्कर्तृत्वायोगात्... तस्य अकिञ्चित्करत्वम् (बृहदा० २।१।२०); 'स किं बद्धो मुक्तो वा ? न तावद् बद्धः... मुक्तोऽपि न...' (न्यायकन्दली, पृ० १४२) ।

३. सांख्यदर्शनप्रस्तावे ईश्वरप्रसंगः ईश्वरानुचिन्तनप्रसंगश्चेतिहासपुराणादिषु दृश्यत एव । सांख्यपरायणमाधिकृत्य 'समः सर्वेषु भूतेषु ब्रह्माणम् अभिवर्तते' इति शान्तिपर्वण्युक्तम् (२३५।३६) । द्र० 'हिरण्यगर्भो भगवान् सैव बुद्धिरिति स्मृतः । सांख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः ॥ (शान्ति० ३०२।१८-१९; ब्रह्म २४०।१६,१७); 'विरिञ्चि इति यत् प्रोक्तं कापिलज्ञानचिन्तकैः । स प्रजापतिरेवाहं चेतनात् सर्वलोककृत् ॥ (शान्ति० ३४२।९४) ।

४. इदं योगवार्त्तिके उद्धृतम् (१।२४) । उपासासिद्धस्येति वृत्तिसंमतः पाठः (उपासया उपासनया सिद्धः = उपासासिद्धः) । भाष्ये उपासा = उपासापरा (श्रुतिः) । पातनिकायां या शङ्का भाष्य-वृत्त्योर्दर्शिता सा स्वारसिकी न प्रतिभाति ।

ननु तथापि प्रकृत्याद्यखिलाधिष्ठातृत्वं[1] श्रूयमाणं नोपपद्यते लोके सङ्कल्पादिना परिणमनस्यैवाधिष्ठातृत्वव्यवहारादिति, तत्राह—

[2]तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥६६॥

यदि सङ्कल्पेन स्रष्टृत्वमधिष्ठातृत्वमुच्यते तदायं दोषः स्यात्। अस्माभिस्तु पुरुषस्य सन्निधानादेवाधिष्ठातृत्वं स्रष्टृत्वादिरूपमिष्यते मणिवत्। यथाऽयस्कान्तमणेः सन्निध्यमात्रेण शल्यनिष्कर्षकत्वं न सङ्कल्पादिना, तथैवादिपुरुषस्य संयोगमात्रेण प्रकृतेर्महत्तत्त्वरूपेण परिणमनम्। इदमेव च स्वोपाधिस्रष्टृत्वमित्यर्थः। तथा चोक्तम्—

निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते।
सत्तामात्रेण देवेन तथा चायं जगज्जनः॥
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम्।
निरिच्छत्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः॥

(योगवासिष्ठ ४।५।३०-३१)

इति। तदैक्षत बहु स्यामित्यादिश्रुतिस्तु (छान्दोग्य ६।२।३) कूलं पिपतिषतीवद्[3] गौणी प्रकृतेरासन्नबहुतरगुणसंयोगात्। अथवा बुद्धिपूर्वसृष्टिविषयमेतादृशवाक्यजातं न त्वादिसर्गपरं तस्याबुद्धिपूर्वकत्वस्मरणादिति भावः। यथा कौर्मे—

इत्येष प्राकृतः सर्गः संक्षेपात् कथितो मया।
अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधत।[4]। (१।४।६६)

इति। अस्य च वाक्यस्यादिपुरुषबुद्ध्यजन्यत्वेन सङ्कोचे गौरवमिति ॥६६॥

न केवलं सर्गादावेव पुरुषस्य संयोगमात्रेण स्रष्टृत्वादिकमपि त्वन्येष्वपि सङ्कल्पादिपूर्वकेषु भूतादिष्वखिलेषु विशेषकार्येष्वपि सर्वपुरुषाणामित्याह—

---

१. द्र० केचित् तावत् सांख्ययोगव्यपाश्रयाः कल्पयन्ति-प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः, (शारीरक २।२।३७)। अयुक्तमिदम् पुरुषाधिष्ठितं प्रधानं प्रवर्तते (सां० का० १७ गौडपाद) इति युक्तम्।

२. अस्मन्मते तदितिपदेन निर्गुणः पुरुषो लक्ष्यते, न तु ऐश्वर्ययुक्तान्तःकरणवान् ईश्वरः, यतः पुरुषस्यैव सन्निधानादधिष्ठातृत्वं शास्त्रसंमतम्। अन्येषामधिष्ठातृत्वं गौणमेव। अतः ईश्वरप्रकरणे सूत्रस्यास्य पाठे न प्रकरणदृष्ट्या संगच्छते। यद्वा गौणाधिष्ठातृत्व कथनपरमिदं सूत्रमिति।

३. द्र० छान्दोग्य ६।२।४ शां० भा० (अतः प्रधानस्याचतेनस्य......यथा कूलं पिपतिषतीति तद्वत् सतोऽपि स्यात्); 'यदुक्तं नाचेतनं प्रधानं जगत्कारणम् ईक्षितृत्वश्रवणादिति...कूलं पिपतिषतीति अचेतनेऽपि कूले चेतनवदुपचारो दृष्टः (शारीरक १।१।५)।

४. अबुद्धिपूर्विकां विप्रा इति मुद्रितपुराणपाठः।

विशेषकार्येष्वपि जीवानाम्[1] ॥६७॥

अधिष्ठातृत्वं सन्निधानादित्यनुषज्यते। अन्तःकरणोपलक्षितस्यैव जीवशब्दार्थत्वं षष्ठाध्याये (सू० ६३) वक्ष्यति तथा च विशेषकार्ये विसर्गाख्ये व्यष्टिसृष्टावपि जीवानामन्तःकरणप्रतिबिम्बितचेतनानां सन्निधानादेवाधिष्ठातृत्वं न तु केनापि व्यापारेण कूटस्थचिन्मात्ररूपत्वादित्यर्थः ॥६७॥

ननु चेत् सदा सर्वज्ञ ईश्वरो नास्ति तर्हि वेदान्तमहावाक्यार्थस्य विवेकस्योपदेशेऽन्धपरम्पराशङ्कयाऽप्रामाण्यं प्रसज्येत तत्राह—

सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः[2] ॥६८॥

हिरण्यगर्भादीनां सिद्धरूपस्य यथार्थस्य बोद्धृत्वात् तद्वक्तृकायुर्वेदादिप्रामाण्येनावधृताच्चैषां वाक्यार्थोपदेशः प्रमाणमिति शेषः ॥६८॥

ननु पुरुषस्य चेत् सन्निधिमात्रेण गौणमधिष्ठातृत्वं तर्हि मुख्यमधिष्ठातृत्वं कस्येत्याकाङ्क्षायामाह—

[3]अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥६९॥

अन्तःकरणस्यानुपचरितमधिष्ठातृत्वं सङ्कल्पादिद्वारकं प्रत्येतव्यम्। नन्वधिष्ठातृत्वं घटादिवदचेतनस्य न युक्तं तत्राह—लोहवत् तदुज्ज्वलितत्वादिति। अन्तःकरणं हि तप्तलोहवच्चेतनोज्ज्वलितं भवति[4]। अतस्तस्य चेतनायमानतयाऽधिष्ठातृत्वं घटादिव्यावृत्तमुपपद्यत इत्यर्थः।

नन्वेवं चैतन्येनान्तःकरणस्योज्ज्वलने चितेः सङ्गित्वमग्निवदेव स्यादिति चेन्न; नित्योज्ज्वलचैतन्यसंयोगविशेषमात्रस्याथवा संयोगविशेषजन्यचैतन्यप्रतिबिम्ब-

---

१. आहारादिविशेषकार्येषु जीवानाम् (बुद्धियुतात्मनाम्) एव कर्तृत्वं न तु आत्मनः इति सूत्रार्थो वृत्तिमते। यतः आत्मनः नास्ति कर्तृत्वमपरिणामित्वात्, अतः सोपाधिकानां पुरुषाणामर्थात् जीवानामेव कर्तृत्वं स्वभावतः सिद्धम्, त्रैगुणिकत्वादहंकारस्य। अतः सूत्रमिदं न किमपि अज्ञातमर्थं बोधयति।

२. सिद्धरूपबोद्धृत्वात् अन्तःकरणस्य वाक्यार्थोपदेशः सफलो भवतीति वृत्तिसंमतं सूत्रतात्पर्यम्। हिरण्यगर्भादीनां यथार्थबोद्धृत्वात् तत्कर्तृको वाक्यार्थोपदेशः प्रमाणम् इति भाष्यसंमतं तात्पर्यम्। यद्यपि प्रदर्शितं मतं न सांख्यविरोधि, तथापि सूत्राक्षरतो नायमर्थः सुष्ठु प्रतिभाति। वृत्तौ उत्तरसूत्रीयपदानुकर्षणं कृत्वा सूत्रार्थो विहितः। अस्पष्टार्थमिदं सूत्रम्।

३. अन्तःकरणस्य चैतन्योज्ज्वलितत्वमद्वैतिभिरसकृदुच्यत एव। 'तत्र प्रत्यगात्मचैतन्यवज्ज्वलितधीः द्रष्टृदृश्याकारा विपरिणमते···(आत्मज्ञानोपदेशविधि ३।६।; बुद्धिस्तावत् स्वच्छत्वात्···जायते (बृहदा० ४।३।७ भा०)।

४. लोहोपमायास्तात्पर्यं वृत्तौ अन्यथा दर्शितम्—'लोहवदिति यथा आकर्षको लोहो निष्क्रियोऽपि सन्निधिमात्रेण आकर्षति' इति। आकर्षकलोहः = आकर्षणकारी धातुविशेषः = अयस्कान्तः।

स्यैवान्तःकरणोज्ज्वलनरूपत्वात् । न तु चैतन्यमन्तःकरणे संक्रामति येन संगिता स्यात्[1] । अग्नेरपि हि प्रकाशादिकं न लोहे संक्रामति । किन्त्वग्नियोगविशेष एव लोहस्योज्ज्वलनमिति । नन्वेवमपि संयोगेन परिणामित्वमिति चेन्न, सामान्यगुणातिरिक्तधर्मोत्पत्तावेव परिणामव्यवहारादिति ।

अयं च संयोगविशेषोऽन्तःकरणस्यैव सत्त्वोद्रेकरूपात् परिणामाद्भवतीति फलबलात् कल्प्यते, पुरुषस्यापरिणामित्वेन संयोगे तन्निमित्तकविशेषासम्भवादिति । अयमेव च संयोगविशेषो बुद्ध्यात्मनोरन्योऽन्यप्रतिबिम्बने हेतुः । ननु प्रतिबिम्बहेतुतया संयोगविशेषावश्यकत्वे प्रतिबिम्बकल्पना व्यर्था प्रतिबिम्बकार्यस्यार्थज्ञानादेः संयोगविशेषादेव सम्भवादिति; मैवम्, बुद्धौ चैतन्यप्रतिबिम्बश्चैतन्यदर्शनार्थं कल्प्यते दर्पणे मुखप्रतिबिम्बवत् । अन्यथा कर्मकर्तृविरोधेन स्वस्य साक्षात् स्वदर्शनानुपपत्तेः ।

अयमेव च चित्-प्रतिबिम्बो[2] बुद्धौ 'चिच्छायापत्ति' रिति 'चैतन्याध्यास' इति 'चिदावेश' इति चोच्यते । यश्च चैतन्ये बुद्धेः प्रतिबिम्बः स चारूढविषयैः सह बुद्धेर्भानार्थमिष्यते । अर्थाकारतयैवार्थग्रहणस्य बुद्धेः स्थले दृष्टत्वेन तां विना संयोगविशेषमात्रेणार्थभानस्य पुरुषेऽप्यनौचित्यात्, अर्थाकारस्यैवार्थग्रहणशब्दार्थत्वाच्चेति । स चार्थाकारः पुरुषे परिणामो न सम्भवतीत्यर्थात् प्रतिबिम्बरूप एव पर्यवस्यतीति दिक् ।

स चायमन्योऽन्यप्रतिबिम्बो योगभाष्ये (२।२०; ४।२२) व्यासदेवैः सिद्धान्तितः—'चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते' इत्यादिना ।[3] योगवार्त्तिके (२।२०; ४।२२) चैतद्विस्तरतोऽस्माभिः प्रतिपादितम् ।

कश्चित् तु 'बुद्धिगतया चिच्छायया बुद्धेरेव सर्वार्थज्ञातृत्वमिच्छादिभिर्ज्ञानस्य सामानाधिकरण्यानुभवादन्यस्य ज्ञानेनान्यस्य प्रवृत्त्यनौचित्याच्चे'त्याह । तदात्माज्ञानमूलकत्वादुपेक्षणीयम् । एवं हि बुद्धेरेव ज्ञातृत्वे चिदवसानो भोगः (१।१०४)

---

१. द्र० अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च…(२।२० व्यासभाष्योद्धृतं पञ्चशिखवाक्यम्) ।

२. तुल० 'यस्तु सांख्य आत्मानमनुमिमीते जडेऽन्तःकरणे चित्-प्रतिबिम्बस्ताहशबिम्बपुरःसरः प्रतिबिम्बत्वात् मुखप्रतिबिम्बवत् इति…' (वि० प्र० संग्रह, पृ० ५४) ।

३. वाक्यमिदं वाक्यपदीयव्याख्यायां हरिकृतायामपि दृश्यते । अत्र बुद्धिवृत्त्या विशिष्टज्ञानस्य प्रवृत्तिराख्यायते इति मुद्रितः पाठः । संक्रान्तपदेन आकारपरिग्रहो गृह्यते (वृषभदेवटीका १।३७) ।

इत्यागामिसूत्रद्वयविरोधः। पुरुषे प्रमाणाभावश्च पुरुषलिङ्गस्य भोगस्य बुद्धावेव[1] स्वीकारात्।

न च प्रतिबिम्बान्यथानुपपत्त्या बिम्बभूतः पुरुषः सेत्स्यतीति वाच्यम्। अन्योऽन्याश्रयात् पृथग्बिम्बसिद्धौ बुद्धिस्थचैतन्यस्य प्रतिबिम्बतासिद्धिः प्रतिबिम्बतासिद्धौ च तत्प्रतियोगितया बिम्बसिद्धिरिति। अस्मन्मते च ज्ञातृतया पुरुषसिद्ध्यनन्तरं तस्य ज्ञेयत्वान्यथानुपपत्त्या प्रतिबिम्बसिद्धौ नान्योऽन्याश्रयः। अथ वृत्तिसाक्षितया बिम्बरूपश्चेतनः सिध्यतीति चेत् तर्हि साक्षिण एव प्रमातृत्वमप्युचितम्। उभयोर्ज्ञातृत्वकल्पने गौरवात्। वृत्तिज्ञानवट्ज्ञानयोः सामानाधिकरण्यानुभवाच्च।

किञ्चैवं सति बुद्धेरेव भोक्तृत्वे भोक्तृभावादित्यागामिसूत्रेण (१।१४३) भोक्तृतया पुरुषसाधनं विरुध्येत। अथ बुद्धिगतचिच्छायारूपेण सम्बन्धेन बिम्बस्यैव ज्ञानं न तु चितौ बुद्धिप्रतिबिम्बः कल्प्यत इत्येतावन्मात्रे चेत् तस्याशयो वर्ण्येत, तदप्यसत्; सूर्यादेः स्वप्रतिबिम्बरूपसम्बन्धेन जलादितत्स्थवस्तुभासकत्वादर्शनात्, किरणैरेव तदुभयभासनात्। मरुमरीचिकादौ च स्वाव्यस्तजलादिभासकत्वं दृष्टमेवेति दृष्टानुसारेणास्माभिश्चितौ बुद्धिप्रतिबिम्ब एव सर्वार्थभानहेतुतया सम्बन्धः कल्पित इति।

यच्चोक्तमन्यस्य ज्ञानेनान्यस्य प्रवृत्त्यनुपपत्तिरिति। तदपि न, अकर्तुरपि फलोपभोगोऽन्नाद्यवत् (१।१०५) इत्यागामिसूत्रेण ज्ञानप्रवृत्त्योर्वैयधिकरण्यस्य दृष्टान्तेनोपपादयिष्यमाणत्वात्। बुद्धेः सङ्कल्पे न देहक्रियायामिवात्रापि संयोगविशेषादेरेव नियामकत्वादिति ॥९९॥

प्रत्यक्षप्रमाणं लक्षयित्वाऽनुमानं लक्षयति—

प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्[2] ॥१००॥

प्रतिबन्धो व्याप्तिर्व्याप्तिदर्शनाद्व्यापकज्ञानमनुमानं प्रमाणमित्यर्थः; अनुमितिस्तु पौरुषेयो बोध इति ॥१००॥

शब्दप्रमाणं लक्षयति—

आप्तोपदेशः शब्दः[3] ॥१०१॥

---

१. द्र० तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ—(व्यासभा० २।१८); विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते। प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥ (आसुरिवाक्यमिदम्)। श्लोकोऽयं व्योमवत्याम् (बुद्धिव्याख्यायाम्, पृ० ५२१) 'उपलब्धिस्तु सुखदुःखाकारपरिणतायां बुद्धावात्मनः प्रतिबिम्बोदयो भोगः' इत्युक्त्वा उद्धृतः (विविक्तदृक्परिणतौ- इति पाठः)।

२. धूमदर्शनात् यद् वह्निज्ञानं तदेव सांख्यनये अनुमानम् न तु लिङ्गपरामर्शः। अतएव सांख्यनये पौरुषेयो बोधः एवानुमितिः (अनुमानस्य फलम्) उच्यते।

३. शब्दः = शब्दजनितं ज्ञानम्। कारिकायां आप्तवचनमिति प्रमाणविशेषस्य नाम, तल्लक्षणं तु आप्तश्रुतिरिति (का० ४)। आप्तश्रुतिशब्देन आप्तोच्चारितशब्दजन्यं ज्ञानमेव गृह्यते।

आप्तिरत्र योग्यता, वेदस्यापौरुषेयतायाः पञ्चमाध्याये (५।४६-५०) वक्ष्यमाणत्वात्। तथा च योग्यः शब्दस्तज्जन्यं ज्ञानं शब्दाख्यं प्रमाणमित्यर्थः। फलं च पौरुषेयः शाब्दो बोध इति ॥१०१॥

प्रमाणप्रतिपादनस्य स्वयमेव फलमाह—

**उभयसिद्धिः प्रमाणात् तदुपदेशः[1] ॥१०२॥**

उभयोरात्मानात्मनोर्विवेकेन सिद्धिः प्रमाणादेव भवति। अतस्तस्य प्रमाणस्योपदेशः कृत इत्यर्थः ॥१०२॥

तत्र येनानुमानविशेषेण प्रमाणेन मुख्यतोऽत्र प्रकृतिपुरुषौ विविच्य साधनीयौ तद् वर्णयति—

**सामान्यतोदृष्टादुभयसिद्धिः[2] ॥१०३॥**

अनुमानं तावत् त्रिविधं भवति—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति। तत्र प्रत्यक्षीकृतजातीयविषयकं पूर्ववत्। यथा धूमेन वह्न्यनुमानम्। वह्निजातीयो हि महानसादौ पूर्वं प्रत्यक्षीकृतः। व्यतिरेकानुमानं शेषवत्, शेषोऽपूर्वोऽर्थोऽस्य विषयत्वेनास्तीति शेषवत्, अप्रसिद्धसाध्यकमिति यावत्। यथा—पृथिवीत्वेनेतरभेदानुमानम्। पृथिवीतरभेदो हि प्रागसिद्धः। सामान्यतोदृष्टं च तदुभयभिन्नमनुमानम्, यत्र सामान्यतः प्रत्यक्षादिजातीयमादाय व्याप्तिग्रहात् पक्षधर्मताबलेन तद्विजातीयोऽप्रत्यक्षाद्यर्थः सिध्यति। यथा—रूपादिज्ञाने क्रियात्वेन करणवत्त्वानुमानम्। अत्र हि पृथिवीत्वादिजातीयं कुठारादिकरणमादाय व्याप्तिं गृहीत्वा तद्विजातीयमतीन्द्रियं ज्ञानकरणमिन्द्रियं साध्यत इति।

तत्र सामान्यतोदृष्टादनुमानाद् द्वयोः प्रकृतिपुरुषयोः सिद्धिरित्यर्थः। तत्र प्रकृतेः सामान्यतोदृष्टमनुमानम्[3], यथा—महत्तत्त्वं सुखदुःखमोहधर्मकद्रव्योपादानकं कार्यत्वे सति सुखदुःखमोहधर्मकत्वात् सुवर्णादिजकुण्डलादिवदित्यादि। पुरुषे तु यद्यप्यनुमानापेक्षा नास्ति सर्वसम्मतत्वात् तथापि प्रकृत्यादिविवेके सामान्यतो-

१. उभयपदेनात्मानात्मानौ गृह्येते, प्रकृति-पुरुषौ वेति व्याख्यातारः। प्रकरणतो नायमर्थो लभ्यते। अर्थस्तु सांख्यदृष्ट्या साधुरेव।

२. 'सामान्यतोदृष्टादनुमानाद् अतीन्द्रियाणामर्थानां प्रतीतिर्भवति' इति कारिकामतम् (का० ६)। अतीन्द्रियाणाम् इत्यत्र बहुवचनं प्रयुक्तम्। अत्र पुनः कण्ठत एव उभयसिद्धिः (=प्रकृति—पुरुषयोः सिद्धिः) इत्युक्तम्। किं पुरुषाणां बहुत्वाद् अतीन्द्रियशब्दे बहुवचनं प्रयुक्तं कारिकाकृता? १।१०२ सूत्रेण सह १।१०३ सूत्रस्य पौनरुक्त्यं नापलपितुं शक्यते।

३. द्र० प्रधानपुरुषावतीन्द्रियौ सामान्यतोदृष्टेनानुमानेन साध्येते—यस्मान्महदादि लिङ्गं त्रिगुणं, यस्येदं त्रिगुणं कार्यं तत् प्रधानमिति। यतश्चाचेतनं चेतनमिवाभाति अतोऽन्योऽधिष्ठाता पुरुष इति (सांख्यका० ६ गौडपादभाष्यम्)।

दृष्टमेवापेक्ष्यते। तद्यथा—प्रधानं परार्थं संहत्यकारित्वाद् गृहादिवदिति। अत्र हि प्रत्यक्षसिद्धं देहाद्यर्थकत्वं गृहादिषु गृहीत्वा तद्विजातीयः पुरुषः प्रधानादिपरत्वेनानुमीयते। देहादीनां च भोक्तृत्वमविवेकेन प्राग्गृहीतमित्युभयसिद्धिरिति ॥१०३॥

या प्रमाणस्य फलभूता प्रमाख्यसिद्धिरुक्ता तया पुरुषस्य परिणामापत्तिरित्याशङ्कायां तस्या स्वरूपमाह—

[1]चिदवसानो भोगः[2] ॥१०४॥

पुरुषस्वरूपे चैतन्ये पर्यवसानं यस्यैतादृशी भोगसिद्धि रित्यर्थः। बुद्वेर्भोगस्य व्यावर्तनाय चिदवसान इति। चितः परिणामित्वसधर्मत्वादिशङ्कानिरासायावसानपदम्। चितो भोगस्य स्वरूपे पर्यवसितत्वान्न कौटस्थ्यादिहानिरित्याशयः।

तथाहि—प्रमाणाख्यवृत्त्यारूढं प्रकृतिपुरुषादिकं प्रमेयं वृत्त्या सह पुरुषे प्रतिबिम्बितं सद्भासते। अतोऽर्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्नं स्वरूपचैतन्यमेव भानं पुरुषस्य भोगः[3], प्रमाणस्य च फलमिति। ततश्च प्रतिबिम्बरूपेणार्थसंबन्धे द्वारतया वृत्तीनां करणत्वमिति। तदुक्तं विष्णुपुराणे—

गृहीतानिन्द्रियैर्र्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः॥ (१।१४।३५) इति।

राज्ञो हि करणवर्गः स्वामिने भोग्यजातं समर्पयतीति दृष्टमिति। भोगशब्दार्थश्चाभ्यवहरणम्, आत्मसात्करणमिति यावत्। स च देहादिचेतनान्तेषु साधारणः। विशेषस्त्वयम्—अपरिणामित्वात् पुरुषस्य विषयभोगः प्रतिबिम्बादानमात्रम्। अन्येषां तु परिणामित्वात् पुष्ट्यादिरपीति[4]।

अयमेव च परिणामरूपः पारमार्थिको भोगः पुरुषे प्रतिबिम्ब्यते 'बुद्धेर्भोग इवात्मनि' (शिशुपालवध २।५६) इत्यादिभिरिति मन्तव्यम्। अस्मिन् सूत्रे पुरुषस्यापि फलव्याप्यता[5] सिद्धा चिदवसानताया एवोभयसिद्धित्ववचनादिति ॥१०४॥

---

१. उद्धृमिदं योगवार्तिके (३।३५; १।४; १।२४)। चिदवसानतारूपस्तु सांख्यसूत्रोक्तो भोगः स्वत इति (योगवा ३।५५)। चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात् (६।५५) इत्यत्रापि इदमेव मतं प्रतिपादितम्।

२. चिद् आत्मा तदविवेकावसानो भोग इत्यर्थ इति वृत्तिकारः। दृष्टिभेदेन उभे मते संगते एव।

३. तुल० 'भोगकाले चिन्मात्रस्य विक्रिया परमार्था एव, भोगधर्मवति सत्त्वाङ्गिनि चेतसि पुरुषस्य चैतन्यप्रतिबिम्बोदयोऽविक्रियस्य पुरुषस्य भोक्तृत्वमिति चेत्' (प्रश्न ६।३ शांकरभाष्य)।

४. पुष्मादिरपीति, पुष्यादिरपीति (पाठ०)।

५. तुल० फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्॥ ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता॥ पञ्चदशी ७।९०, ९२

ननु कर्तुरेव लोके क्रियाफलभोगो दृष्टः। यथा सञ्चरत एव सञ्चारोत्थदुःखभोग इति। तत् कथं बुद्धिकृतधर्मादिफलस्य सुखाद्यात्मिकाया अर्थोपरक्तबुद्धिवृत्तेर्भोगः पुरुषे घटेतेत्याशङ्कायामाह—

अकर्तुरपि फलोपभोगोऽन्नाद्यवत् ॥१०५॥

बुद्धिकर्मफलस्यापि वृत्तेरुपभोगस्तदकर्तुरपि पुरुषस्य युक्तः, अन्नाद्यवत्। यथाऽन्यकृतस्यान्नादेरुपभोगो राज्ञो भवति तद्वदित्यर्थः। अविवेकस्य स्वस्वामिभावस्य वा भोगनियामकत्वात् तु नातिप्रसङ्गः ॥१०५॥

सुखदुःखादेः कर्मफलत्वमभ्युपेत्य बुद्धिगतं कर्मफलं पुरुषो भुङ्क्त इत्युक्तम्। इदानीं पुरुषगतभोगस्यैव कर्मफलत्वं स्वीकृत्य बुद्धिकर्मणा पुरुषे एव फलमुत्पद्यत इति मुख्यसिद्धान्तमाह—

अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः ॥१०६॥

अथवा कर्तरि फलमेव न भवति, सुखं भुञ्जीयेत्यादिकामनाभिर्भोगस्यैव फलत्वात्; अतो भोक्तृनिष्ठमेव फलं भवति—शास्त्रविहितं फलमनुष्ठातरीति[1]। शास्त्रेषु कर्तुः फलावगमस्तु तत्सिद्धेरकर्तृनिष्ठाया भोगाख्यसिद्धेः कर्तृबुद्धावविवेकादित्यर्थः। योऽहं करोमि स एवाहं भुञ्ज इति हि लौकिकानुभव इति। या च सुखं मे भूयादित्यादिकामना सा पुत्रो मे भूयादितिवत् फलसाधनत्वेनैवोपपद्यते; भोगस्तु नान्यस्य साधनम्। अतः स एव फलमिति मुख्यः सिद्धान्तः।

भोगस्य पुरुषस्वरूपत्वेऽपि[2] वैशेषिकाणां मते श्रोत्रवत् कार्यता बोध्या सुखाद्यवच्छिन्नचितेरेव भोगत्वात्[3]। अस्मिंश्च भोगस्य फलत्वपक्षे दुःखभोगाभाव एवापवर्गो बोध्यः। अथवा भोग्यतारूपस्वत्वसम्बन्धेन सुखदुःखाभावयोरेव फलत्वमस्तु तेन सम्बन्धेन धनादेरिव सुखादेरपि पुरुषनिष्ठत्वादिति ॥१०६॥

तदेवं प्रमाणानि प्रमाणफलभूतां प्रमेयसिद्धिं च प्रतिपाद्य प्रमेयसिद्धेरपि फलमाह—

नोभयं च तत्त्वाख्याने[4] ॥१०७॥

---

१. द्र० 'शास्त्रफलं प्रयोक्तरि'···(पू० मी० ३।७।१८)।

२. अस्मन्मते भोगो बुद्धेरेव, भोगस्य अपरिणामि-प्रकाशकः खलु पुरुषो न भोगेन विकारयुग् भवति।

३. कर्णशष्कुल्यवच्छिन्नं नभः (नित्यं व्यापकं नभ इति वैशेषिकमतम्) एव कर्णेन्द्रियमिति वैशेषिकाः। एवंविधं कर्णेन्द्रियं कार्यभूतं भवति। भोगो यद्यपि पुरुषस्वरूपमेव, तथापि यतः पुरुषः (चितिः) सुखाद्यवच्छिन्नो बद्धावस्थायामतः भोगोऽपि कार्यभूत एव इत्यर्थः।

४. उभयमिति सुखदुःखे इति भिक्षुः, कर्तृत्वभोक्तृत्वे इति वृत्तिकारः। वस्तुतस्तु अस्पष्टार्थकोऽयमुभयशब्दः।

प्रमाणेन प्रकृतिपुरुषयोस्तत्त्वाख्याने तत्त्वसाक्षात्कारे सत्युभयमपि सुखदुःखे न भवतः ।। विद्वान् हर्षशोकौ जहातीति[1] श्रुतेः, न्यायाच्चेत्यर्थः ।।१०७।।

संक्षेपतो विवेकेनानुमापितौ प्रकृतिपुरुषौ, तयोः प्रकृतिपुरुषयोरनुमानेऽवान्तर-विशेषा इतः परमध्यायसमाप्ति यावद्विचार्यास्तत्र चादौ प्रकृत्याद्यनुमानेष्वनुपलम्भ-बाधकमपाकरोति—

विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य[2] ।।१०८।।

इन्द्रियानुपलभ्यतामात्रतो घटाद्यभाववत् प्रत्यक्षेण चार्वाकैः प्रकृत्याद्यभावः साधयितुं न शक्यते यतो विद्यमानोऽप्यर्थ इन्द्रियाणां कालभेदेन विषयोऽविषयश्च भवति, अतिदूरत्वादिदोषात् । इन्द्रियघातेन्द्रियग्रहाभ्यां चेत्यर्थः । सामग्री-समवधाने सत्यनुपलम्भस्यैवाभावप्रत्यक्षहेतुता । प्रकृत्याद्युपलम्भे तु वक्ष्यमाण-प्रतिबन्धान्न सामग्रीसमवधानमिति भावः । अतिदूरादयश्च दोषाः कारिकया परि-गणिताः—

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च ।। (७) इति ।

समानाभिहारः सजातीयसंवलनम् । यथा माहिषे गव्यमिश्रणान्माहिषत्वा-ग्रहणमिति ।।१०८।।

नन्वतिदूरत्वादिषु मध्ये प्रकृत्याद्युपलम्भे किं प्रतिबन्धकमिति तत्राह—

सौक्ष्म्यात्[3] तदनुपलब्धिः[4] ।।१०९।।

तयोः पूर्वोक्तयोः प्रकृतिपुरुषयोरनुपलब्धिस्तु सौक्ष्म्यादित्यर्थः । सूक्ष्मत्वं च नाणुत्वम्, विश्वव्यापनात् । नापि दुरूहत्वादिकम्, दुर्वचत्वात् । किन्तु प्रत्यक्ष-

१. कठोप० १।२।१२ (अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति) ।

२, इन्द्रियस्योपादानात् संबन्धात् कश्चित् पदार्थो विषयो भवति, तथा हानात् संबन्धाभावात् स एव अविषयो भवति । अतिदूरत्वादि-कारणैरसंबन्धो भवति इति वृत्तिसंमतं सूत्रतात्पर्यम् । भिक्षुमते इन्द्रियघातः इन्द्रियग्रहः अतिदूरत्वादिदोषाश्च हेतवो विषयस्याविषयीभवने । अतिदूरत्वादेः हानो-पादानाभ्यां ( = सन्निकर्षाभाव-सन्निकर्षसद्भावाभ्याम्) इन्द्रियस्य विषयोऽपि अविषयो भवति, अविषयोऽपि विषयो भवति इति सूत्रतात्पर्यमिति प्रतीयते ।

३. तदिति प्रकृतिपुरुषौ (भिक्षुः), प्रकृतिरेवेति वृत्तिः । पूर्वसूत्रस्थं किम् पदमत्र परामृष्टमिति निःसंशयेन न ज्ञातुं शक्यते । वस्तुतः सूत्रमिदं अष्टमकारि-कानुकृतिरेव, अतः कारिकासंमतोऽर्थ एवात्र ग्राह्यः ।

४. तुल० 'संसर्गाच्चास्य सौक्ष्म्यम्, सौक्ष्म्याच्चानुपलब्धिरिति' (व्यासभा० ३। १३) । संसर्गात् = स्वकारणलयात्; सौक्ष्म्यम् = दर्शनानर्हत्वम् । अस्य = त्रैलोक्यस्य ।

प्रमाप्रतिबन्धिका जातिः। योगजधर्मस्य चोत्तेजकतया प्रकृतिपुरुषादीनां प्रत्यक्षप्रमा भवति। जातिसाङ्कर्यं च न दोषावहम्। अथवा निरवयवद्रव्यत्वमेवात्र सूक्ष्मत्वं योगजधर्मश्चोत्तेजक एवेति ॥१०९॥

नन्वभावादेवानुपलब्धिसम्भवे किमर्थं सौक्ष्म्यं कल्प्यते। अन्यथा च शशशृङ्गादेरपि सौक्ष्म्यादनुपलब्धिः किं न स्यादिति तत्राह—

**कार्यदर्शनात् तदुपलब्धेः[1] ॥११०॥**

कार्यान्यथानुपपत्त्या प्रकृत्यादिसिद्धौ सत्यां तेषां सूक्ष्मत्वं कल्प्यते। अनुमानात् पूर्वं च सूक्ष्मत्वादिसंशयेनाभावानिर्णयादनुमानमुपपद्यत इत्यर्थः ॥११०॥

अत्र शङ्कते—

**वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत्[2] ॥१११॥**

ननु कार्यं चेदुत्पत्तेः प्राक्सिद्धं स्यात् तदा तदाधारतया नित्या प्रकृतिः सेत्स्यति, कार्यसाहित्येनैव कारणानुमानस्य वक्ष्यमाणत्वात्। वादिविप्रतिपत्तेस्तु सत्कार्यस्यैवासिद्धिरिति यदीत्यर्थः ॥१११॥

अभ्युपेत्य परिहरति—

**तथाप्येकतरदृष्ट्या एकतरसिद्धेर्नापलापः[3] ॥११२॥**

मास्तु सत् कार्यं तथाप्येकतरस्य कार्यस्य दृष्ट्याऽन्यतरस्य कारणस्य सिद्धेरपलापो नास्त्येवेति नित्यं कारणं सिद्धमेव, तत एव च परिणामिनः सकाशादपरिणामितया पुरुषस्य विवेकेन मोक्षोपपत्तिरित्यर्थः। अनेनैवाभ्युपगमवादेन वैशेषिकाद्यास्तिकशास्त्रं प्रवर्तते। अतो न सत्कार्यवादिश्रुतिस्मृतिविरोधेऽपि तेषामंशान्तरेष्वप्रामाण्यमिति मन्तव्यम् ॥११२॥

---

१. तुल० कार्यतस्तदुपलब्धेः (सां० का० ८)।

२. तदिति सर्वनाम्ना कार्यस्य कार्यदर्शनस्य वा ग्रहणं संगतं स्यात्, न पुनः कारणस्थितकार्यसत्तायाः। किंच प्रायः सर्वेषु दार्शनिकमतेषु मतभेददर्शनात् 'वादिविप्रतिपत्तेः तदसिद्धिरिति चेत्' इत्येतादृशं सूत्रं निष्प्रयोजनमेव। मन्ये १।१११ सूत्रे 'वादिविप्रतिपत्ती'ति शब्ददर्शनेन सत्कार्यवादविषयकमिदं सूत्रमिति व्याख्याकाराः चिन्तयन्ति। वृत्तिमते तदिति-पदेन प्रधानस्य ग्रहणं भवति। यतः १।१०९-११० सूत्रयोः प्रधानानुपलब्धिविषयको विचारः कृतः, अतः १।१११ सूत्रेऽपि प्रधानासिद्धिरेव विषयः प्रसक्त एवेति वृत्तिकारीया दृष्टिः।

३. एकतरस्य (=कार्यस्य) दृष्ट्या एकतरस्य (=कारणस्य) सिद्धेः न अपलापः (कारणस्य) इति भाष्यदर्शितः सूत्रार्थः। वृत्तिमते तु एकपक्षदृष्ट्या पक्षान्तरस्यासिद्धिर्भवत्येव; अतएव सांख्यमतसिद्धस्य कारणस्यापलापो विरुद्धपक्षदर्शनादेव न भवितुमर्हति। ईदृशी युक्ति र्ब्रह्मसूत्रेऽपि प्रयुक्ता—स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्र संगात् इति (२।१।१)।

परमार्थतः परिहारमाह—

त्रिविधविरोधापत्तेश्च[1] ॥११३॥

अथ सर्वं कार्यं त्रिविधं सर्ववादिसिद्धमतीतमनागतं वर्त्तमानमिति । तत्र यदि कार्यं सदा सन्नेष्यते तदा त्रिविधत्वानुपपत्तिः । अतीतादिकाले घटाद्यभावेन घटादेरतीतादिधर्मकत्वानुपपत्तेः, सदसतोः सम्बन्धानुपपत्तेः । किञ्च प्रतियोगित्वस्य प्रतियोगिरूपत्वे तद्दोषतादवस्थ्यात् । अभावमात्रस्वरूपत्वे पटाद्यभावो घटाद्यभावः स्यादभावत्वाविशेषात् । अभावेष्वपि स्वरूपतो विशेषाङ्गीकारे चाभावत्वस्य परिभाषामात्रत्वप्रसङ्गात् ।

अथ प्रतियोग्येवाभावविशेषक इति चेन्न; असतः प्रतियोगिनः प्रागभावादिषु विशेषकत्वासम्भवादिति ।

तस्मान्नित्यस्यैव कार्यस्यातीतानागत-वर्त्तमानावस्थाभेदा एव वक्तव्याः । घटोऽतीतो घटो वर्त्तमानो घटो भविष्यन्निति प्रत्ययानां तुल्यरूपतौचित्यात् । न त्वेकस्य भावविषयत्वमन्ययोश्चाभावविषयत्वमिति । ते एवातीतानागतत्वे अवस्थे ध्वंसप्रागभावव्यवहारं जनयतस्तदतिरिक्ताभावद्वये प्रमाणाभावादिति दिक् । अधिकं तु पातञ्जले द्रष्टव्यम् (योगवा० ४।१२) ।

एवमत्यन्ताभावाऽन्योऽन्याभावावप्यधिकरणस्वरूपावेव । न चैवं प्रतियोगि-सत्ताकालेऽप्यधिकरणस्वरूपानपायादत्यन्ताभावप्रत्ययप्रसङ्ग इति वाच्यम्, परैरपि प्रतियोगिमति देशे तदत्यन्ताभावाङ्गीकारात् । प्रतियोगिसम्बन्धस्यातीता-नागतावस्थयोरेव सामयिकात्यन्ताभावत्वसम्भवाच्च । तस्मान्नास्मत्सिद्धान्तेऽभा-वोऽतिरिक्तः ।

किञ्च घटो ध्वस्तो घटो भावी घटोऽत्र नास्तीत्यादिप्रत्ययनियामकतया किञ्चिद्वस्त्वाकाङ्क्षायां तद्भावरूपमेव कल्प्यते लाघवात् । अभावस्यादृष्टस्य कल्पने गौरवादिति मन्तव्यम् ॥११३॥

इतश्च सत्कार्यसिद्धिरित्याह—

नासदुत्पादो नृशृङ्गवत्[2] ॥११४॥

---

१. यदि प्रकृतिर्जगत्कारणं न स्यात् तर्हि जगत् सत्त्वादिगुणरहितं (=सुख-दुःखमोहात्मकत्वशून्यं) स्यात् इति गुणत्रयविरोधापत्तेः त्रिगुणरूपं प्रधानं जगत्कारणत्वेनाभ्युपगन्तव्यमिति सूत्रतात्पर्यं वृत्तिमते। वृत्तिकारस्य व्याख्यानमिदं काल्पनिकमिति प्रतिभाति। यदि सूत्रमिदं कार्यकारणभाव-विषयकं स्यात् तर्हि भिक्षुदर्शितः सूत्रार्थः कथंचित् संगच्छेत, यद्यपि सूत्रा-क्षरतः प्रकरणतो वा सूत्रस्य तात्पर्यं न सुष्ठु विज्ञायते ।

२. नृशृङ्गोत्पत्त्यभाव आरम्भवाददृष्ट्या यथा संगच्छते तथा न्यायवार्त्तिके प्रदर्शितम् (४।१।४९ अत्र गर्दभशृङ्गविषयको विचारः) । अत्रत्यानां सत्-कार्यवाद-प्रतिपादकयुक्तीनां समीक्षा नैयायिकैः विस्तरतरकेण कृता; द्र० न्यायसू० ४।१।४० गतानि व्याख्यानानि; न्यायकन्दली पृ० ३३९-३४६ ।

नरशृङ्गतुल्यस्यासत उत्पादोऽपि न सम्भवतीत्यर्थः ॥११४॥

अत्र हेतुमाह—

उपादाननियमात्[1] ॥११५॥

मृद्येव घट उत्पद्यते तन्तुष्वेव पट इत्येवं कार्याणामुपादानकारणं प्रति नियमोऽस्ति। स न सम्भवति, उत्पत्तेः प्राक् कारणे कार्यासत्तायां हि न कोऽपि विशेषोऽस्ति येन कश्चिदेवासन्तं जनयेन्नेतरमिति। विशेषाङ्गीकारे च भावत्वापत्तेर्गतमसत्तया। स एव च विशेषोऽस्माभिः कार्यस्यानागतावस्थेत्युच्यत इति।

एतेन यद्वैशेषिकाः प्रागभावमेव कार्योत्पत्तिनियामकं कल्पयन्ति, तदप्यपास्तम्। अभावकल्पनापेक्षया भावकल्पने लाघवात्। भावानां दृष्टत्वादन्यानपेक्षत्वाच्च। किञ्चाभावेषु स्वतो विशेषे भावत्वापत्तिः। प्रतियोगिरूपविशेषश्च प्रतियोग्य-सत्ताकाले नास्ति। अतोऽभावानामविशिष्टतया न कार्योत्पत्तौ नियामकत्वं युक्तमिति ॥११५॥

उपादाननियमे प्रमाणमाह—

सर्वत्र सर्वदा सर्वासम्भवात् ॥११६॥

सुगमम्। उपादानानियमे च सर्वत्र सर्वदा सर्वं सम्भवेदित्याशयः ॥११६॥

इतश्च नासदुत्पाद इत्याह—

शक्तस्य शक्यकरणात् ॥११७॥

कार्यशक्तिमत्त्वमेवोपादानकारणत्वम्, अन्यस्य दुर्वचत्वात्, लाघवाच्च। सा शक्तिः कार्यस्यानागतावस्थैवेत्यतः शक्तस्य शक्यकार्यकरणान्नासत उत्पाद इत्यर्थः ॥११७॥

इतश्च— कारणभावाच्च[2] ॥११८॥

उत्पत्तेः प्रागपि कार्यस्य कारणाभेदः श्रूयते, तस्माच्च सत्कार्यसिद्ध्या नासदुत्पाद इत्यर्थः। कार्यस्यासत्त्वे हि सदसतोरभेदानुपपत्तिरिति। उत्पत्तेः प्राक् कार्याणां कारणाभेदे च श्रुतिः—तद्धेदं तर्ह्यव्याकृतमासीत् (बृहदा० १।४।७), सदेव सोम्येदमग्र आसीत् (छान्दोग्य ६।१।२), आत्मैवेदमग्र आसीत् (मैत्री ५।२), आप एवेदमग्र आसुः (बृहदा० ५।५।१) इत्याद्याः[3] ॥११८॥

---

१. उद्धृतमिदं सूत्रं न्यायभाष्ये—'यत् पुनरुक्तं प्रागुत्पत्तेः कार्यं नासद् उपादान-नियमादिति (न्याय भा० ४।१।५०); प्राङ्निष्पत्तेर्निष्पत्तिधर्मकं नासद् उपादाननियमात्' (न्यायभा० ४।१।४७)।

२. किमर्थकोऽयं चकार इति न ज्ञायते। युक्त्यन्तरस्य समुच्चयो नात्र विवक्षित इत्यतः चकारप्रयोगो व्यर्थ एव।

३. अद्वैतिनोऽपि सत्कार्यवादमभ्युपगच्छन्ति। आह आनन्दगिरिः—यथा वटवृक्षो वटकणिकायां प्रागपि जन्मनो वर्तते, नरविषाणवद् असतो जन्मायोगात्, तथापि नोपलभ्यते तथैव कारणाकारावस्थितमन्तःकरण मनभिव्यक्तनामरूपत्वात् नाभिव्यक्तिभाग् भवति (आत्मज्ञानोपदेशविधि—२।३।१ वाक्यव्याख्याने)।

शङ्कते—

न भावे भावयोगश्चेत्[1] ॥११६॥

नन्वेवं कार्यस्य नित्यत्वे सति भावरूपे कार्ये भावयोग उत्पत्तियोगो न सम्भवति। असतः सत्त्व एवोत्पत्तिव्यवहारादिति चेदित्यर्थः ॥११६॥

परिहरति—

नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥१२०॥

कार्योत्पत्तेर्व्यवहाराव्यवहारौ कार्याभिव्यक्तिनिमित्तकौ। अभिव्यक्तित उत्पत्ति-व्यवहारोऽभिव्यक्त्यभावाच्चोत्पत्तिव्यवहाराभावः, न त्वसतः सत्त्वयेत्यर्थः।

अभिव्यक्तिश्च न ज्ञानं किन्तु वर्तमानावस्था। कारणव्यापारोऽपि कार्यस्य वर्तमानलक्षणपरिणाममेव जनयति सतश्च कार्यस्य कारणव्या पारादभिव्यक्तिमात्रं लोकेऽपि दृष्टम्। यथा शिलामध्यस्थप्रतिमाया लैङ्गिकव्यापारेणाभिव्यक्तिमात्रं तिलस्थतैलस्य च निष्पीडनेन, धान्यस्थतण्डुलस्य चावघातेनेति। तदुक्तं वासिष्ठे —

सुषुप्तावस्थया चक्रपद्मरेखाः शिलोदरे।
यथा स्थिता चितेरन्तस्तथेयं जगदावली ॥

इति। प्रकृतिद्वारेणेत्यर्थः ॥१२०॥

ननु भवतूत्पत्तेः प्राक् सतो यथाकथञ्चिदुत्पत्तिः। नाशस्त्वनादिभावस्य कथं स्यादित्याकाङ्क्षायामाह—

[2]नाशः कारणलयः[3] ॥१२१॥

लीङ् श्लेषणे (धातुपाठ ६।३३) इत्यनुशासनाल्लयः सूक्ष्मतया कारणेष्व-विभागः। स एवातीताख्यो नाश इत्युच्यत इत्यर्थः। अनातगाख्यस्तु लयः प्रागभाव इत्युच्यत इति शेषः। लीनकार्यव्यक्तेस्तु पुनरभिव्यक्तिर्नास्ति। प्रत्यभिज्ञाद्यपत्त्या

---

१. भावे भावयोगश्चेन् न वाच्यम् इति वृत्तिसंमतः पाठः। 'न वाच्यम् = घटो भविष्यति उत्पद्यते, नष्टश्च इत्येवंरूपो व्यपदेशो न स्यात् इत्यर्थं इति वृत्तिकारः। भावरूपे कार्ये भावरूपोत्पत्तियोगो न संभवतीति उच्यते चेत्—इति तात्पर्यं भाष्यमते। उभयमते शङ्कापर मिदं सूत्रम्।

२. णश अदर्शने; अदर्शनमनुपलब्धिरिति शाब्दिक-क्षीरस्वामिवचनं नाशस्वरूपं सांख्यानुमतमवगमयति (क्षीरतरङ्गिणी ४।८५)।

३. अत्रेदं शान्तिपर्वस्थं वाक्यमालोच्यम्—यस्माद् यदभिजायेत तत् तत्रैव प्रलीयते। लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना॥ (३०६।३१)। अश्वमेधपर्वण्यप्युक्तम्—यद् यस्माज् जायते भूतं तत्र तत् प्रविलीयते। लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् (४२।४)। आह भगवान् देवलः— यो यस्मादुत्पद्यते स तस्मिन् लीयते इति वाऽप्ययक्रम इति।

पातञ्जले निराकृतरात्[1], परेषामिवास्माकमप्यनागतावस्थायाः प्रागभावाख्याया अभिव्यक्तिहेतुत्वाच्चेति ।

नन्वतीतमप्यस्तीत्यत्र किं प्रमाणम्, न ह्यनागतसत्तायामिव श्रुत्यादयोऽतीतसत्तायामपि स्फुटमुपलभ्यन्त इति; मैवम्, योगिप्रत्यक्षत्वान्यथानुपपत्त्याऽनागतातीतयोरुभयोरेव सत्त्वसिद्धेः[2] । प्रत्यक्षसामान्ये विषयस्य हेतुत्वात् । अन्यथा वर्त्तमानस्यापि प्रत्यक्षेणासिद्धचापत्तेः । तस्माद् धियामौत्सर्गिकप्रामाण्येनासति[3] बाधके योगिप्रत्यक्षेणातीतमप्यस्तीति सिध्यति । योगिनामतीतानागतप्रत्यक्षे च श्रुतिस्मृतीतिहासादिकं प्रमाणं योगवार्त्तिके प्रपञ्चितमिति दिक् ।

तदेवमभिव्यक्तिलयाभ्यां कार्याणामुत्पत्तिनाशव्यवहारावुक्तौ । नन्वभिव्यक्तिरपि[4] पूर्वं सती वाऽसती वा ? आद्ये कारणव्यापारात् प्रागपि कार्यस्याभिव्यक्तया स्वकार्यजनकत्वापत्तिः कारणव्यापारश्च विफलः; अन्त्ये चाभिव्यक्तावेव सत्कार्यसिद्धान्तक्षतिः, असत्या एवाभिव्यक्तेरभिव्यक्त्यङ्गीकारादिति ।

अत्रोच्यते—कारणव्यापारात् प्राक् सर्वकार्याणां सदा सत्त्वाभ्युपगमेनोक्तविकल्पानवकाशाद्, घटवत् तदभिव्यक्तेरपि वर्तमानावस्थया प्रागसत्त्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारापेक्षणात् । अनागतावस्थया च सत्कार्यसिद्धान्तस्याक्षतेः । नन्वेकदा सदसत्त्वयोर्विरोध इति चेत्, प्रकारभेदस्योक्तत्वात् । नन्वेवमपि प्रागभावानङ्गीकारेण प्रागसत्त्वमेव कार्याणां दुर्वचमिति; मैवम्, अवस्थानामेव परस्पराभावरूपत्वादिति ॥१२१॥

ननु सत्कार्यसिद्धान्तरक्षार्थमभिव्यक्तेरप्यभिव्यक्तिरेष्टव्या । तथा चानवस्थेत्याशङ्क्याह—

**पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवत्[5] ॥१२२॥**

---

१. द्र० ४।१२-१३ योगवार्त्तिकम् । अपि च 'वस्तुप्रत्यभिज्ञानाच्च स्थितोऽन्वयी धर्मी यो धर्मान्यथात्वमभ्युपगतः प्रत्यभिज्ञायते तस्मान्नेदं धर्ममात्रं निरन्वयम्' इति भाष्यमपि सयोगवार्त्तिकम् (३।१४) द्रष्टव्यम् ।

२. द्र० 'प्रागुत्पत्तेरपि कसद्' इति मतस्य व्याख्यानावसरे शंकराचार्य आह—'योगिनां चातीतानागतज्ञानस्य सत्यत्वात् । असंश्चेद् भविष्यद् घट ऐश्वरं भविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात् । न च प्रत्यक्षमुपचर्यते । घटसद्भावे हि अनुमान मवोचाम (बृहदा० १।२।१ शां० भा०) ।

३. तुल० 'तत्त्वपक्षपातो हि धियां स्वभाव इति न्यायेन सकृज्जातमपि प्रमाणज्ञानं न नश्यति' (शां० ३०७।२२ नीलकण्ठी टीका) ।

४. आविर्भावः पटस्य कारणव्यापारात् प्राक् सन्नसन् वा···इति तत्त्वकौमुदीगतः सन्दर्भोऽत्र दर्शनीयः (११ का०) ।

५. परम्परारूपेण अभिव्यक्तरेनुधावनं न दोषाय बीजाङ्कुरवदिति सूत्रार्थः । अनाद्यनवस्थायाः प्रामाणिकत्वाद् नात्र दोषः । द्र० 'बीजाङ्कुरादिवत् प्रामाणिकत्वेन अदोषत्वस्य सांख्यसूत्रेणोक्तत्वात्' (योगवा० १।४३) ।

पारम्पर्यतः परम्परारूपेणैवाभिव्यक्तेरनुधावनं कर्तव्यम्, बीजाङ्कुरवत् प्रामाणिकत्वेन चास्या अदोषत्वादित्यर्थः। बीजाङ्कुराभ्यां चाश्रायमेव विशेषो यद् बीजाङ्कुरस्थले क्रमिकपरम्परयाऽनवस्था, अभिव्यक्तौ चैककालीनपरम्परयेति। प्रामाणिकत्वन्तु तुल्यमेवेति।

सर्वकार्याणां स्वरूपतो नित्यत्वमवस्थाभिर्विनाशित्वं चेति पातञ्जलभाष्ये (३।१३; ४।१२) वदद्भिर्व्यासदेवैरपीयमनवस्था प्रामाणिकत्वेन स्वीकृतेति।

अत्र च बीजाङ्कुरदृष्टान्तो लोकदृष्ट्योपन्यस्तः। वस्तुतस्तु जन्मकर्मादिवदित्यत्रैव तात्पर्यम्। तेन बीजाङ्कुरप्रवाहस्यादिसर्गावधिकत्वेनानवस्थाविरहेऽपि न क्षतिः। आदिसर्गे हि वृक्षं विनैव बीजमुत्पद्यते हिरण्यगर्भसङ्कल्पेन तच्छरीरादिभ्य इति[1] श्रुतिस्मृत्योः प्रसिद्धम्—

यथा हि पादपो मूलस्कन्धशाखादिसंयुतः।
आदिबीजात् प्रभवति बीजान्यन्यानि वै ततः॥ (२।७।३२)

इति विष्णुपुराणादिवाक्यैरिति ॥१२२॥

वस्तुतस्त्वनवस्थापि नास्तीत्याह—

उत्पत्तिवद्वाऽदोषः ॥१२३॥

यथा घटोत्पत्तेरुत्पत्तिः स्वरूपमेव वैशेषिकादिभिरसदुत्पादवादिभिरिष्यते[2] लाघवात् तथैवास्माभिर्घटाभिव्यक्तेरप्यभिव्यक्तिः स्वरूपमेवेष्टव्या लाघवात्। अत उत्पत्ताविवाभिव्यक्तावपि नानवस्थादोष इत्यर्थः। [3]अथैवमभिव्यक्तेरभिव्यक्त्यनङ्गीकारे कारणव्यापारात् प्राक् तस्याः सत्त्वानुपपत्त्या सत्कार्यवादक्षतिरिति चेन्न। अस्मिन् पक्षे सत एवाभिव्यक्तिरित्येव सत्कार्यसिद्धान्त इत्याशयात्। अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिः।

नन्वेवं महदादीनामेव प्रागसत्त्वमिष्यताम्, किमभिव्यक्त्याख्यावस्थाकल्पनेनेति चेन्न। तद्धेदं तर्ह्यव्याकृतमासीद् (बृहदा० १।४।७) इत्यादिश्रुतिभिरव्यक्तावस्थया

---

१. उद्भिज्जदेहबीजभूतः पदार्थः (अयमपि जीवविशेष एव) स्वतः (बाह्यकारण-मन्तरेण) प्रादुर्भवति आदिसर्गे। उक्तं हि—उद्भिज्जा जन्तवो यद्वद् शुक्लजीवा यथा यथा। अनिमित्तात् सम्भवन्ति' इति। ब्रह्माण्डाभिव्यक्तिहेतुभूतो हिरण्यगर्भसंकल्पोऽत्र मूलं कारणमिति कथयितुं शक्यत एव।

२. अथ उत्पत्तिः पटान्नार्थान्तरम्''' इति तत्त्वकौमुदीगतः सन्दर्भोऽत्र दर्शनीयः (कारिका ९)।

३. अभिव्यक्तेरभिव्यक्त्यङ्गीकारविषये द्र० योगवा० १।४३।

सतामेव कार्याणामभिव्यक्तिसिद्धेः, तथाप्यभिव्यक्तेः प्रागभावादिस्वीकारापत्तिरिति चेन्न । तिसृणामनागताद्यवस्थानामन्योऽन्यस्याभावरूपतयोक्तत्वात् । तादृशाभावनिवृत्त्यैव च कारणव्यापारसाफल्यादिसम्भवात् ।

अयमेव हि सत्कार्यवादिनामसत्कार्यवादिभ्यो विशेषो यत् तैरुच्यमानौ प्रागभावध्वंसौ सत्कार्यवादिभिः कार्यस्यानागतातीतावस्थे भावरूपे प्रोच्येते । वर्तमानताख्या चाभिव्यक्त्यवस्था घटाद्यतिरिक्तेष्यते, घटादेवस्थात्रयवत्त्वानुभवादिति । अन्यत् तु सर्वं समानम् । अतो नास्त्यस्मास्वधिकशङ्कावकाश इति दिक् ॥१२३॥

कार्यदर्शनात् तदुपलब्धेरिति (१।११०) सूत्रेण कार्येण मूलकारणमनुमेयमित्युक्तम् । तत्र कियत्पर्यन्तं कार्यमित्यवधारयितुं सर्वकार्याणां साधर्म्यमाह—

[1]हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्[2] ॥१२४॥

कारणानुमापक[3]त्वाल्लयगमनाद्वाऽत्र लिङ्गं कार्यजातम्, न तु महत्तत्त्वमात्रमत्र विवक्षितं हेतुमत्त्वादीनामखिलकार्यसाधारण्यात् ।

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ (१०)

इति कारिकायामप्यत एव व्यक्ताख्यं सर्वं कार्यमेव लिङ्गमित्युक्तम् । तथा च तल्लिङ्गं हेतुमत्त्वादिधर्मकमिति वाक्यार्थः ।

तत्र हेतुमत्त्वं कारणवत्त्वम् । अनित्यत्वं विनाशिता । प्रधानस्य या व्यापिता पूर्वोक्ता तद्वैपरीत्यमव्यापित्वम् । सक्रियत्वमध्यवसायादिरूपनियतकार्यकारित्वम् । प्रधानस्य तु सर्वक्रियासाधारण्येन कार्यैकदेशमात्रकारित्वम् । न च क्रिया कर्मैव वक्तुं शक्यते, प्रकृतिक्षोभात् सृष्टिश्रवणेन प्रकृतेरपि कर्मवत्तयाऽत्र सक्रियत्वा-

---

१. अव्यापीति वृत्तौ न पठ्यते ।

२. लिङ्गं कार्यजातमिति भिक्षुः । हेतुमदादीनि पदानि लिङ्गस्यैव विशेषणानि । वृत्तिमते स्वकारणे यत् लयं गच्छति तल् लिङ्गम् इति । प्रकृतिकार्यं यत् तल् लिङ्गमिति तात्पर्यम् । सावयव-परतन्त्र-पदे कारिकोक्ते किमर्थं परित्यक्ते इति न ज्ञायते । अत्र सूत्रे लिङ्गपदेन कार्यजातमेव ग्राह्यमित्यत्र न निश्चायकं प्रमाणं किमपि । आश्रितानित्यादिपदैरपि सोऽर्थः अवगन्तुं शक्यते । अतः भिक्षुव्याख्या काल्पनिकी । सूत्रमिदं दशमसांख्यकारिकानुसारीति व्यक्तमेव प्रतीयते । अन्यथा हेतुमदादिपदानां क्रमः कारिकावत् न स्यात् । नह्ययं क्रम स्तात्पर्यवान्; वृत्तरक्षार्थमेवायं क्रम आश्रितः कारिकाकारेण । 'सावयवं परतन्त्रम्' इति कारिकोक्ते पदे किमर्थं सूत्रे न स्थापिते इति न विज्ञायते । सूत्ररचनायां शैथिल्यमेवात्र कारणमिति प्रतीयते ।

३. द्र० लीनार्थगमकं चिह्नं लिङ्गमित्यभिधीयते (शिव० विद्येश्वर० १०।१०६) । व्याप्तिबलेन लीनमर्थं गमयतीति लिङ्गमिति नैयायिकाः ।

पत्तेरिति। अनेकत्वं सर्गभेदेन भिन्नत्वम्, सर्गद्वयासाधारण्यमिति यावत्; न पुनः सजातीयानेकव्यक्तिकत्वम्, प्रकृतावतिव्याप्तेः, प्रकृतेरपि सत्त्वाद्यनेकरूपत्वात्। सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वाद् (६।३९) इत्यागामिसूत्रादिति। आश्रितत्वं चावयवेष्विति ॥१२४॥

कार्यकारणयोर्भेदे हेतुमत्त्वादि सिध्यतीत्यतः कारणातिरिक्तकार्यसिद्धौ प्रमाणान्याह—

**आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद् वा[1]॥१२५॥**

तत्सिद्धिर्लिङ्गाख्यकार्यस्य कारणातिरेकतः सिद्धिः क्वचिदाञ्जस्यात् प्रत्यक्षत एवानायासेन भवति। यथा स्थौल्यादिना धर्मेण तन्त्वादिभ्यः पटादीनाम्। क्वचिच्च गुणसामान्यादेरभेदतो गुणसामान्याद्यात्मकत्वेन लिङ्गेनानुमानेन भवति। यथाध्यवसायादिगुणात्मकत्वरूपेण कारणवैधर्म्येण महदादीनाम्। यथा च महापृथिवीत्वादिसामान्यात्मकतारूपेण कारणवैधर्म्येण[2] पृथिव्यादीनाम्। क्वचित् त्वादिशब्दगृहीतेन कर्माद्यात्मकतावैधर्म्येण—यथा स्थिरावयवेभ्योऽतिरिक्तस्य चञ्चलावयविनः।

तथा प्रधानव्यपदेशात् प्रधानश्रुतेरपि कारणातिरिक्तकार्यसिद्धिर्भवति। प्रधीयतेऽस्मिन् हि कार्यजातमिति प्रधानमुच्यते। तच्च कार्यकारणयोर्भेदाभेदौ विना न घटते, अत्यन्ताभेदे स्वस्याधारत्वासम्भवादित्यर्थः। कार्याणां साधर्म्यरूपं लक्षणं कारणातिरिक्तकार्येषु प्रमाणं च सूत्राभ्यां दर्शितम् ॥१२५॥

इदानीं कार्यसधर्मकतया कारणानुमानाय कार्यकारणयोरपि साधर्म्यं प्रदर्शयति—

**[3]त्रिगुणाचेतनत्वादि द्वयोः[4] ॥१२६॥**

---

१. अस्पष्टार्थमिदं सूत्रम्। तत्सिद्धिरित्यस्य 'कारणातिरेकतः कार्यस्य सिद्धिः' इत्यर्थः न प्रकारणगम्यः। प्रधानव्यपदेशाद् = कार्यस्य यत् कारणं तस्य प्रधानेति नामकरणात् इति भाष्यदर्शितोऽर्थोऽपि क्लिष्ट एव। वैशेषिकादिसंमतानां गुणसामान्यादीनां पदार्थानां सांख्योक्ततत्त्वेष्वेव अन्तर्भावः स्वरूपतो भवति, अभेदतो वा, गुणादीनां प्रधानकार्यत्वाद् वा—इति वृत्त्यनुसारी सूत्रार्थः। तत् सिद्धिः = तेष्वेवान्तर्भावात् सिद्धिरित्यर्थः वृत्तौ। अयमर्थः कथंचित् संगतोऽपि क्लिष्ट एव।

२. तन्मात्रवैधर्म्येण (पाठा०)।

३. एकादशकारिकायां त्रिगुणमविवेकिविषयादीनि पदानि उपात्तानि; अतः कथमस्मिन् सूत्रे 'त्रिगुणाचेतनत्वादि' इत्युक्तम्? त्रिगुणत्वाचेतनत्वपदेप्र धानं सम्यग्रूपेण लक्ष्यत इति ते एव उक्ते। सांख्यसमालोचकैरपि तस्याचेतनत्वं त्रिगुणत्वं चाश्रित्य विशेषतः समीक्षा कृता। तुल० अतश्च न प्रधानं सांख्यपरिकल्पितं जगत्कारणम्, प्रधानस्य अचेतनत्वाभ्युपगमात् (छान्दोग्य ६।२।३ भाष्य); तत्र सांख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति मन्यमाना आहुः (शारीरक १।१।५)।

४. द्वयोरित्यनेन कार्यकारणे (व्यक्ताव्यक्ते) लक्ष्येते इति भाष्यवृत्तौ। क्लिष्टोऽयमर्थः, यद्यपि अर्थोऽयं सांख्यीय एव।

द्वयोः कार्यकारणयोरेव त्रिगुणत्वादिसाधर्म्यमित्यर्थः। आदिशब्दग्राह्याश्च कारिकायामुक्ताः—

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ (११) इति ।

त्रयः सत्त्वादिद्रव्यरूपा गुणा अत्र सन्तीति त्रिगुणम्। तत्र महदादिषु कारणरूपेण सत्त्वादीनामवस्थानं गुणत्रयसमूहरूपेण तु प्रधाने सत्त्वादीनामवस्थानं वने वृक्षवदेवावगन्तव्यम्; अथवा सत्त्वादिशब्देन सुख-दुःखमोहानामपि वचनात् कार्यकारणयोस्त्रिगुणत्वं समञ्जसमिति। अविवेकिविषयोऽज्ञैरेव दृश्यम्, भोग्यमिति यावत्[1]। अविवेकि च विषयश्चेति तच्छेदे त्वविवेकित्वं सम्भूयकारित्वम्, विषयत्वं तु भोग्यत्वमेव। सामान्यं सर्वपुरुषसाधारणम्, पुरुषभेदेऽप्यभिन्नमिति यावत्। प्रसवधर्मि परिणामि। व्यक्तं कार्यम्। प्रधानं कारणमित्यर्थः। कार्यकारणयोरन्योऽन्यवैधर्म्यमपि कारिकया दर्शितम्—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ (१०) इति ।

अत्रैकत्वं सर्गभेदेऽप्यभिन्नत्वम्। अतः प्रकृतेरनेकव्यक्तिकत्वेऽपि नैकत्वक्षतिः—

महान्तं च समावृत्य प्रधानं समवस्थितम् ।
अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते[2]॥ (२।७।२५ ख—२६क)

इति विष्णुपुराणेनासङ्ख्येयतावचनात् तु प्रधानस्य व्यक्तिबहुत्वसिद्धिरिति ॥१२६॥

प्रधानाख्यानां जगत्कारणगुणानामन्योऽन्यविवेकाय तेषामवान्तरमपि वैधर्म्यं सिद्धान्तयति, विविधजगत्कारणत्वोपपत्तये च; न ह्येकरूपात् कारणाद्विचित्रकार्याणि सम्भवन्तीति—

**प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम्[3] ॥१२७॥**

गुणानां सत्त्वादिद्रव्यत्रयाणामन्योऽन्यं सुखदुःखाद्यै वैधर्म्यं कार्येषु तद्दर्शनादित्यर्थः। सुखादिकं च घटादेरपि रूपादिवदेव धर्मोऽन्तःकरणोपादानत्वादन्यकार्याणामित्युक्तम्।

---

१. अर्थोऽयमसमीचीनः, व्यक्ताव्यक्ते विवेकिनामपि विषयौ इति सिद्धान्तात्।

२. एतद् व्याख्याने श्रीधर आह—"उत्पत्तिनाशवन्ति परिच्छिन्नानि च पृथिव्यादिसप्तावरणानि। प्रधानं तु न तथेत्याह अनन्तस्येति। सर्वगतस्य तस्यान्तो नाशो नास्ति। सांख्यानं च दशगुणात्मकं यतस्तदनन्तं नित्य मसंख्यातम् अप्रमाणं च; न विद्यते संख्यानं प्रमाणं यस्य तथाभूतं च तौ प्रसिद्धम्" इति। ब्रह्मपुराणेऽपि (२३।२५ ख—२६क) श्लोकोऽयं दृश्यते।

३. गुणस्वभावविषये द्र० शान्ति० १६४।३१-३३; २१२; २१८-२१९; देवीभाग० ३।७-६; अश्वमेध ३६-३९; भागवत ११।२५।

अत्रादिशब्दग्राह्याः [1]पञ्चशिखाचार्यैरुक्ताः, यथा—सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम्। एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम्। एवं तमोऽपि निद्रादिनानाभेदं समासतो मोहात्मकमिति।

अत्र प्रीत्यादीनां गुणधर्मत्ववचनादागामिसूत्रे च लघुत्वादेर्वक्ष्यमाणत्वात् सत्त्वादीनां द्रव्यत्वं सिद्धम्। सुखाद्यात्मकता तु गुणानां मनसः सङ्कल्पात्मकतावद्धर्मधर्म्यभेदादेवोपपद्यते, न वैशेषिकोक्ताः सुखादय एव सत्त्वादिगुणा इति। सत्त्वादित्रयमपि व्यक्तिभेदादनन्तम्। अन्यथा हि विभुमात्रत्वे गुणविमर्दवैचित्र्यात् कार्यवैचित्र्यमिति सिद्धान्तो नोपपद्यते, विमर्देऽवान्तरभेदासम्भवात् ॥१२७॥

गुणानां सत्त्वादीनामेकैकव्यक्तिमात्रत्वे वृद्धिह्रासादिकं नोपपद्यते तथा परिच्छिन्नत्वे च तत्समूहरूपस्य प्रधानस्य परिच्छिन्नत्वापत्त्या श्रुतिस्मृतिसिद्धमेकदाऽसङ्ख्यब्रह्माण्डादिकं नोपपद्यते। अतोऽसङ्ख्यत्वे गुणानां त्रित्वसङ्ख्योपपादनाय विवेकाद्यर्थं च तेषां साधर्म्यवैधर्म्ये प्रतिपादयति—

[2]लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम्[3] ॥१२८॥

अयमर्थः—लघ्वादीति भावप्रधानो निर्देशः। लघुत्वादिधर्मेण सर्वासां सत्त्वव्यक्तीनां साधर्म्यं वैधर्म्यं च रजस्तमोभ्याम्। पृथिवीव्यक्तीनां पृथिवीत्वेनेव सत्त्वव्यक्तीनामेकजातीयतयैकता सजातीयोपष्टम्भादिना वृद्धिह्रासादिकं च युक्तमित्याशयः। एवं चञ्चलत्वादि-धर्मेण सर्वासां रजोव्यक्तीनां साधर्म्यं सत्त्वतमोभ्यां च वैधर्म्यम्। शेषं पूर्ववत्। एवं गुरुत्वादि-धर्मेण सर्वासां तमोव्यक्तीनां साधर्म्यं सत्त्वरजोभ्यां वैधर्म्यम्। शेषं पूर्ववदिति।

वैधर्म्यांशस्य प्रागेवोक्ततयाऽत्र पुनर्वैधर्म्यकथनं सम्भातायातम्। अत्र वैधर्म्यं वेति पाठः प्रामादिक एवेति।

अत्र सूत्रे सत्त्वादीनां कारणद्रव्याणां प्रत्येकमनेकव्यक्तिकत्वं सिद्धम्। अन्यथा लघुत्वादीनां साधर्म्यत्वानुपपत्तेः समानानां धर्मस्यैव साधर्म्यत्वात्। न च कार्यसत्त्वादीनामनेकतया लघुत्वादिकं साधर्म्यं स्यादिति वाच्यं त्रिगुणात्मकत्वेन घटादीनामपि कार्यसत्त्वादिरूपतया लघुत्वादीनां सत्त्वादिसाधर्म्यत्वानुपपत्तेः। तस्मात् कारणगुणानामेवात्र साधर्म्यादिकमुच्यत इति।

---

१. पञ्चशिखस्य ग्रन्थः काललुप्त एव। अत इमानि वचांसि भिक्षुणा कुत उपलब्धानि इति प्रश्न उदेत्येव। इमानि वचांसि नान्यत्र उद्धृतानि इति विज्ञेयम्।

२. उद्धृतमिदं योगवार्त्तिके (२।१८), ललितासहस्रनामभाष्ये (पृ० १२९ लघुत्वादिधर्मैरन्योन्यं साधर्म्यं ...) च।

३. वृत्तिमते पुरुषार्थत्वम् अन्योन्याभिभवादयश्च साधर्म्यपदेन गृह्यन्ते।

सत्त्वादीनां लघुत्वादिकं चोक्तं कारिकया—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ ( १३ )।

अर्थतः पुरुषार्थनिमित्तात्। नन्वेवं मूलकारणस्य परिच्छिन्नासङ्ख्यव्यक्तिकत्वे वैशेषिकमतादत्र को विशेष इति चेत्; कारणद्रव्यस्य शब्दस्पर्शादिराहित्यमेव।

शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम्।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥ ( १।२।२०ख-२१क)

इति विष्णुपुराणादिभ्यः[1]। एतच्च पातञ्जलेऽस्माभिः प्रपञ्चितम् ( द० वार्त्तिक २।१८-१९ ) ॥ १२८ ॥

ननु महदादीनां स्वरूपतः सिद्धावपि तेषां प्रत्येक्षेणोत्पत्त्यदर्शनात् कार्यत्वे नास्ति प्रमाणं येन तेषां हेतुमत्त्वं साधर्म्यं स्यात्, तत्राह—

[2]उभयथा न्यत्वात् कार्यत्वं महदादेर्घटादिवत् ॥१२९॥

महदादिपञ्चभूतान्तं विवादास्पदं तावन्न पुरुषो भोग्यत्वात्। नापि प्रकृति र्मोक्षान्यथानुपपत्त्या विनाशित्वात्। अतः प्रकृतिपुरुषभिन्नं तद्; भिन्नत्वाच्च कार्यं घटादिवदित्यर्थः ॥ १२९ ॥

ननु विकारशक्तिदाहादिनैव मोक्षाद्युपपत्तेर्विनाशित्वमपि तेषामसिद्धमित्याशङ्कायां कार्यत्वे हेत्वन्तराण्याह—

परिमाणात् ॥१३०॥

परिच्छिन्नत्वाद् दैशिकाभावप्रतियोगितावच्छेदकजातिमत्त्वादित्यर्थः। तेन गुणव्यक्तीनां कियतीनां परिच्छिन्नत्वेऽपि न तत्र व्यभिचारः ॥१३०॥

समन्वयात्[3] ॥१३१॥

उपवासादिना क्षीणं हि बुद्ध्यादितत्त्वमन्नादिभिः समन्वयेन समनुगतेन पुनरुपचीयते। अतः समन्वयात् कार्यत्वमुन्नीयत इत्यर्थः। नित्यस्य हि निरवयवतयाऽवयवानुप्रवेशरूपः समन्वयो न घटत इति।

---

१. रूपादिभिरसंहतमिति मुद्रितपुराणपाठः। मार्कण्डेये पठ्यते—गन्धरूपरसैर्हीनं शब्दस्पर्शविवर्जितम्। अनाद्यन्तं जगद्योनि त्रिगुणप्रभवाप्ययम् (४५।३३-३४)। कूर्म० (१।४-७-९)–वायु० (४।१९–२१) पुराणे च द्रष्टव्ये।

२. उभयपदेन पूर्वसूत्रस्थितं किं लक्षितमिति न स्पष्टम् विज्ञायते। १।१२६ सूत्रे द्वयोरिति पदेन 'कार्यकारणयोः' ग्रहणमिति भिक्षुः, अत्र पुनः उभयेति शब्देन प्रकृतिपुरुषयोर्ग्रहणं कृतम्। नेदं प्रकरणानुसारि। दर्शितं मतं तु सांख्यीयमेव।

३. प्रधानगुणानां सर्वपदार्थेषु दर्शनमेव वृत्तिकारमते समन्वयः, भिन्नानां समानरूपता समन्वय इति वाचस्पतिः। अत्र 'भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ...' इति सांख्यकारिका ( १५ का० ) आलोच्या।

समन्वये च श्रुतिः प्रमाणं मनः प्रकृत्य—एवं ते सोम्य षोडशानां कलानामेका कलाऽतिशिष्टाभूत् साऽन्नेनोपसमाहिता प्राज्वालीदिति (छान्दोग्य ६।७।६) योगसूत्रं च—जात्यन्तरपरिणामः प्रकृत्यापूराद् (४।२) इति ॥१३१॥

किञ्च—

**शक्तितश्चेति ॥१३२॥**

करणतश्चेत्यर्थः। पुरुषस्य यत् करणं तत् कार्यं चक्षुरादिवदिति भावः[1]। पुरुषे साक्षाद्विषयार्पकत्वं प्रकृतेर्नास्तीति प्रकृतिर्न करणमिति। अतो महत्तत्त्वस्य करणतया कार्यत्वे सिद्धे सुतरामन्येषामपि कार्यत्वम्। इतिशब्दश्च हेतुवर्गसमाप्तिसूचनार्थः ॥१३२॥[2]

यदि च महदादिमध्ये किञ्चिदकार्यं स्वीक्रियते तदापि तदेव प्रकृतिः पुरुषो वेति सिद्धं नः समीहितम्। प्रकृतिपुरुषौ प्रसाध्य परिणामित्वापरिणामित्वाभ्यां विवेक्तव्यावित्यत्रैवास्माकं तात्पर्यादित्याह—

**तद्धाने प्रकृतिः पुरुषो वा[3] ॥१३३॥**

तद्धाने कार्यत्वहाने यदि परिणामी तदा प्रकृतिः। यदि वाऽपरिणामी भोक्ता तदा पुरुष इत्यर्थः।१३३।

ननु नित्यमप्युभयभिन्नं स्यात्. तत्राह—

**तयोरन्यत्वे तुच्छत्वम् ॥१३४॥**

अकार्यस्य प्रकृतिपुरुषभिन्नत्वे तुच्छत्वं शशश्रृङ्गादिवत् प्रमाणाभावात्। अकार्यं हि कारणतया वा भोक्तृतया वा सिध्यति नान्यथेत्यर्थः।१३४।

तदेवं महदादिषु कार्यत्वं प्रसाध्य साम्प्रतं तैः प्रकृत्यनुमानेऽनुक्तं विशेषमाह—

---

१. युक्तिरियं कारिकायामेव प्रयुक्ता (द्र० १५ का०) 'कारणशक्तितः कार्यं प्रवर्तते' इत्यत्र सिद्धान्तितम् (द्र० तत्त्वकौमुदी)। भाष्यदर्शितोऽर्थस्तु न प्राकरणिकः। काल्पनिकोऽयमर्थ इति प्रतिभाति।

२. इतिशब्दस्य यत् तात्पर्यं दर्शितं तत् काल्पनिक मेव। सांख्यकारिकायां (१५-१६) शक्तितः प्रवृत्तेश्च' इत्यनन्तरमपि 'कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य' इत्यनेन द्वौ हेतू उक्तौ। तावत्र किमर्थं त्यक्तौ इति न विज्ञायते। १।१३२ सूत्रस्य श्चकारः किमर्थं प्रयुक्त इति नोक्तं भाष्यकृता वृत्तिकृता वा।

३. १।१२९ सूत्रे सिद्धान्तितं यत् यत् प्रकृतिपुरुषभिन्नं तत् कार्यमेव। अतः अर्थापत्त्या इदमपि गम्यते यत् यत् न कार्यं तत् प्रकृतिर्वा स्यात् पुरुषो वा। अतः सूत्रमिदं व्यर्थम्। 'प्रकृति-पुरुषयोरन्यत् सर्वमनित्यम्' इति सूत्रमपि (५।७२) एतत्सूत्रतात्पर्यमेव प्रकटयति।

कार्यात् कारणानुमानं तत्साहित्यात् ॥१३५॥

कार्यान्महत्तत्त्वादेर्लिङ्गात् सामान्यतोदृष्टं कारणानुमानं यदुक्तं तत् ताटस्थ्यनिवृत्तये तत्साहित्यात् कार्यसाहित्येनैव कर्त्तव्यम्—सदेव सोम्येदमग्र आसीत् (छान्दोग्य० ६।२।१), 'तम एवेदमग्र आसीद् ( मैत्रायण्यारण्यक ५।२ ) इत्यादि श्रुत्यनुसारात् । तद् यथा—महदादिकं स्वोपहितत्रिगुणात्मकवस्तूपादानकं कार्यत्वात्, शिलामध्यस्थप्रतिमावत्, तैला[1]दिवच्चेत्यर्थः । अत्रानुकूलतर्कः प्रागेव ( १।६१-६५ भा० ) दर्शितः ॥१३५॥

अव्यक्तं त्रिगुणाल्लिङ्गात्[2] ॥१३६॥

अभिव्यक्तात् त्रिगुणान्महत्तत्त्वादपि मूलकारणमव्यक्तं सूक्ष्मम्; महत्तत्त्वस्य हि सुखादिगुर्णः साक्षात् क्रियते, प्रकृतेश्च गुणोऽपि न साक्षात्क्रियत इति[3] । प्रधानं परमाव्यक्तं महत्तत्त्वं तु तदपेक्षया व्यक्तमित्यर्थः ॥१३६॥

ननु परमसूक्ष्मं चेत् तर्हि तस्यापलाप एवोचित इत्याकाङ्क्षायां पूर्वोक्तं स्मारयति—

तत्कार्यतस्तत्सिद्धेर्नापलापः[4] ॥१३७॥

सुगमम् ॥१३७॥

प्रकृत्यनुमानगता विशेषा विस्तरतो विचारिताः । इतः परमध्यायसमाप्तिपर्यन्तं पुरुषानुमानगता विशेषा विचार्यास्तत्र कञ्चनादौ विशेषमाह—

सामान्येन विवादाभावाद्धर्मवन्न साधनम्[5] ॥१३८॥

---

१. तिलेषु तैलसत्ता न सत्कार्यवादस्योदाहरणरूपेणं उपन्यसनीया; न खलु तिलेषु तैलं सूक्ष्मरूपेण तिष्ठति, चक्षुषैव तिलस्य तिलगततैलस्य च दर्शनात्, स्थूलहस्तपीडनेन तैलस्य तिलात् निर्गमदर्शनाच्च । यस्यामवस्थायां तिलेषु तैलमनभिव्यक्तरूपेण तिष्ठति, केनापि लौकिकेन प्रयत्नेन न तत् तैलं प्रत्यक्षीभवति, तदवस्थागतं तिलं तैलं चोदाहरणीयं सत्कार्यवादप्रसंगे । तथैव कूर्मस्यापिहितान्यङ्गानि न सत्कार्यवादस्य उदाहरणरूपेणोपन्यसनीयानि स्थूलचक्षुषैव अपिहितानामङ्गानां दर्शनात् ।

२. सूत्रस्यास्य योऽर्थो भिक्षुणा प्रदर्शितः स यद्यपि सिद्धान्तभूत स्तथाप्यर्थोऽयं न प्रकरणगम्यो न वा सूत्राक्षरगम्यः । यतो हि व्यक्तं लिङ्गं त्रैगुणिकमतः तस्य कारणभूतेन अव्यक्तेन भवितव्यमित्येव सूत्रस्य तात्पर्यम् प्रतीयते । नेदमव्यक्तम् कस्मिन्नपि आश्रितम् इति सांख्यीया दृष्टिः । अद्वैतिनस्तु अव्यक्तं परमात्मनि ओतप्रोतभावेन समाश्रितमिति मन्यन्ते । द्र० कठोपनिषदः ( १।३।११ ) भाष्यं गिरिटीका च ।

३. द्र० 'गुणानां परमं रूपं न दृष्टिपथ मृच्छति' इति ( ४।१३ व्यासभाष्योद्धृतं वचनम् ) ।

४. द्र० 'सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यत स्तदुपलब्धेः' ( सां० का० ८ ) ।

५. सूत्रमिदं पुरुषतत्त्वमेव लक्षयति इति न सूत्राक्षरतो विज्ञायते ।

यत्र वस्तुनि सामान्यतो विवादो नास्ति न तस्य स्वरूपतः साधनमपेक्ष्यते धर्मस्येवेत्यर्थः। अयं भावः—यथा प्रकृतेः सामान्येनापि साधनमपेक्षितं धर्मिण्यपि विवादात्, नैवं पुरुषस्य साधनमपेक्षितम्। चेतनापलापे जगदान्ध्यप्रसङ्गतो भोक्तर्यहम्पदार्थे सामान्यतो बौद्धानामप्यविवादाद् धर्म इव। धर्मो हि सामान्यतो बौद्धैरपि स्वीक्रियते तप्तशिलारोहणादिषु धर्मत्वाभ्युपगमात्। अतः पुरुषे विवेकनित्यत्वादिसाधनमात्रमनुमानं कार्यमिति ॥१३८॥

संहतपरार्थत्वात् पुरुषस्येत्युक्तसूत्रेणापि (१।६६) विवेकानुमानमेवाभिप्रेतम्। न नु तत्र पुरुषस्य सर्वथैवाप्रत्यक्षत्वमभिप्रेतमिति। तत्र चादौ विवेकप्रतिज्ञासूत्रम्—

[1]शरीरादिव्यतिरिक्तः पुमान्[2] ॥१३९॥

शरीरादिप्रकृत्यन्तं यच्चतुर्विंशतितत्त्वात्मकं वस्तु ततोऽतिरिक्तः पुमान् भोक्तेत्यर्थः। भोक्तृत्वं च द्रष्टृत्वमिति[3] ॥१३९॥

अत्र हेतूनाह सूत्रैः—

संहतपरार्थत्वात्[4] ॥१४०॥

यतः सर्वं संहतं प्रकृत्यादिकं परार्थं भवति शय्यादिवत्। अतोऽसंहतः संहतदेहादिभ्यः परः पुरुषः सिध्यतीत्यर्थः। अयं च हेतुः संहतपरार्थत्वात् पुरुषस्येत्यत्र (१।६६) व्याख्यातः। उक्तस्यापि हेतोः पुनरुपन्यासो हेतुवर्गसङ्कलनार्थः[5] ॥१४०॥

किञ्च—

त्रिगुणादिविपर्ययात् ॥१४१॥

सुखदुःखमोहात्मकत्वादिवैपरीत्यादित्यर्थः। शरीरादीनां हि यः सुखा-

---

१. षष्ठाध्यायेऽपि एतदर्थकं सूत्रं पठ्यते-देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् (६।२)।

२. देहस्यानात्मत्वं युक्तिभिः पूर्वाचार्यैः प्रदर्शितम् ( द्र० पञ्चदशी ३।३ टीका ); न्यायसू० ३।१।४–५; अज्ञानबोधिनी ४६–६१; आत्मज्ञानोपदेशविधि ३–६। एवमिन्द्रियादीनामपि आत्मत्वं युक्तिभि निराकृतम्; द्र० आत्मज्ञानोपदेशाविधि ८–११; न्यायसू० ३।१।१–३; सर्ववेदान्तसिद्धान्तसारसंग्रह ५३७—५४७।

३. इदं विशेषतो ज्ञेयं सांख्यतत्त्वबुभुत्सुभिः। अस्मन्मते अन्तःकरणगतभोगस्य यः साक्षी स भोक्ता, न पुनः भोगक्रियया विकृतो जीवो भोक्ता सांख्यनये। एतस्मिन्नर्थेऽपि गौण्या वृत्त्या क्वचिच् श्रुत्यादिषु भोक्तृशब्दः प्रयुज्यते। पुरुषः स्वरूपतो दृशिमात्रः; स प्रख्यासाक्षीति ज्ञाता, प्रवृत्तिसाक्षीति भोक्ता, धृतिसाक्षीति अधिष्ठाता उच्यते, अतो य एव भोक्ता स एव चिद्रूप आत्मा।

४. संहतपरार्थत्वयुक्तिः पूर्वाचार्यैर्बहुत्र प्रयुक्ता—बृहदा० ३।९।२६ शांकरभाष्य; उपदेशसाहस्री–टीका (उपोद्घात ५६ अनु०)।

५. नास्मिन् हेतौ कश्चिदपि विशेषः, अतः सूत्राणां संहनने शैथिल्यमेव हेतुरिति वयम्। किमर्थमिदं शैथिल्यं जातमिति 'सांख्यदर्शन'-परके ग्रन्थे विचारयिष्यते।

371179

ध्यात्मकत्वं धर्मः स सुखादिभोक्तरि न सम्भवति स्वयं सुखादिग्रहणे कर्म-कर्तृविरोधात्। धर्मिपुरस्कारेणैव सुखाद्यनुभवादिति।

ननु बुद्धिवृत्तिप्रतिबिम्बितं स्वसुखादिकं पुरुषेण गृह्यतां स्ववदिति चेन्न। एवं सति बुद्धेरेव सुखादिकल्पनौचित्यात्, पुरुषगतसुखादेर्बुद्धौ प्रतिबिम्बकल्पने गौरवात्। अहं सुखी दुःखी मूढ इत्यादिप्रत्ययास्तु न पुरुषे सुखादिसाधकाः, तत्स्वामित्वेनाप्युपपत्तेः। बुद्धेः सुखादिमत्त्वेनाप्युपपत्तेश्च। लौकिक्यां ह्यहम्बुद्धाववश्यं बुद्धिरपि विषयो मिथ्याज्ञानवासनादिरूपदोषानुवृत्तेस्तत्प्रतिबिम्ब-कल्पनायां च गौरवादिति।

आदिशब्देन चात्र 'त्रिगुणमविवेकि विषयः' इति कारिकोक्ताविवे-कित्वादयो ग्राह्याः (द्र० ११ का०), तथा रूपादयः शरीरादिधर्मा ग्राह्याः ॥१४१॥

किञ्च—

अधिष्ठानाच्चेति[1] ॥१४२॥

भोक्तुरधिष्ठातृत्वाच्चाधिष्ठेयेभ्यः प्रकृत्यन्तेभ्योऽतिरिक्ततेत्यर्थः। अधिष्ठानं हि भोक्तुः संयोगः, स च प्रकृत्यादीनां भोगहेतुपरिणामेषु कारणम्। भोक्तुरधिष्ठानाद् भोगायतननिर्माणमिति वक्ष्यमाणसूत्रात् (५।११४)। संयोगश्च भेदे सत्येव भवतीति भावः। इतिशब्दो हेतुसमाप्तौ[2] ॥१४२॥

उक्तानुमानेऽनुकूलतर्कं प्रदर्शयति सूत्राभ्याम्—

भोक्तृभावात्[3] ॥१४३॥

यदि हि शरीरादिस्वरूप एव भोक्ता स्यात् तदा भोक्तृत्वमेव व्याहन्येत,

---

१. द्र० 'ब्रह्मशक्त्यधिष्ठितानां हि चक्षुरादीनां दर्शनादिसामर्थ्यं स्वतः काष्ठ-लोष्टसमानि हि तानि चैतन्यात्मज्योतिःशून्यानि' (बृहदा० ४।४।१८); अनुमानप्रकारं गिरिर्दर्शयामास—'विमतानि केनचिदधिष्ठितानि प्रवर्तन्ते करणत्वाद् वास्यादिवत्' इति। द्र० शान्ति ३११।३७ 'अधिष्ठानादधिष्ठाता क्षेत्राणामिति नः श्रुतम्' इति। द्र० 'पुरुषाधिष्ठितान् भावान् प्रकृतिः सूयते यदा। हेतुयुक्तमतः पूर्वं जगत् संपरिवर्तते' (शान्ति० २१०।२५)। निर्गुण-पुरुषस्य न कश्चिदधिष्ठातेति विज्ञेयम्, अतः 'ईश्वरः प्रधानपुरुषयोरधिष्ठाता' इति यत् सांख्यमतं दर्शितं शंकरेण, तदसांख्यीयमेव।

२. इदमविचारितरमणीयम्। १।१४३—१४४ सूत्रेषु अपि पुरुषसत्तासाधक-हेतूनां कथनात्। संहतपरार्थत्वादि-युक्तयो हेतवः, भोक्तृ भावकैवल्यार्थप्रवृत्ती चानुकूलतर्कौ इत्येवं रूपेण भेदकथनं निःसारमेव।

३. द्र० सांख्यास्तु ''परमार्थत एव भोक्तृत्वं पुरुषस्य इच्छन्ति (प्रश्न ६।३ शांकरभाष्य); यथा सांख्यस्य चिन्मात्रस्यापरिणामिनोऽप्यात्मनो भोक्तृत्वम् (अत्रैव); अद्वैतिदृष्ट्या भोक्तृत्वमपि अविद्याध्यारोपितम्, यथाह शंकरः—'अविद्याप्रत्युपस्थापितत्वात् कर्तृत्व-भोक्तृत्वयोः' (शारीरक २।३।४०)

कर्मकर्तृविरोधात्। स्वस्य साक्षात् स्वभोक्तृत्वानुपपत्तेरित्यर्थः। अनुपपत्तिश्च पूर्वमेव व्याख्याता (द्र० १।६६ भाष्य)। अत्र सूत्रे पुरुषस्य भोगः स्वीकृत इति स्मर्तव्यम्। अपरिणामिनश्च पुरुषस्य भोग'श्चिदवसानो भोगः' (१।१०४)। इत्यत्र व्याख्यातः[१] ॥१४३॥

किञ्च—

कैवल्यार्थं प्रवृत्तेश्च[२] ॥१४४॥

शरीरादिकमेव चेद्भोक्तृ स्यात् तदा भोक्तुः कैवल्यार्थं दुःखात्यन्तोच्छेदार्थं कस्यापि प्रवृत्तिर्नोपपद्येत। शरीरादीनां विनाशित्वात् प्रकृतेश्च धर्मिग्राहकमानेन दुःखस्वाभाव्यसिद्ध्या कैवल्यासम्भवात्, न हि स्वभावस्यात्यन्तोच्छेदो घटत इत्यर्थः। अत्र 'कैवल्यार्थं' प्रकृतेरिति[३]सूत्रपाठः प्रामादिकत्वादुपेक्षणीयः।

सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ (१७)

इति कारिकातः कैवल्यार्थं प्रवृत्तेश्चेति पाठात्, अर्थासङ्गतेश्चेति ॥१४४॥

चतुर्विंशतितत्त्वातिरिक्ततया पुरुषः साधितः। इदानीं पुरुषगतो विशेषो विवेकस्फुटीकरणायानुमीयते—

[४]जडप्रकाशायोगात् प्रकाशः[५] ॥१४५॥

---

१. भोक्तृत्वस्य खण्डनं सांख्यविरोधिभिर्बहूत्र कृतम्। द्र० प्रश्न० ६।३ शां० भा०—"किंच भोक्तृत्वकर्तृत्वयोर्विशेषानुपपत्तिः। का नामासौ कर्तृत्वाज्जात्यन्तरभूता भोक्तृत्वविशिष्टा विक्रिया यतो भोक्तैव पुरुषः कल्प्यते न कर्ता, प्रधानं तु कर्तृ एव न भोक्तृ इति"। प्रवृत्तेः निर्विकारप्रकाशक एव भोक्ता—इति सांख्यीया दृष्टिरतः सांख्यीये भोक्तृवादे न कश्चिदपि दोषो विद्यते। भोगेन यो विकृतो भवति स सांख्यदृष्ट्या न भोक्तेति विज्ञेयम्।

२. एतत्-सूत्रगतश्चकारोऽर्थदृष्ट्या व्यर्थ एव। न खल्वनेन कश्चिदपि अर्थो ज्ञाप्यते। अत इदं प्रतीयते यदिदं सूत्रं सप्तदश-सांख्यकारिका-प्रतिष्ठमेव। कारिकायां तु चकार आवश्यकः वृत्तपूरणायेति स्पष्टमेव। सौत्रयुक्तीनां कारिकावत् क्रमिकं स्थापनमपि सूत्राणां कारिकाश्रयत्वं निःसंशयं सूचयतीति विज्ञेयम्।

३. अनिरुद्धवृत्तावयं पाठो दृश्यते। (त्रिगुणस्वभावत्वात् प्रकृतेः·······)।

४. जडं नाम स्वविषय-परविषयज्ञानरहितं वस्तु जडम् (आत्मानात्म-विवेक ११६)।

५. तुल० सांख्यानामिव नित्यचैतन्यस्वरूप एवेति···( शारीरक २।३।१८ ); सांख्यैः ··· निर्विशेषा चेतनमात्रा आत्मानः अभ्युपगम्यन्ते (माण्डूक्यकारिका ३।५ शां० भा०); ज्ञानस्य जडशेषत्वं न दृष्टं न च संभवि। चिद्धर्मत्वं तथा नास्ति चितश्चिन्नहि भिद्यते॥ (देवीभाग० ७।१२।२०)। 'अत्र प्रकाशो न ज्योतिः प्रत्युत चिद्रूपत्वम्—'ज्योतिष्ट्वं चात्र चिद्रूपत्वमेव न जडप्रकाश-रूपत्वमिति' (वि० प्र० संग्रह, पृ० ४५)

वैशेषिका आहुः—प्रागप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगाज् ज्ञानाख्यः प्रकाशो जायत इति; तन्न, लोके जडस्याप्रकाशस्य लोष्टादेः प्रकाशोत्पत्त्यदर्शनेन तदयोगात्। अतः सूर्यादिवत् प्रकाशस्वरूप एव इत्यर्थः। तथा च स्मृतिः—

यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते।
[1]तद्वदैक्यं न शंसब्वं प्रपञ्चपरमात्मनोः॥ इति॥
(कूर्म०२।२।१०ख-११ क)
यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु॥

इति च। प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिरनुगतव्यवहारादिति॥१४५॥

ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावोऽस्ति न वा, तत्राह—

निर्गुण[2]त्वान्न चिद्धर्मा[3]॥१४६॥

सुगमम्। पुरुषस्य प्रकाशरूपत्वं सिद्धे[4]तत्सम्बन्धमात्रेणान्यव्यवहारोपपत्तौ प्रकाशात्मकधर्मकल्पनागौरवमित्यपि बोद्धव्यम्। तेजसश्च प्रकाशाख्यरूपविशेषाग्रहेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाश-तेजसोर्भेदः सिध्यति। आत्मनस्तु ज्ञानाख्यप्रकाशाग्रहकाले ग्रहणं नास्तीत्यतो लाघवाद्धर्मधर्मिभावशून्यं प्रकाशरूपमेवात्मद्रव्यं कल्प्यते। तस्य च न गुणत्वम्, संयोगादिमत्त्वात्, अनाश्रितत्वाच्चेति। तथा च स्मर्यते—

ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन।
ज्ञानस्वरूप एवात्मा नित्यः पूर्णः सदा शिवः[5]॥ इति
(तुल० सौर ११।२६)

---

१. अत्र तद्वदैक्यं न सम्बन्ध इति मुद्रितपुराणपाठः।

२. तुल० चैतन्यमेवास्य स्वरूपमग्नेरिव औष्ण्यप्रकाशौ। नात्र गुणगुणिविभागो विद्यते इति (शारीरक २।३।२९); तस्मात् नात्मा सर्वथा चिद्धर्मा, किन्तर्हि चित्स्वरूप एवेति। (बृहदा० भाष्य); न च चिदेकरसस्यात्मनः धर्मासंभवः··· (वि० प्र० संग्रह पृ० १२); परमात्मापि चैतन्यमात्रो न चैतन्यधर्मकः (प्रकाशवच्चेति ब्रह्मसूत्रभाष्ये भिक्षुराह)। तुल० तत्त्वाख्यानमपि लक्षणं भवति, यथा चैतन्यलक्षणः पुरुष इति (प्रदीप ३।२।१२६); यथा वर्णयन्ति कापिलाः 'चैतन्यं पुरुषस्य स्वरूपमिति' (तत्त्वसंग्रह—पञ्जिका, पृ० १०२)।

३. सूत्रमिदं हेलाराजेन वाक्यपदीयटीकायामुद्धृतम्—"आत्मा वा चैतन्यम्, यथाहुः सांख्याः—निर्गुणत्वाद् न चिद्धर्मा" (दिक्समुद्देशः १८)।

४. न्यायकुसुमाञ्जलिव्याख्यायां हरिदास आह 'सांख्यास्तु पुरुषः चैतन्याश्रयः····' (१।१४)। मतमिदमसांख्यीयमेव।

५. स्वरूपं, सर्वगतः शिव इति मुद्रितपाठः।

ननु निर्गुणत्व एव का युक्तिरिति चेत्, उच्यते—पुरुषस्येच्छाद्यास्तावन्नित्या न सम्भवन्ति जन्यताप्रत्यक्षात्। जन्यगुणाङ्गीकारे परिणामित्वापत्तिः। तथाचोभयोरेव प्रकृतिपुरुषयोः परिणामहेतुत्वकल्पने गौरवम्। आन्ध्यपरिणामेन कदाचिदज्ञत्वस्यापत्त्या ज्ञानेच्छादिगोचरसंशयापत्तिश्च। तथा जडप्रकाशायोगस्योक्तत्वादपि न नित्यस्यानित्यज्ञानसम्भव इति। इच्छादिकमन्वयव्यतिरेकाभ्यां मनस्येव लाघवात् सिध्यति। मनःसंयोगस्यात्मनश्चोभयोस्तद्धेतुत्वे गौरवात्। गुणशब्दश्च विशेषगुणवाचीत्युक्तमेव[1]। अत आत्मा निर्गुणः।

अपि च ये तार्किका आत्मनः कर्तृत्वमिच्छन्ति तेषां मोक्षानुपपत्तिः। अहं कर्तेति बुद्धेरेव[2] गीतादिष्वदृष्टोत्पत्तिहेतुतयोक्तत्वात्, तस्याश्च तन्मते मिथ्याज्ञानत्वाभावेन तत्त्वज्ञाननिवर्त्यत्वासम्भवात्। अतः श्रुत्युक्तमोक्षानुपपत्त्यात्मनोऽकर्तृत्वमस्माभिरिष्यते। अकर्तृत्वाच्चादृष्टसुखाद्यभावः। ततश्च मनसः कृत्यादिहेतुत्वे कल्पनीये लाघवादन्तर्हश्यगुणत्वावच्छेदेनैतत् कल्प्यते। अत आत्मा निर्गुण[3] इति। यथोक्तस्य च परमसूक्ष्मस्यात्मनः स्वरूपं वासिष्ठे करामलकवत् प्रोक्तं विविच्य प्रतिपादितम्; यथा—

असम्भवति सर्वत्र दिग्भूम्याकाशरूपिणि।
प्रकाश्ये यादृशं रूपं प्रकाशस्यामलं भवेत्॥
त्रिजगत् त्वमहं चेति दृश्येऽसत्तामुपागते[4]।
द्रष्टुः स्यात् केवलीभाव[5]स्तादृशो विमलात्मनः॥

(योगवासिष्ठ ३।४।५५-५६) इति ॥१४६॥

नन्वहं जानामीति धर्मधर्मिभावानुभवात् पुरुषस्य चिद्धर्मकत्वं सिध्यति गौरवस्य प्रामाणिकत्वेनादोषत्वादिति; तत्राह—

**श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात्[6] ॥१४७॥**

भवेदेवं यदि केवलतर्केणास्माभिर्निर्गुणत्वाच्चिद्धर्मत्वादिकं प्रसाध्यते किन्तु श्रुत्यापि। अतः श्रुत्या सिद्धस्य निर्गुणत्वादेर्नापलापः सम्भवति तत्प्रत्यक्षस्य गुणादिप्रत्यक्षस्य श्रुत्यैव बाधात्, अहं गौर इत्यादिप्रत्यक्षवदित्यर्थः। अन्यथा हि

१. द्र० 'निर्गुणवादाश्च प्राकृतहेयगुणनिषेधविषयतया व्यवस्थिताः (सर्वदर्शनसंग्रह—रामानुजदर्शनम्)
२. द्र० गीता–'कर्ताहमिति मन्यते' (३।२७)। अत्र शान्तिपर्वगतम् 'अहं कर्तेति', वचनमपि द्रष्टव्यम् (३२०।१०८)।
३. 'अपि च ये' इत्यारभ्य 'निर्गुण' इत्यंशः क्वचिन्नोपलभ्यते।
४. क्वचिद् मुद्रिते भाष्ये 'दृश्ये सत्ताम्' इति पठ्यते, सोऽपपाठः।
५. केवलाभावेत्यपपाठः।
६. तत् प्रत्यक्षबाधात् इत्यस्य 'आत्मनि तस्य गुणादेः प्रत्यक्षस्य (श्रुत्यैव) बाधात्' इत्यर्थ इति भाष्यम्। क्लिष्टोऽयमर्थः।

गौरोऽहमिति प्रत्यक्षबलेन देहातिरिक्तात्मसाधिका अपि युक्तयो बाधिताः स्युरिति जितं नास्तिकैः ।

निर्गुणत्वे च श्रुतयः—'साक्षी चेताः केवलो निर्गुणश्च' (श्वेताश्व० ६।११) इत्याद्याः । चिन्मात्रत्वे तु श्रुतयः-अकर्ता चैतन्यं चिन्मात्रं सच्चिदकरसो ह्ययमात्मेत्याद्या[१] इति । सर्वज्ञत्वादिश्रुतयस्तु राहोः शिर इतिवल्लौकिकविकल्पानुवादमात्राः । विधिनिषेधश्रुतिमध्ये निषेधश्रुतेरेव बलवत्त्वात् । 'अथात आदेशो नेति नेति, न ह्येतस्मादिति नेत्यन्यत् परमस्ती'ति (बृहदा० -।३।६) । श्रुतेः

किञ्चाज्ञानमहं जानामीति प्रत्यये प्रमात्वकल्पनायामेव गौरवम् । अनाद्यविद्यादोषस्यानुवर्त्तमानतया भ्रमत्वस्यैवौत्सर्गिकत्वात् । अतो भ्रमशतान्तः-पातित्वेनाप्रामाण्यशङ्कास्कन्दितत्वाच्चैतत्प्रत्यक्षबाधने लाघवतर्काद्यनुगृहीतमनुमानमपि समर्थमिति ।

नन्वात्मनो नित्यज्ञानस्वरूपत्वे कीदृशं लाघवमिति चेत् ; उच्यते—नैयायिकादिभिरन्तःकरणं व्यवसायानुव्यवसायौ तदाश्रयश्चेति चत्वारः पदार्थाः कल्प्यन्ते । अस्माभिस्त्वन्तःकरणम्, व्यवसायस्थानीया च तद्वृत्तिरनन्तानुव्यवसायस्थानीयश्च नित्यैकज्ञानरूप आत्मेति त्रयः पदार्थाः कल्प्यन्त इति ।।१४७।।

ननु यदि प्रकाशरूप एवात्मा तदा सुषुप्त्याद्यवस्थाभेदो नोपपद्यते सदा प्रकाशानपायादिति; तत्राह—

सुषुप्त्याद्यसाक्षित्वम्[२] ।।१४८।।

सुषुप्त्याद्यस्यावस्थात्रयस्य बुद्धिनिष्ठस्य साक्षित्वमेव पुंसीत्यर्थः ।

तदुक्तम्—

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ।। (भाग० ११।१३।२७)

इति । तासां बुद्धिवृत्तीनां साक्षित्वेन तद्विलक्षणो जाग्रदाद्यवस्थारहितो निर्णीत इत्यर्थः ।

जाग्रन्नामावस्था—इन्द्रियद्वारा बुद्धेर्विषयाकारः परिणामः । स्वप्नावस्था च संस्कारमात्रजन्यस्तादृशः परिणामः । सुषुप्त्यवस्था[३] च द्विविधा, अर्द्धसमग्रलयभेदेन । तत्रार्धलये विषयाकारा वृत्तिर्न भवति, किन्तु स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति । अन्यथोत्थितस्य सुखमहमस्वाप्समित्यादिरूपसुषुप्तिकालीनसुखादिस्मरणानुपपत्तेः । तदुक्तं व्याससूत्रेण—मुग्धेऽर्द्धसम्पत्तिः परिशेषादिति (३।२।१०) ।

---

१. नेदं वचः किमपि श्रौतं वाक्यं प्रत्युत बहुश्रुतिगतानि पदानीह संकलितानि ।

२. सुषुप्तादि-असाक्षित्वम् इति वृत्तिसंमतः पदच्छेदः । आत्मनि जडेऽभ्युपगते सुषुप्त्यादौ असाक्षित्वं स्याद् इति सूत्रार्थो वृत्तिमते । यथा १।१४६ सूत्रे चिद्धर्मेति प्रथमान्तः प्रयुक्तः, तथा कथं नात्र साक्षीति प्रथमान्तः प्रयुक्त इति प्रश्न उदेति । न खलु षष्ठ्यन्तं सप्तम्यन्तं वा किमपि पदं प्राक्तनेषु सूत्रेषु अस्ति ।

३. द्र० इन्द्रियैरर्थोपलब्धिर्जागरितम् । करणेषु उपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न इत्युच्यते । सर्वप्रकारज्ञानोपसंहारे बुद्धेः कारणात्मनावस्थानं सुषुप्तिः (पञ्चीकरण) । अवस्थात्रयस्वरूपं माण्डूक्योपनिषदि सुष्ठु विवेचितमिति तत् तत एवावधार्यम् ।

समग्रलये तु बुद्धेर्वृत्तिसामान्याभावो मरणादाविव भवति। अन्यथा समाधि-सुषुप्तिमोक्षेषु ब्रह्मरूपतेत्यागामि-(५।११६) सूत्रानुपपत्तेरिति। सा च समग्र-सुषुप्तिर्वृत्त्यभावरूपेति पुरुषस्तत्साक्षी न भवति पुरुषस्य वृत्तिमात्रसाक्षित्वात्, अन्यथा संस्कारादेरपि बुद्धिधर्मस्य साक्षिभास्यतापत्तेः। सुषुप्त्यादिसाक्षित्वं तु तादृशबुद्धिवृत्तीनां स्वप्रतिबिम्बितानां प्रकाशनमिति वक्ष्यामः (द्र० १।१६१)। अतो ज्ञानार्थं पुरुषस्य न परिणामापेक्षेति।

स्यादेतत्—सुषुप्ते यदि सुखदुःखादिगोचरा बुद्धिवृत्तिरिष्यते तर्हि जाग्रदादाव-प्यखिलवृत्तीनां वृत्तिग्राह्यत्वस्वीकार एव युक्त इति व्यर्था तत्साक्षिपुरुषकल्पना स्वगोचरवृत्तित्वेनैव स्वव्यवहार हेतुतायाः सामान्यतः सुवचत्वादिति। मैवम्, नियमेन स्वगोचरवृत्तिकल्पनेऽनवस्थापत्तिर्गौरवं च स्यात्।

किञ्चाहं सुखीत्यादिवृत्तिषु सुखादीनां विशेषणतया निर्विकल्पकं तज्ज्ञानमादा-वपेक्ष्यते। तत्र चानन्तनिर्विकल्पकवृत्त्यपेक्षया लाघवेन नित्यमेकमेवात्मस्वरूपं ज्ञानं कल्प्यते। अहं सुखीत्यादिविशिष्टज्ञानार्थं बुद्धिवृत्तेरेव तादृशाकारत्वं पुरुषे वृत्तिसा-रूप्यमात्रस्वीकारेण वृत्त्याकारातिरिक्ताकारानभ्युपगमात् स्वतन्त्राकारेण परिणामा-पत्तेरिति ॥१४८॥

अथैवं पुरुषस्य सुषुप्त्यादिसाक्षिमात्रत्वेन पुरुषैक्यस्याप्युपपत्तौ स किमेकोऽनेको वेति संशयः। तत्रायं पूर्वपक्षः—लाघवतर्कसहकारेण बलवतीभ्योऽभेदश्रुतिभ्य एक एवात्मा सिध्यति, जाग्रदाद्यवस्थारूपाणां वैधर्म्याणां बुद्धिधर्मत्वात्। यद्यप्येकस्यात्मनः सर्वबुद्धिसाक्षित्वं तथापि यस्या बुद्धेर्या वृत्तिः सैव बुद्धिस्तद्वृत्तिविशिष्टतया साक्षिणं गृह्णाति घटं जानामीत्यादिरूपैः। अत एकस्या बुद्धेरयं घट इति वृत्तौ सत्यामन्यबुद्धिवृत्तिद्वारा नानुभवो घटमहं जानामीति[1]। तत्र सिद्धान्तमाह—

[2]जन्मादिव्यवस्थातः पुरुषबहुत्वम्[3] ॥१४९॥

---

१. केषुचित् संस्करणेषु अथैवमित्यारभ्य जानामीत्यन्तांशः १४८ तमसूत्र-व्याख्यान्तर्गत इति स्वीकृतम्। अस्मत्कृतविभागः साधुतरः।

२. द्र० 'व्यवस्थानुपपत्त्या द्वैतम् (पुरुषबहुत्वम्) एवेष्टव्यम् इति वदन्तं प्रति…' (माण्डूक्यका० ३।५ गिरिटीका) 'सर्वदेहेषु आत्मैकत्वे एकस्मिन् जननमरण-सुखादिमत्यात्मनि सर्वात्मना तत्संबन्धः क्रियाफलसांकर्यं च स्यादिति य आहुः द्वैतिनः' (अत्रैव शाङ्करभाष्यम्)। अन्यत्र शंकर आह—'यानि लिङ्गानि आत्मभेदसाधनाय नामरूपवन्ति उपन्यस्यन्ति…' (बृहदा० २।१।२० भा०); अत्राह गिरिः—'जन्मादीनां प्रतिनियमादिलिङ्गवशाद आत्मभेदं सेत्स्यति चेद् नेत्याह। यद्येक आत्मा तर्हि सर्वत्र सुखी दुःखी च स्यात्। न चेदं सांख्यचोद्यं संभवति…पुरुषभेदप्रयुक्तम्' (माण्डूक्यका० ३।५ भा०)। अद्वैतमते बुद्धिगत-चिदाभासस्यैव भेदा भवन्ति, न तु चैतन्यस्य। यथाह—प्रतिदेहं च बुद्धीनां भिन्नत्वात् तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते' (सिद्धान्तबिन्दु, अनु० १०२)।

३. 'निर्विशेषाश्च चेतनमात्रा आत्मानोऽभ्युपगम्यन्ते [सांख्यैः]—इति वाक्ये, 'निर-तिशया श्चेतना इति सांख्यानाम्' (न्यायभा० १।१।२९) इति वाक्ये च यद् बहुवचनं तत् बहुत्वज्ञापनार्थमेव। शारीरकभाष्ये (२।३।५०–५१) माण्डूक्य-कारिका-(३।५–७)– भाष्येऽपि सांख्यीय-पुरुषबहुत्ववादस्य खण्डनं द्रष्टव्यम्।

पुण्यवान् स्वर्गे जायते; पापी नरकेऽज्ञो बध्यते, ज्ञानी मुच्यते, इत्यादेः श्रुतिस्मृतिव्यवस्थाया विभागस्यान्यथानुपपत्त्या पुरुषा बहव इत्यर्थः। जन्ममरणे चात्र नोत्पत्तिविनाशौ पुरुषनिष्ठत्वाभावात्, किन्त्वपूर्वदेहेन्द्रियादिसङ्घातविशेषेण संयोगश्च वियोगश्च भोग-तदभावनियामकाविति[1]। जन्मादिव्यवस्थायां च श्रुतिः—

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः॥ (श्वेताश्व० ४।५)[2]।

ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति (बृहदा०४।४।१४; श्वेताश्व०३।१०) इत्यादिरिति ।१४९॥

ननु पुरुषैक्येऽप्युपाधिरूपावच्छेदकभेदेन जन्मादिव्यवस्था भवेत्, तत्राह—

**[3]उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः[4] ।१५०।**

उपाधिभेदेऽप्येकस्यैव पुरुषस्य नानोपाधियोगोऽस्त्येव, यथैकस्यैवाकाशस्य घटकुड्यादिनानायोगः। अतोऽवच्छेदकभेदेनैकस्यात्मन एव विविध-

---

१. द्र० क्षेत्रज्ञाधिष्ठितं क्षेत्रं क्षेत्रज्ञार्थं प्रचक्षते। बहुत्वाच्च शरीराणां शरीरी बहुधा स्मृतः॥३७॥ अव्यूहासंकराच्चैव ज्योतिर्वच्च व्यवस्थितः। यस्मात् प्रतिशरीरं हि सुखदुःखोपलब्धिता। तस्मात् पुरुषनानात्वं विज्ञेयं तु विजानता। (वायु० १०२।३७-३८)।

२. प्रकृत्येकत्व-पुरुषनानात्वयोश्च श्रुत्यैव साक्षात् प्रतिपादनादित्युक्त्वा मिश्र एनां श्रुति मुदाजहार तत्त्ववैशारद्याम् (२।२२)। लोहितादिशब्दाः सत्त्वादिगुणान् लक्षयन्तीति महाभारते स्फुटमुक्तम्—तमसा तामसान् भावान् विविधान् प्रतिपद्यते। रजसा राजसांश्चैव सात्त्विकान् सत्त्वसंश्रयात्॥ शुक्ललोहित-कृष्णानि रूपाण्येतानि त्रीणि तु (शान्ति० ३०२।४५-४६)। तै० आरण्यके (१०।१०) ऽपि मन्त्रोऽयं पठ्यते। अत्र 'बह्वीं प्रजां जनयन्तीं सरूपामि'ति द्वितीयचरणस्य पाठः। अजा मूलप्रकृतिरूपा मायेति सायणः॥

३. सूत्रमिदं व्यासतात्पर्यनिर्णये (पृ० १०) योगवार्तिके च (१।२४) उद्धृतम्।

४. द्र० आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैकोऽप्यनेकेषु जलाधारेष्विवांशुमान्। (ब्रह्मयाज्ञवल्क्यवचनं विष्णुसहस्रनामभाष्यधृतम् पृ० ३८), आत्मभेदस्तथैवात्मब्रह्मभेदश्च सुव्रताः। उपाधिनैव क्रियते न स्वतो मुनिपुङ्गवाः॥ घटाद्युपाधिसंपर्कादाकाशस्य भिदा यथा। (सूतसंहिता); आकाशवत् सर्वसंघातेषु एक एवात्मा (माण्डूक्यकारिका ३५ भाष्य; 'कथं पुनरात्मभेदनिमित्त इव व्यवहार एकस्मिन्नात्मनि अविद्याकृत उपपद्यत इति? उच्यते—यथेहाकाश एकस्मिन् ...' (माण्डूक्यका० ३।६ भा०)।

जन्ममरणाद्यापत्तिः कायव्यूहादाविवेति न सम्भवति व्यवस्था, एकः पुरुषो जायते नापर इत्यादिरित्यर्थः। न ह्यवच्छेदकभेदेन कपिसंयोगतदभाववत्येकस्मिन्नेव वृक्षे व्यवस्था घटते—एको वृक्षः कपिसंयोगी, अन्यश्च नेति।

किञ्चैकोपाधितो मुक्तस्याप्यात्मप्रदेशस्योपाध्यन्तरैः पुनर्बन्धापत्त्या बन्धमोक्षाव्यवस्था तदवस्थैव। यथैकघटमुक्तस्याकाशप्रदेशस्यान्यघटयोगाद् घटाकाशव्यवस्था तद्वदिति। न च बन्धमोक्षव्यवस्थाश्रुतिरपि लौकिकभ्रमानुवादमात्रमिति वाच्यम्, मोक्षस्यालौकिकत्वात्। मिथ्यापुरुषार्थप्रतिपादनेन श्रुतेः प्रतारकत्वाद्यापत्तेश्च ॥१५०॥

ननु चैतन्यैक्येऽपि तत्तदुपाधिविशिष्टस्यातिरिक्ततामभ्युपगम्य व्यवस्थोपपादनीया; तत्राह—

उपाधिर्भिद्यते न तु तद्वान्[१] ॥१५१॥

उपाधिरेव नाना न तु तद्वानुपाधिविशिष्टोऽपि नानाऽभ्युपेयो विशिष्टस्यातिरिक्तत्वे नानात्मताया एव शास्त्रान्तरेऽप्यभ्युपगमापत्तेरित्यर्थः। बन्धभागिनो विशिष्टत्वे विशेषणवियोगेन विशिष्टनाशान्न मोक्षोपपत्तिरित्यादीन्यपि दूषणानि।

ननु विशिष्टस्य जीवत्वमन्वयव्यतिरेकादिति षष्ठाध्याये (६।६३) स्वयमेवाहङ्कारविशिष्टस्यैव जीवत्वं वक्ष्यतीति चेन्न, प्राणधारकत्वरूपजीवत्वस्यैव विशिष्टाधेयत्ववचनात्, न तु बन्धमोक्षव्यवस्थाया विशिष्टाश्रितत्वं वक्ष्यते मोक्षकाले विशिष्टासत्त्वादिति।

यदपि केचिन्नवीना वेदान्तिब्रुवा आहुः—एकस्यैवात्मनः कार्यकारणोपाधिषु प्रतिबिम्बानि जीवेश्वराः[२], प्रतिबिम्बानां चान्योऽन्यं भेदाज्जन्माद्यखिलव्यवस्थोपपत्तिरिति। तदप्यसत्, भेदाभेदविकल्पासहत्वात्। बिम्बप्रतिबिम्बयोर्भेदे प्रतिबिम्बस्याचेतनतया भोक्तृत्वबन्धमोक्षाद्यनुपपत्तिः, जीवब्रह्माभेदरूपतत्सिद्धान्तक्षतिश्च। जीवेश्वरभिन्नस्यात्मनोऽप्रामाणिकत्वं च। अभेदे तु साङ्कर्यापरिहारः। भेदाभेदाभ्युपगमे तु तत्सिद्धान्तहानिः, भेदाभेदविरोधश्च।

---

१. सूत्रमिदं व्यासतात्पर्यनिर्णये उद्धृतम् (पृ० १०)।

२. द्र० कोशोपाधिविवक्षायां याति ब्रह्मैव जीवताम् (पञ्चदशी ३।४१); 'ब्रह्मापि कोशोपाधिविवक्षायां जीवो भवति शक्त्युपाधिविवक्षायामीश्वरश्च भवतीत्यर्थः' (टीका); कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः (शुकरहस्योप० ३।१२); 'अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इति विवरणकाराः। अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः, बुद्धिप्रतिबिम्बितं चैतन्यं जीवः' (सिद्धान्तबिन्दु प्रनु० १०९-११०)।

अस्मन्मते त्वभेदोऽविभागलक्षणो भेदश्चान्योऽन्याभाव इत्यविरोध इति। अवच्छेदप्रतिबिम्बादिदृष्टान्तवाक्यानि त्वग्रे व्याख्यास्यामः (१।१५३-१५४ भा०)।

स्यादेतत्। बिम्बप्रतिबिम्बादिभेदं परिकल्प्य श्रुत्या बन्धमोक्षव्यवस्था कल्पितेत्येवास्माभिरुच्यते[1], न तु परमार्थतो बिम्बप्रतिबिम्बभावस्तयोर्भेदो बन्धमोक्षादिकं चेष्यत इति। मैवम्, एवं सति बन्धमोक्षादिश्रुतिगणस्य भेदश्रुतिगणस्य चोभयोर्बाधापेक्षया केवलाभेदश्रुतिगणस्यैवाविभागपरतयैव सङ्कोचो लाघवाद्युक्तः, श्रुतिस्मृत्यन्तरैरविभागस्य सिद्धत्वाच्चेति ॥१५१॥

आत्मैक्यवादिषूक्तं दूषणमुपसंहरति —

**एवमेकत्वेन परिवर्त्तमानस्य न विरुद्धधर्माध्यासः[2] ॥१५२॥**

एवंरीत्यैकत्वेन सर्वतो वर्तमानस्यात्मनो जन्ममरणादिरूपविरुद्धधर्मप्रसङ्गो न युक्त इत्यर्थः। यद्वैकत्व इति च्छेदः। एकत्वेऽभ्युपगम्यमाने परितः सर्वतो वर्तमानस्य सर्वोपाधिष्वनुगतस्य विरुद्धधर्माध्यासो नेति न, किन्तु सर्वथा विरुद्धधर्मसङ्करोऽपरिहार्य इत्यर्थः।

ननु पुरुषो निर्धर्मकस्तत्र कथं जन्ममरणबन्धमोक्षादिविरुद्धधर्मसाङ्कर्यमापद्यते भवद्भिरपि सर्वेषां धर्माणामुपाधिनिष्ठत्वाभ्युपगमादिति चेन्न। उक्तधर्माणां संयोगवियोगभोगाभोगरूपतया पुरुषे स्वीकारात्। परिणामरूपधर्माणामेव पुरुषे प्रतिषेधस्योक्तत्वादिति।

यथा[3] स्फटिकेषु लौहित्यनीलिमादिधर्माणामारोपितानामपि व्यवस्थाऽस्ति तथा पुरुषेष्वपि बुद्धिधर्माणां सुखदुःखादीनां शरीरादिधर्माणां च ब्राह्मण्यक्षत्रियत्वादीनामारोपितानामपि व्यवस्थाऽस्ति शास्त्रेषु; यथा विष्णुपुराणे[4] —

यथैकस्मिन् घटाकाशे रजोधूमादिभिर्वृते।
न च सर्वे प्रयुज्यन्त एवं जीवाः सुखादिभिः॥

इति ॥१५२॥

---

१. बन्धस्यापारमार्थिकत्वमविद्यारूपत्वं च सुष्ठु प्रतिपादितं विवरणप्रमेयसंग्रहे (पृ० ६-७)। द्र० मिथ्याबन्धविधूननेन…(अद्वैतसिद्धिप्रथममङ्गलश्लोक)।

२. सूत्रमिदं व्यासतात्पर्यनिर्णये उद्धृतम् (पृ० १०)।

३. 'यथा स्फटिकेषु' इत्यादिकं वाक्यं १।१५३ सूत्रस्य पातनिकारूपं प्रतिभाति, यद्यपि बहुषु संस्करणेषु 'सापि व्यवस्था…' इत्यत एव पातनिकवाक्यं प्रदर्शितम्।

४. माण्डूक्यकारिकायां श्लोकोऽयं दृश्यते (३।५)। स्वकृतागमशास्त्रग्रन्थे विधुशेखरभट्टाचार्य एतच्छ्लोकविषये आह—"धृतेयं कारिका भव्येन (मध्यमकहृदयकारिका ८।१३)। विज्ञानभिक्षुणा तु तृतीये पादे 'न च सर्वे प्रयुज्यन्ते' इति पाठेन विष्णुपुराणस्येति कृत्वा पठिता (सांख्यदर्शनम् १।१५२)। न पुनरत्रेयं लभ्यते। भव्यधृतभोटपाठच्छाया त्वेवम्—यथैकस्मिन् घटाकाशे रजोधूमैः समावृते। न भवन्ति तथा सर्वे न सुखादि तथात्मनि"। इति। (पृ० ५१)। विष्णुसहस्रनामभाष्ये विष्णुधर्मनामकस्य अमुद्रितस्योपपुराणस्य अधोलिखित वचनं शंकर उद्धृतवान्—'यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते। नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित् क्वचित्'॥ (पृ० ३८)

सापि व्यवस्थैकात्म्ये सति जन्मादिव्यवस्थावदेव नोपपद्यत इत्याह—

**अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात्[1] ॥१५३॥**

अन्यधर्मत्वेऽपि धर्माणां सुखादोनामारोपात् पुरुषे व्यवस्था न सिध्यति। आरोपाधिष्ठानपुरुषस्यैकत्वादित्यर्थः। आकाशस्यैकत्वेऽपि घटावच्छिन्नाकाशानां घटभेदेन भिन्नतयौपाधिकधर्मव्यवस्था घटते। आत्मत्व-जीवत्वादिकन्तु नोपाध्यवच्छिन्नस्य। उपाधिवियोगे घटाकाशनाशवत् तन्नाशेन जीवो न म्रियत (द्र० कठ०१।३।१८) इत्यादिश्रुतिविरोधप्रसङ्गात्, किन्तु केवलचैतन्यस्येति प्रागेवोक्तम्।

इमां बन्धमोक्षादिव्यवस्थानुपपत्तिं सूक्ष्मामबुद्ध्वैवाधुनिका वेदान्तिब्रुवा उपाधिभेदेन बन्धमोक्षव्यवस्थामैकात्म्येऽप्याहुः। तेऽप्येतेन निरस्ताः। येऽपि तदेकदेशिन इमामेवानुपपत्तिं पश्यन्त उपाधिगतचित्प्रतिबिम्बानामेव बन्धादीन्याहुस्ते[2] त्वतीव भ्रान्ताः। उक्ताङ्घ्रिदाभेदादिविकल्पासहत्वादिदोषात्। अन्तःकारणस्य तदुज्ज्वलितत्वादित्यत्र (१।९९) उक्तदोषाच्च।

किञ्च वेदान्तसूत्रे क्वपि सर्वात्मनात्मत्यन्तैक्यं नोक्तमस्ति, प्रत्युत 'भेदव्यपदेशाच्चान्यः' (१।१।२१) 'अधिकन्तु भेदनिर्देशात्', (२।१।२२), 'अंशो नानाव्यपदेशात्' (२।३।४३) इत्यादिसूत्रैर्भेद उक्तः। अत आधुनिकानाम वच्छेदप्रतिबिम्बादिवादा[3] अपसिद्धान्ता एव। स्वशास्त्रानुक्तसन्दिग्धार्थेषु

---

१. व्यासतात्पर्यनिर्णये (पृ-१०) उद्धृतमिदम्।

२. उपाधिगतचित्-प्रतिबिम्बभेदाः अविद्याभेदाद् भवन्ति; अत एव अविद्याभेद-विशेषबद्धः कश्चिच् चित्प्रतिबिम्बो मुक्तो भवति, अन्यश्च बद्धो वर्तते इति बन्धमोक्षव्यवस्था सूपपन्ना भवति। यथाह वाचस्पतिर्भामत्याम्—'न वयं प्रधानवदविद्यां सर्वजीवेषु एकाम् आचक्ष्महे ... किन्तु इयं प्रतिजीवं भिद्यते। तेन यस्यैव जीवस्य विद्या उत्पन्ना तस्यैवाविद्याऽपनीयते, न जीवान्तरस्य, भिन्नाधिकरणयो र्विद्याविद्ययोरविरोधात्। तत् कुतः समस्तसंसारोच्छेदप्रसंगः (१।४।३)।

३. अवच्छेदवादः—अविद्यावच्छिन्नो जीवः, अविद्यानवच्छिन्न ईश्वरः (सिद्धा-बिन्दुनारायणीटीका, पृ० २२७); 'अज्ञानविषयीकृतं चैतन्यमीश्वरः, अज्ञानाश्रयीभूतश्च जीवः ××अस्मिश्च पक्षे अज्ञाननानात्वाज् जीवनानात्वम् प्रतिजीवं च प्रपञ्चभेदः ... अयमेव चावच्छेदवादः (सिद्धान्तबिन्दु, अनु० ११८-११३);

प्रतिबिम्बवादः—अविद्याप्रतिबिम्बितं ब्रह्मैव जीवः (पञ्चपादिका, पृ० १४)। 'परमार्थदर्शिनस्तु य ईश्वरः स एव प्रत्यगात्मेति मन्यन्ते। विमतौ जीवेश्वरौ वस्तुतो न भिन्नौ, उपाधिपरामर्श मन्तरेण अविभाव्यमानभदत्वाद् बिम्बप्रतिबिम्बवदिति (विवरण, पृ० २०९); बिम्बस्थानीय - ब्रह्मस्वरूपता प्रतिबिम्बस्थानीयस्य जीवस्यापादश्यते इति (पञ्चपादिका, पृ० २२)। प्रतिबिम्बा जीवः बिम्बस्थानीय ईश्वरः स्वतन्त्र्यमीश्वरस्य तत्-पारतन्त्र्यं जीवस्येति (सिद्धान्तलेश, पृ० १०३)।

समानतन्त्रसिद्धान्तस्यैव सिद्धान्तत्वाच्चेत्यादिकं ब्रह्ममीमांसाभाष्ये (द्र० अ० २) प्रतिपादितमस्माभिः ॥१५३॥

नन्वेवं पुरुषनानात्वे सति

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् । (ब्रह्मबिन्दु १२)
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।[1]
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥
(कूर्म २।२।२२ख-२३क)

इत्याद्याः श्रुतिस्मृतय आत्मैकत्वप्रतिपादिका नोपपद्यन्त इति; तत्राह—

**नाद्वैतश्रुतिविरोधी[2] जातिपरत्वात्[3] ॥ १५४ ॥**

आत्मैक्यश्रुतीनां विरोधस्तु नास्ति तासां जातिपरत्वात् । जातिः सामान्यमेकरूपत्वं तत्रैवाद्वैतश्रुतीनां तात्पर्यात्, न त्वखण्डत्वे प्रयोजनाभावादित्यर्थः । जातिशब्दस्य चैकरूपतार्थकत्वमुत्तरसूत्राल्लभ्यते । यथाश्रुतजातिशब्दस्यादरे 'आत्मा वा इदमेक एवाग्र आसीत्,' (ऐ० उप० १।१।१) 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' (छान्दोग्य ६।२।१) इत्याद्यद्वैतश्रुत्युपपादकतयैव सूत्रं व्याख्येयम्, जातिपरत्वात्, विजातीयद्वैतनिषेधरत्वादित्यर्थः ।

तत्राद्यव्याख्यायामयं भावः—आत्मैक्यश्रुतिस्मृतिष्वेकादिशब्दाश्चिदेकरूपतामात्रपराः, भेदादिशब्दाश्च वैधर्म्यलक्षणभेदपराः[4] ।

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ (ब्रह्मबिन्दु ११)

इत्यादिवाक्येष्वेकरूपार्थत्वावश्यकत्वात् । अन्यथाऽवस्थात्रयेऽप्यात्मन एकतामात्रज्ञानेन स्थानत्रयव्यतीतशब्दोक्ताया अवस्थात्रयाभिमाननिवृत्तेरसम्भवात् । तथैकरूपताप्रतिपादनेनैव निखिलोपाधिविवेकेन सर्वात्मनां स्वरूपबोधनसम्भवाच्च ।

---

१. कूर्मे मुद्रितपाठस्तु 'नित्यः सर्वत्रगो ह्यात्मा कूटस्थो दोषवर्जितः । एकः सन्तिष्ठते शक्त्या मायया न स्वभावतः' ॥ इति । 'तथा चाह भगवान् पराशरः' इत्युक्त्वा शंकरः श्वेताश्वतरभाष्ये श्लोकमिममुद्धृतवान् (भूमिकायाम्) । द्र० अन्नपूर्णोप० ५।७५ । श्लोकोऽयं सूतसंहितान्तर्गत इत्युक्तं व्यासतात्पर्यनिर्णये (पृ० २२) ।

२. सांख्यमतवर्णनप्रसंगे भाट्टचिन्तामणावुक्तम्—औपनिषदास्तु आत्मैक्यवादाः सादृश्यपरत्वेन व्याख्येयाः (पृ० ३९) ।

३. इदं व्यासतात्पर्यनिर्णये (पृ० १०), योगवार्तिके (१।२४) चोद्धृतम् ।

४. क्वचिदयं पाठो दृश्यते-चिदेकरूपतामात्रपरचैतन्ययोर्भेदस्य वैधर्म्यलक्षणभेदपरा । पाठोऽयं भ्रष्टः ।

न ह्यन्यथा निर्धर्मकमात्मस्वरूपं विशिष्य ब्रह्मणापि शब्देन साक्षात्प्रतिपादयितुं शक्यते, शब्दानां सामान्यमात्रगोचरत्वात् । आब्रह्मस्तम्बपर्यन्तेष्वात्मन एकरूपत्वे तु प्रतिपादिते तदुपपत्त्यर्थं शिष्यः स्वयमेव तावद्विवेचयति यावन्निर्विशेषे शब्दगोचरे स्वरूपे पर्यवस्यतीति । ततश्च निःशेषाभिमाननिवृत्त्या कृतकृत्यो भवति ।

यदि पुनरद्वैतवाक्यान्यखण्डतामात्रपराणि स्युस्तर्हि तेभ्यो नाभिमाननिवृत्तिः सम्भवति । आकाशे विविधशब्दवदखण्डेऽप्यात्मनि सुखदुःखतदभावादीनामवच्छेदकभेदैरुपपत्तेः । एकस्यैव वाक्यस्याखण्डत्वावैधर्म्योभयपरत्वे च वाक्यभेदोऽखण्डतापरत्वकल्पनायां फलाभावश्च, अवैधर्म्यज्ञानादेव सर्वाभिमाननिवृत्तेः ।

अतोऽद्वैतवाक्यानि नाखण्डतापराणि । न्यायानुग्रहेण बलवतीभिर्भेदग्राहकश्रुतिस्मृतिभिर्विरोधाच्च । किन्त्ववैधर्म्यलक्षणाभेदपराण्येव । साम्यबोधकश्रुतिस्मृतिभिरेकवाक्यत्वात्, 'सामान्यात् तु' इति (३।२।३२) ब्रह्मसूत्राच्चेति । तत्र साम्ये श्रुतयः—यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ( कठ० ४।१।५ ), निरञ्जनः परमं साम्यमुपैति (मुण्डक ३।१।३) इत्याद्याः ।

स्मृतयश्च—

ज्योतिरात्मनि नान्यत्र सर्वभूतेषु तत् समम् ।
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा ॥
यावानात्मनि बोधात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद जनस्थोऽपि न मुह्यति ॥

इत्याद्याः । उक्तश्रुतौ मोक्षदशायामपि भेदघटितसाम्यवचनात् स्वरूपभेदोऽप्यात्मनामस्तीति सिद्धम् । अवैधर्म्याभेदपरत्वं चास्मन्मते विष्णुरहं शिवोऽहमित्यादिवाक्यानां मन्तव्यम्, न तु तत्त्वमसि, अहं ब्रह्मास्मीत्यादिवाक्यानामपि ।

तत्र साङ्ख्यमते प्रलयकालीनस्य पूर्णात्मन एव तदादिपदार्थतया नित्यशुद्धमुक्तस्त्वमसीत्यादियथाश्रुतस्य तादृशवाक्यार्थत्वात् । यदि तु सर्गाद्युत्पन्नपुरुषो नारायणाख्य एव तत्पदार्थस्तदा तत्त्वमसीत्यादि (छन्दोग्य ६।८।७) वाक्यानामप्यवैधर्म्यार्थ कतैवास्तु ।

ननु प्रयोजनाभावान्न भेदपरत्वं श्रुतीनां सम्भवतीति चेन्न मोक्षोपपादनस्यैव प्रयोजनत्वात् । सृष्टिसंहारयोः प्रवाहरूपेणानुच्छेदात् तस्यैक्ये मोक्षानुपपत्तेः । अथैवमात्मभेदस्य लोकसिद्धतया न तत्परत्वं श्रुतीनां घटत इति मैवम्; लाघवतर्केणाकाशवदात्मन्येकत्वस्यानुमानतः प्रसक्तस्य श्रुत्यादिभिर्निषेधात्, स्वपरचैतन्ययोर्भेदस्य चाप्रत्यक्षत्वात्, देहादिष्वेवानुभवात् । 'य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति' (तै० उप० २।७) इत्यादिभेदनिन्दा तु वैधर्म्यविभागान्यतरलक्षणभेदपरेति ।

नन्वेवं मुक्तानां प्रतिबिम्बावच्छेदश्रुतीनां का गतिरिति चेदुच्यते । अनेकतेजोमयादित्यमण्डलवद् अनेकात्ममयपि चिदादित्यमण्डलमेकरसमविभक्तमेकपिण्डीकृत्य तस्य किरणवत् स्वांशभूतैरसङ्ख्यपुरुषैरसङ्ख्योपाधिष्वसङ्ख्यविभाग एव प्रतिबिम्बादिदृष्टान्तैः प्रतिपाद्यते, विभागलक्षणान्यत्वस्य वाचारम्भणमात्रत्वं बोधयितुं न पुनरखण्डत्वम्—'वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव' (कठ० १।५।१०) इत्यादिसांशदृष्टान्तश्रुतीनां न्यायानुग्रहेण बलवत्त्वादिति; यथा च स्मर्यते—'यस्य सर्वात्मकत्वेऽपि खण्डयते नैकपिण्डता' इति ।

ब्रह्ममीमांसायां तु नित्याभिव्यक्ते परमेश्वरचैतन्येऽन्येषां लयरूपाविभागेनाप्यद्वैतमुक्तम् 'विभागो वचनादिति' सूत्रेणेति (४।२।१६) । अधिकं तु ब्रह्ममीमांसाभाष्ये (द्र० ४।२-४) प्रोक्तमस्माभिरिति दिक् ।

सूत्रस्य द्वितीयव्याख्यायां त्वयं भावः । प्रलयकाले पुरुषविजातीयं सर्वमेवासत्, अर्थक्रियाकारित्वाभावात् । पुरुषाणां कूटस्थत्वेनार्थक्रियैवाप्रसिद्धेति । अतः सर्गकाल इव प्रलयेऽपि सत्त्वम् । अतस्तदात्मनां विजातीयद्वैतराहित्यम् । तथा सर्गकालेऽपि कूटस्थत्वरूपपारमार्थिकसत्त्वं नान्यत्रेति विजातीयद्वैतराहित्यात् सर्गकालीनाद्वैतश्रुतयोऽप्युपपन्ना इति ॥१५४॥

नन्वात्मन एकत्ववदेकरूपत्वमपि नानारूपताप्रत्यक्षेण विरुद्धम्, तत् कथमुक्तं जातिपरत्वादिति; तत्राह—

[1]विदितबन्धकारणस्य दृष्ट्याऽतद्रूपम्[2] ॥१५५॥

विदितं स्पष्टं बन्धकारणमविवेको यत्र तस्य दृष्ट्यैव पुरुषेष्वतद्रूपं रूपभेद इत्यर्थः । अतो भ्रान्तदृष्ट्या न रूपभेदसिद्धिरिति ॥१५५॥

ननु तथाप्यनुपलम्भादेकरूपत्वाभावः सेत्स्यति, तत्राह—

नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः[3] ॥१५६॥

अनुपलम्भ एवासिद्धः । अज्ञैरदर्शनेऽपि ज्ञानिभिरेकरूपत्वस्य दर्शनादित्यर्थः ॥ १५६ ॥

अद्वैतश्रुत्यनुपपत्तिं समाधायाखण्डाद्वैते बाधकान्तरमाह—

---

१. सूत्रमिदं व्यासतात्पर्यनिर्णये उद्धृतम् (पृ० १०) ।

२. विदिताज्ञानस्वरूपस्य जनस्य विवेकज्ञानेनात्मनः कैवल्यरूपं प्रकाशते इति वृत्त्यनुसारी सूत्रार्थः । वृत्तौ तद्रूपमितिच्छेदः । भाष्येऽतद्रूपमिति च्छेदः । अविवेकवतां दृष्ट्या पुरुषेषु रूपभेदा प्रतिभान्ति इत्यर्थो भाष्यमते । इदमेकात्मवाददृष्ट्या उच्यते । तद्रूपातद्रूपयोऽर्थौ दर्शितो भाष्यवृत्त्योः स न सूत्राक्षरतः स्पष्टं प्रतीयते ।

३. उद्धृतमिदं व्यासतात्पर्यनिर्णये (पृ० १०) ।

[1]वामदेवादिर्मुक्तो नाद्वैतम्[2] ॥१५७॥

[3]वामदेवादिर्मुक्तोऽस्ति तथापीदानीं बन्धः स्वस्मिन्ननुभवसिद्धः। अतो नाखण्डात्माऽद्वैतमित्यर्थः। 'स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमापे' त्यादि वाक्यशतविरोधश्चेति शेषः। न चैवं बन्धमोक्षावुपाधेरेवेत्यवगन्तव्यम्, श्रुतिस्मृतिसिद्धान्तविरोधात्। दुःखं मा भुञ्जीयेति कामनादर्शनेन पुरुषमोक्षस्यैव मोक्षाख्यपरमपुरुषार्थत्वाच्च। उपाधेर्दुःखहानस्य च तादर्थ्येन परम्परयैव[4] पुरुषार्थत्वात् पुत्रादिवदिति।

यदप्याधुनिकैर्मायावादिभिरुच्यते—अद्वैतश्रुतिविरोधाद् बन्धमोक्षसृष्टिसंहारादिश्रुतयो बाध्यन्त[5]इति; तदप्यसत्, मोक्षाख्यफलस्यापि श्रवणकाल एवाभावनिश्चये श्रवणोत्तरं मननादिविधेरननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्। प्रपञ्चान्तर्गतस्य वेदान्तस्याप्याप्यद्वैतश्रुत्या बाधे वेदान्तावगतेऽप्यद्वैते पुनः संशयापत्तेश्च।

किञ्च 'मिथ्याबुद्धिर्नास्तिकते' त्यनुशासनाद् (अमर० १।४।४) धर्मादिषु स्वापवन् मिथ्यादृष्टयो बौद्धप्रभेदा एव, सांवृतिकशब्देन[6] प्रपञ्चस्याविद्यकतायाश्च तैरभ्युपगमादिति दिक् ॥१५७॥

ननु वामदेवादेरपि परममोक्षो न जात इत्यभ्युपेयम्, तत्राह—

[7]अनादावद्ययावदभावाद्भविष्यदप्येवम्[8] ॥१५८॥

---

१. द्र० बृहदा० १।४।१०; अत्र 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति ब्रह्मसूत्रमपि (१।१।४०) द्रष्टव्यम्।

२. उद्धृतमिदं व्यासतात्पर्यनिर्णये (पृ० १०)

३. वामदेवविषये द्र० ऐत० उप० २।४।५ शां० भा०; बृहदारण्यकवार्त्तिकसार २०५। उक्तं च पञ्चदश्याम्—आगामिप्रतिबन्धश्च वामदेवे समीरितः। एकेन जन्मना क्षीणो भरतस्य त्रिजन्मनि ॥ (६।४५)।

४. पदमिदं क्वचिन्न पठ्यते।

५. मोक्षप्राप्तिख्यापिका आख्यायिका अर्थवादकल्पेति केचन; यथोक्तं सिद्धान्तबिन्दौ—'शुकादीनां तु मोक्षश्रवणं चार्थवादः' (अनु० ११६)।

६. द्र० संवृतिः परमार्थश्च सत्यद्वयमिदं स्मृतम् (बोधिचर्यावतार ९।२)। 'मोहः स्वभावावरणाद्धि संवृतिः'......(मध्यमकावतार ६।२८)।

७. अनादौ संसारे अद्ययावत् सर्वमुक्तेरभावात् भविष्यत्कालेऽपि न सर्वेषां मुक्तिर्भविष्यति—इति सूत्रार्थो वृत्तिमते। अनादिकालतो यदि न कोऽपि मुक्तः तर्हि आगामिनि कालेऽपि न कोऽपि मुक्तो भविष्यति—इत्यर्थो भाष्यमते। भाष्यदर्शितोऽर्थः साधुतर इति प्रतिभाति।

८. सूत्रमिदं व्यासतात्पर्यनिर्णये उद्धृतम् (पृ० १०)।

अनादौ कालेऽद्ययावच्चेन्मोक्षो न जातः कस्यापि, तर्हि भविष्यत्कालोऽप्येवं मोक्षशून्य एव स्यात्, सम्यक्साधनानुष्ठानस्याविशेषादित्यर्थः ॥१५८॥

इदानीमिव सर्वत्र नात्यन्तोच्छेदः[1] ॥१५९॥

सर्वत्र काले बन्धस्यात्यन्तोच्छेदः कस्यापि पुंसो नास्ति वर्त्तमानकालवदित्यनुमानं सम्भवेदित्यर्थः ॥१५९॥

पुरुषाणां यदेकरूपत्वमेकत्वप्रतिपादकश्रुत्यर्थावधारितं तत् किं मोक्षकाले, किं सर्वदैवेत्याकाङ्क्षायामाह—

[2]व्यावृत्तोभयरूपः[3] ॥१६०॥

स च पुरुषो व्यावृत्तोभयरूपो व्यावृत्तो निवृत्तो रूपभेदो यस्मात् तथेत्यर्थः। श्रुतिस्मृतिन्यायेभ्यः सदैकरूपतासिद्धेरिति शेषः। तदुक्तम्—

बहुरूप इवाभाति मायया बहुरूपया।
रममाणो गुणेष्वस्या ममाहमिति बध्यते॥
जगदाख्यमहास्वप्ने स्वप्नात् स्वप्नान्तरं व्रजत्।
रूपं त्यजति नो शान्तं ब्रह्म शान्तत्वबृंहितम्॥

( योगवा० ६।७२।३–३ )

इति च ॥१६०॥

ननु साक्षित्वस्यानित्यत्वात् पुरुषाणां कथं सदैकरूपत्वम्, तत्राह—

साक्षात्सम्बन्धात् साक्षित्वम् ॥१६१॥

पुरुषस्य यत् साक्षित्वमुक्तं तत् साक्षात्सम्बन्धमात्रात्, न तु परिणामत इत्यर्थः। साक्षात्सम्बन्धेन बुद्धिमात्रसाक्षिताऽवगम्यते[4], साक्षाद्द्रष्टरि संज्ञायामिति (अष्टा० ५।२।९२) साक्षिशब्दव्युत्पादनात्। साक्षाद्द्रष्टृत्वं चाव्यवधानेन द्रष्टृत्वम्। पुरुषे च साक्षात्सम्बन्धः स्वबुद्धिवृत्तेरेव भवति। अतो बुद्धेरेव साक्षी पुरुषोऽन्येषां तु द्रष्टृमात्रमिति शास्त्रीयो विभागः। ज्ञाननियामकस्वार्याकारतास्थानीयः प्रति-

---

१. सूत्रमिदं व्यासतात्पर्यनिर्णये उद्धृतम् ( पृ० १० )।

२. द्र० नहि वस्तुतः मुक्तामुक्तत्वविशेषोऽस्ति, आत्मनो नित्यैकरूपत्वात् ( बृहदा० ४।४।६ शां० भा० )।

३. उभयरूपेति शब्देन रूपभेदरूपोऽर्थो गृह्यते भिक्षुणा। एतादृशेऽर्थे उभयशब्दस्य प्रयोग श्चिन्त्य एव। व्यावृत्तो बद्धत्व-मुक्तत्वरूपे यस्मात् स व्यावृत्तोभयरूप इति वृत्तिमते सूत्रतात्पर्यम्। बन्धमोक्षौ चित्तगतौ धर्मौ, न निर्गुणपुरुषगतौ; पुरुषे एतयो रौपचारिकः प्रयोग इति सांख्यीयया दृष्ट्या वृत्तिदर्शितं सूत्रतात्पर्यमेव साधुतरं प्रतिभाति।

४. द्र० सर्वबुद्धिप्रत्ययसाक्षिणि मुख्ये आत्मनि ( कठ० १।३।१३ शां० भा० )।

बिम्बरूप एव सम्बन्धो न तु संयोगमात्रमतिप्रसंगादित्यसकृदावेदितम् (द्र०१।१४८)। विष्णवादेः सर्वसाक्षित्वं त्विन्द्रियादिव्यवधानाभावमात्रेण गौणम्।

अक्षसम्बन्धात् साक्षित्वमिति पाठे[1] त्वक्षमत्र बुद्धिः करणत्वसामान्यात्, तस्या यथोक्तात् प्रतिबिम्बरूपात् सम्बन्धादित्यर्थः ॥१६१॥

उभयरूपत्वाभावसिद्धयर्थं पुरुषस्यापरौ विशेषावाह सूत्राभ्याम्—

नित्यमुक्तत्वम्[2] ॥ १६२ ॥

सदैव पुरुषस्य दुःखाख्यबन्धशून्यत्वम्। दुःखादेर्बुद्धिपरिणामत्वादित्यर्थः। पुरुषार्थस्तु दुःखभोगनिवृत्तिः प्रतिबिम्बरूपदुःखनिवृत्तिर्वेत्युक्तमेव ॥ १६२ ॥

[3]औदासीन्यं चेति ॥ १६३ ॥

औदासीन्यमकर्तृत्वं तेन चान्येऽपि निष्कामत्वादय उपलक्षणीयाः। कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव (बृहदा० १।५।३) इति श्रुतेः। इतिशब्दः पुरुषधर्मप्रतिपादनसमाप्तौ[4] ॥ १६३ ॥

नन्वेवं प्रकृतिपुरुषयोरन्योऽन्यं वैधर्म्येण विवेके सिद्धे पुरुषस्य कर्तृत्वं बुद्धेरपि च ज्ञातृत्वं श्रुतिस्मृत्योरुच्यमानं कथमुपपद्येयाताम्; तत्राह—

उपरागात् कर्तृत्वं चित्साान्निध्याच्चित्साान्निध्यात्[5] ॥ १६४ ॥

अत्र यथायोग्यमन्वयः। पुरुषस्य यत् कर्तृत्वं तद् बुद्ध्युपरागात्। बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात्; एतदुभयं न वास्तवमित्यर्थः। यथाऽग्न्ययसोः परस्परं

---

१. अनिरुद्धसम्मतः पाठोऽयम्।

२. पुरुषः खलु नित्यशुद्धबुद्धमुक्तस्वभाव इति प्रागेवोक्तम् (१।१९)।

३. द्र० पुरुषस्तु उदासीनो न प्रवर्तको न निवर्तकः (शारीरक २।२।४)। औदासीन्यमेव माध्यस्थ्यम् इति पदेन कारिकायामुक्तम् (१९ का०)।

४. इतिकरणस्य यत् तात्पर्यमत्रोक्तं न तु तत् समञ्जसम्, प्रतिविषय-प्रतिपादन-समाप्तौ इति-पदप्रयोगस्यादर्शनात्। चकारस्यापि सार्थक्यं चिन्त्यमेव। किम् अन्येऽपि केचन पुरुषधर्माः (वस्तुतस्तु पुरुषो धर्महीनः) द्रष्टृत्वादयश्चकारेण संग्राह्याः?

५. द्र० सांख्यास्तु अविद्याध्यारोपितमेव पुरुषे कर्तृत्वं क्रियाकारकं फलं चेति... (प्रश्न ६।३ शां० भा०)। चिद्रूपः पुरुषः खल्वकर्ता—'निरतिशया ह्यकर्तारः चेतना इति सांख्या मन्यन्ते' (शारीरक २।१।४)। कर्तृत्वं खलु गुणेष्वेवेति सांख्याः, यथाह—त्रिषु गुणेषु कर्तृषु अकर्तरि च पुरुषे...(२।१८ व्यासभाष्यधृतं पञ्चशिखवाक्यम्)। 'अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः (शारीरक २।३।४०; भोक्तृत्वमत्र भोगक्रियाकर्तृत्वम्, तच्च विकारीति विज्ञेयम्; सांख्यदृष्ट्या भोक्तृत्वस्य यत् तात्पर्यं तत्तु प्रागेव दर्शितम्); स्फटिकलौहित्यदृष्टान्तेन आत्मनि कर्तृत्वादेरारोपितत्वमुक्तम्। (वि०प्र०सं०पृ० २१४)

संयोगविशेषात् परस्परधर्मव्यवहार औपाधिकः, यथा वा जलसूर्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः। एतच्च कारिकयाप्युक्तम्—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ (२०) इति।

चित्सान्निध्यादिति द्विःपाठोऽध्यायसमाप्तिसूचनार्थः ॥ १६४ ॥

हेयहाने तयोर्हेतू इति व्यूहा[1] यथाक्रमम्।
चत्वारः शास्त्रमुख्यार्था अध्यायेऽस्मिन् प्रपञ्चिताः ॥ १ ॥

सङ्क्षिप्तसाङ्ख्यसूत्राणामर्थस्यात्र प्रपञ्चनात्।
शास्त्रं योगवदेवेदं साङ्ख्यप्रवचनाभिधम् ॥ २ ॥

इति विज्ञानाचार्यनिर्मिते[2] कापिलसाङ्ख्यप्रवचनस्य भाष्ये विषयाध्यायः प्रथमः ॥

:**:—

१. चतुर्व्यूहविषये व्यासभाष्यम् २।१५; लिङ्गपु० १।२८।२३–२४ च द्र०।
२. क्वचित् विज्ञानभिक्षुनिर्मिते इति पठ्यते।

इति गार्ग्येण रामशंकरभट्टाचार्येण प्रणीता सांख्यसूत्रप्रथमाध्यायगता ज्योतिष्मती-टिप्पणी।

# द्वितीयोऽध्यायः

शास्त्रस्य विषयो निरूपितः । साम्प्रतं पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिप्रक्रियामतिविस्तरेण द्वितीयाध्याये वक्ति । तत्रैव प्रधानकार्याणां स्वरूपं विस्तरतो वक्तव्यं तेभ्योऽपि पुरुषस्यातिस्फुटविवेकाय । अत एव—

विकारं प्रकृतिं चैव पुरुषं च सनातनम् ।
यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥ ( शान्ति० २१७।३७ )

इति मोक्षधर्मादिषु त्रयाणामेव ज्ञेयत्ववचनम् । तत्रादावचेतनायाः प्रकृतेर्निष्प्रयोजनस्रष्टृत्वे मुक्तस्यापि बन्धप्रसंग इत्याशयेन जगत्सर्जने प्रयोजनमाह—

विमुक्तमोक्षार्थं वा प्रधानस्य[1] ॥ १ ॥

कर्तृत्वमिति पूर्वाध्यायशेषसूत्रादनुषज्यते[2] । स्वभावतो दुःखबन्धाद्विमुक्तस्य पुरुषस्य प्रतिबिम्बरूपदुःखमोक्षार्थं प्रतिबिम्बसम्बन्धेन दुःखमोक्षार्थं वा प्रधानस्य जगत्कर्तृत्वम्[3] । अथवा स्वार्थम्—स्वस्य पारमार्थिकदुःखमोक्षार्थम् । यद्यपि मोक्षवद्भोगोऽपि सृष्टेःप्रयोजनं तथापि मुख्यत्वान्मोक्ष एवोक्तः ॥ १ ॥

ननु मोक्षार्थं चेत् सृष्टिस्तर्हि सकृत् सृष्ट्यैव मोक्षसम्भवे पुनः पुनः सृष्टिर्न स्यादिति; तत्राह—

---

१. अस्मन्मते 'प्रधानस्य प्रवृत्तिः ( = परिणामः ) भोगाय वा भवति, अपवर्गाय वा' इत्येव सूत्रस्य तात्पर्यम्; द्र० भोगापवर्गार्थं दृश्यम् ( योगसू० २।१८ ) । यावत्कालपर्यन्तं त्रैगुणिकं लिङ्गं संसरति, तावत्कालपर्यन्तमेव भोगः अपवर्गो वा निष्पाद्यमानो भवति । गुणानां प्रतिप्रसवे अस्य पुरुषार्थद्वयस्यापि आत्यन्तिको निरोधो भवति । तुल० कारिका ५६,५६, ५८ च । उद्धृतमिदं गोविन्दभाष्ये ( २।१।१ ) ।

२. वस्तुतः सूत्र मिदं साकाङ्क्षमित्येव स्वीकार्यम् । अतीताध्यायतः पदविशेषस्यानुवृत्तिः क्लिष्टैव ।

३. 'पुरुषकैवल्यार्था प्रवृत्तिः प्रधानस्य' इति सांख्यमतस्य खण्डनं शारीरकभाष्ये (२।३।५०) दृश्यते । पुरुषार्थं प्रयोजनमुररीकृत्य कर्तृ अचेतनं प्रधानं प्रवर्तते इति मतस्य खण्डनमपि प्रश्नोपनिषद्-भाष्ये ( ६।३ ) उपलभ्यते । पुरुषार्था प्रधानस्य प्रवृत्तिरिति मतस्यायुक्तता शारीरके दर्शिता ( २।२।६ ) । सांख्यमतोपपत्तिस्तु ग्रन्थान्तरेऽभिधास्यते ।

विरक्तस्य तत्सिद्धेः[1] ॥ २ ॥

नैकदा सृष्टेर्मोक्षः किन्तु बहुशो जन्ममरणव्याध्यादिविविधदुःखेन भृशं तप्तस्य ततश्च प्रकृतिपुरुषयोर्विवेकख्यात्योत्पन्नपरवैराग्यस्यैव मोक्षोत्पत्तिसिद्धेरित्यर्थः ॥२॥

सकृत्सृष्टया वैराग्यासिद्धौ हेतुमाह—

न श्रवणमात्रात् [2]तत्सिद्धिरनादिवासनाया बलवत्त्वात् ॥ ३ ॥

श्रवणमपि बहुजन्मकृतपुण्येन भवति । तत्रापि श्रवणमात्रान्न वैराग्यसिद्धिः किन्तु साक्षात्कारात् । साक्षात्कारश्च झटिति न भवति, अनादिमिथ्यावासनाया बलवत्त्वात्, किन्तु योगनिष्ठया । योगे च प्रतिबन्धबाहुल्यमित्यतो बहुजन्मभिरेव वैराग्यं मोक्षश्च कदाचित् कस्यचिदेव सिध्यतीत्यर्थः ॥ ३ ॥

सृष्टिप्रवाहे हेत्वन्तरमाह—

बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥

यथा गृहस्थानां प्रत्येकं बहवो भर्तव्या भवन्ति स्त्रीपुत्रादिभेदेन, एवं सत्त्वादिगुणानामपि प्रत्येकमसङ्ख्यपुरुषा विमोचनीया भवन्ति । अतः कियत्पुरुषमोक्षेऽपि पुरुषान्तरमोचनार्थं सृष्टिप्रवाहो घटते । पुरुषाणामानन्त्यादित्यर्थः[3] । तथा च योगसूत्रम्—कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति (२।२२) ॥४॥

ननु प्रकृतेरेव स्रष्टृत्वं कथमुच्यते । एतस्मादात्मन आकाशः सम्भूतः ( तै० उप० २।१ ) इति श्रुत्या पुरुषस्यापि स्रष्टृत्वसिद्धेरिति; तत्राह—

प्रकृतिवास्तवे[4] च पुरुषस्याध्याससिद्धिः[5] ॥ ५ ॥

---

१. कथं तदिति-पदेन मोक्षारूपार्थ एवोपलभ्यते इति न स्पष्टं विज्ञायते । विरक्तेतिपदबलेन मोक्षस्यानुवृत्ति रुक्ता भाष्यकृतेति प्रतीयते । परन्तु वैराग्याद् यथा मुक्तिर्भवति तथा प्रकृतिलयरूपावस्थाऽपि लभ्यते । अवस्थेयं नोपादेया, आत्मज्ञानाभावाद् इति विज्ञेयम् ।

२. तदित्येन मोक्षोत्पत्ति र्गृह्यत इति भाष्यम्, मोक्ष इति वृत्तिः । मोक्षरूपोऽर्थस्तु न प्रकरणलब्ध इति विज्ञेयम् ।

३. द्रष्टव्यं सुरेश्वरवार्त्तिकमस्मिन्नर्थे—'अतएव हि विद्वत्सु मुच्यमानेषु सर्वदा । ब्रह्माण्डजीवलोकानामनन्तत्वाद् अशून्यता ॥ अन्त्यवतूनातिरिक्तत्वे युज्यते परिमाणवत् । वस्तुन्यपरिमेये तु नूनं तेषामसम्भवः' ॥ इति ॥

४. अविद्या यद्यप्यवस्तुभूता तथापि अध्यासो भवत्येवेति अद्वैतिनः ( द्र० वि० प्र० संग्रह पृ० १२–१६ ) । केचिद् वादिनः पुनर्वदन्ति यद् देहादीनामवस्तुत्वाद् अध्यासो न भवितुमर्हतीति ( द्र० वि० प्र० सं० पृ० १४ )

५. भाष्ये यः सूत्रार्थो दर्शितः स न सूत्राक्षरलभ्यः । स्रष्टृत्वशब्दः कथमत्र लब्ध इति न विज्ञायते । किंच वास्तवेति शब्दस्य वस्तुरूपो योऽर्थो भाष्ये दर्शितः स न समीचीनः प्रतिभाति । अपि च 'उपासनायामेव श्रुतेस्तात्पर्याद्' इति यो हेतुरत्र दत्तः, तस्य स्वारस्य मपि दुर्ज्ञानमेव । अध्यासः खलु सांख्यीय एव । तदर्थं पुरुषस्य प्रकृतेश्च वास्तवी सत्ता अपरिहार्यैवेति सांख्यीया दृष्टिः ।

प्रकृतौ सृष्टृत्वस्य वस्तुत्वे च सिद्धे पुरुषस्य स्रष्टृत्वाध्यास एव श्रुतिषु सिध्यति, उपासनायामेव श्रुतेस्तात्पर्यात्। अजामेकाम् (श्वेताश्व० ४।५) इत्यादिश्रुत्यन्तरेण प्रकृतेः स्रष्टृत्वसिद्धेः, पुंसां कूटस्थचिन्मात्रताबोधकश्रुत्यन्तरविरोधाच्चेत्यर्थः।

अयं चाध्यास उपचाररूपो लोके सिद्ध एवास्ति यथा स्वशक्तिषु योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते तथा स्वशक्तौ प्रकृतौ वर्तमानं स्रष्टृत्वादिकं शक्तिमत्सु पुरुषेषूपचर्येते शक्तिशक्तिमदभेदात्। तदुक्तं कौर्मे—

शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥ (१।१२।२८)

इति। भेदमन्योऽन्याभावमभेदं चाविभागरूपं प्रकृत्यादितत्त्वोपासकाः पश्यन्तीत्यर्थः। तयोश्चोदाहरणम्—अथात आदेशो नेति नेतीत्यादिश्रुतिः ( बृहदा० २।३।६ ), आत्मैवेदं सर्वमित्यादि-(छान्दोग्य ७।२५।२ ) श्रुतेश्चेति भावः॥५॥

नन्वेवं प्रकृतावपि स्रष्टृत्वं वास्तवमिति कुतोऽवधृतं सृष्टेः[1] स्वप्नादितुल्यताया अपि श्रवणादिति; तत्राह—

कार्यतस्तत्सिद्धेः[2] ॥ ६ ॥

कार्याणामर्थक्रियाकारितया वास्तवत्वेन कार्यत एव धर्मिग्राहकप्रमाणेन प्रकृतेर्वास्तवस्रष्टृत्वसिद्धेरित्यर्थः। स्वप्नादितुल्यताश्रुतयस्त्वनित्यतारूपासत्त्वांशमात्रे पुरुषाध्यस्तत्वांशे वा बोध्याः; अन्यथा सृष्टिप्रतिपादकश्रुतिविरोधात् स्वप्नपदार्थानामपि मनः परिणामत्वेनात्यन्तासत्ताविरहाच्चेति॥ ६॥

ननु प्रकृतेः स्वार्थत्वपक्षे मुक्तपुरुषं प्रत्यपि सा प्रवर्तेत; तत्राह—

चेतनोद्देशान्नियमः[3] कण्टकमोक्षवत्[4] ॥ ७ ॥

---

१. द्र० स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा। तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥ (माण्डूक्यकारिका० २।३२)। वि० प्र० संग्रहे सृष्टेर्मिथ्यात्वमुपादितं विस्तरेण ( पृ० १९८–१९९ )।

२. तत्सिद्धेः=स्रष्टृत्वसिद्धेरिति भाष्यम्। वृत्तौ तत्सिद्धिरिति पाठः, बन्धसिद्धिरिति तदर्थो दर्शितः। अस्मन्मते 'कार्यतः अध्याससिद्धेः' इत्यर्थः, अध्यासस्यैव प्रकृतत्वात्।

३. चेतनोद्देशात्=चेतनविशेषोद्देशात् प्रकृतेः प्रवर्तनम् ( विवेकिनं प्रति च निवर्तनमित्यर्थात् लभ्यते) इत्येवंविधो भाष्यदर्शितोऽर्थो न सूत्राक्षरानुसारी। अत्र पञ्चमीविभक्तेः तात्पर्यं चिन्त्यमेव। नियमः='न सर्वं प्रति प्रवर्तनं प्रत्युत केषांचित् प्रत्येव' इति भाष्यवृत्त्यनुसारि तात्पर्यम्। इदमपि क्लिष्टमेव।

४. कण्टकोपमा व्यासभाष्ये प्रयुक्ता-पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वं, परिहारः कण्टकस्य पादानधिष्ठानं पादत्राणव्यवहितेन वाधिष्ठानम्। एतत् त्रयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाप्नोति इति (२।१७)।

'चिती संज्ञाने[1]' इति व्युत्पत्त्या चेतनोऽत्राभिज्ञः। यथैकमेव कण्टकं यश्चेतनोऽभिज्ञस्तस्मादेव मुच्यते तं प्रत्येव दुःखात्मकं न भवत्यन्यान् प्रति तु भवत्येव, तथा प्रकृतिरपि चेतनादभिज्ञात् कृतार्थादेव मुच्यते तं प्रत्येव दुःखात्मिका न भवति। अन्याननभिज्ञान् प्रति तु दुःखात्मिका भवत्येवेति नियमो व्यवस्थेत्यर्थः।

एतेन स्वभावतो बद्धाया अपि प्रकृतेः स्वमोक्षो घटत इत्यतो न मुक्तपुरुषं प्रति प्रवर्तते ॥ ७ ॥

ननु पुरुषे स्रष्टृत्वमध्यस्तमात्रमिति यदुक्तं (२।५) तन्न युक्तम्। प्रकृतिसंयोगेन पुरुषस्यापि महदादिपरिणामौचित्यात्। दृष्टो हि पृथिव्यादियोगेन काष्ठादेः पृथिव्यादिसदृशः परिणाम इति; तत्राह—

अन्ययोगेऽपि[2] तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥

प्रकृतियोगेऽपि पुरुषस्य न स्रष्टृत्वसिद्धिराञ्जस्येन साक्षात्। तत्र दृष्टान्तोऽयोदाहवत्। यथायसो न दग्धृत्वं साक्षादस्ति किन्तु स्वसंयुक्ताग्निद्वारकमध्यस्तमेवेत्यर्थः। उक्तदृष्टान्ते तूभयोः परिणामः प्रत्यक्षसिद्धत्वादिष्यते सन्दिग्धस्थले त्वेकस्यैव परिणामेनोपपत्तावुभयोः परिणामकल्पने गौरवम्। अन्यथा जपासंयोगात् स्फटिकस्य रागपरिणामापत्तेरिति ॥ ८ ॥

सृष्टेः फलं मोक्ष इति प्रागुक्तम्। इदानीं सृष्टेर्मुख्यं निमित्तकारणमाह—

रागविरागयोर्योगः सृष्टिः[3] ॥ ९ ॥

रागे सृष्टिर्वैराग्ये च योगः स्वरूपेऽवस्थानम्; मुक्तिरिति यावत्; अथवा चित्तवृत्तिनिरोध इत्यर्थः। तथा चान्वयव्यतिरेकाभ्यां रागः सृष्टिकारणमित्याशयः। तथा च श्रुतिरपि ब्रह्मादिरूपां विविधकर्मगतिमुक्त्वाह—'इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति (बृहदा० ४।४।६) इति। रागवैराग्ये अपि प्रकृतिधर्माविव ॥ ९ ॥

---

१. चिती संज्ञाने। संज्ञानं चैतन्यमिति माधवीयधातुवृत्तिः (१।३४)। संज्ञानं संवित्तिरिति क्षीरस्वामी (क्षीरतरङ्गिणी १।३४)।

२. अन्ययोगे—प्रकृतियोगे; तत्सिद्धिः स्रष्टृत्वसिद्धिरिति भाष्यम्। बन्धाभिमानसिद्धिरिति वृत्तिः। शब्दार्थानामौचित्यं चिन्त्यमेव। दर्शितं मतं तु सांख्यीयम्।

३. भाष्ये यः सूत्रार्थो दर्शितः स न न्यायसंगतः। रागेण सह सृष्टेः विरागेण सह योगस्य च सम्बन्धो नात्र न्यायतो भवितुमर्हति। अस्मिन्नर्थेऽभिप्रेते 'रागविरागयोः सृष्टियोगौ' इत्येव ब्रूयात् सूत्रकारः। किं च रागविरागयोरित्यत्र कथं सप्तमीत्यपि विचार्यमेव। रागस्य सृष्टिहेतुत्वात् तृतीया पञ्चमी वा स्यात्। सूत्रमिदमस्पष्टार्थमेव।

इतः परं सृष्टिप्रक्रियां वक्तुमारभते—

महदादिक्रमेण पञ्चभूतानाम्[1] ॥ १० ॥

सृष्टिरिति पूर्वसूत्रादनुवर्त्तते। यद्य 'प्येतस्मादात्मन आकाशः सम्भूतः' इत्यादि (तै० उप०२।१) श्रुतावादावेव पञ्चभूतानां सृष्टिः श्रूयते, तथापि महदादिक्रमेणैव पञ्चभूतानां सृष्टिरिष्टेत्यर्थः। तेज आदिसृष्टिश्रुतौ गगनवायुसृष्टेरापूरण[2]वदुक्त-श्रुतावप्यादौ महदादिसृष्टिः पूरणीयेति भावः। अत्र च प्रमाणम्–घटसृष्टिवदन्तः करणातिरिक्ताखिलसृष्टेरन्तःकरणवृत्तिपूर्वकत्वानुमानम्।

किञ्च –

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥ (मुण्डक २।१।३)

इति श्रुत्यन्तरस्थपाठक्रमानुरोधेन 'स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुमि'-त्यादिश्रुत्यन्तरेण (प्रश्न ६।४) च पञ्चभूतसृष्टेः प्राङ्महदादिसृष्टिरवधार्यत इति। प्राणश्चान्तःकरणस्य वृत्तिभेद इति वक्ष्यति (२।३१)। अतोऽस्यां श्रुतौ प्राण[3] एव महत्तत्त्वमिति।

तथा वेदान्तसूत्रमपि महदादिक्रमेणैव सृष्टिं वक्ति—अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति (२।३।१५) सदाकाशयोर्मध्ये बुद्धिमनसी उत्पाद्ये इति क्रमेणेत्यर्थः। मनसि चाहङ्कारस्य प्रवेश इति ॥ १० ॥

प्रकृतेरेव स्रष्टृत्वं स्वमोक्षार्थं तस्या नित्यत्वात्। महदादीनां तु स्वस्वविकार-स्रष्टृत्वं न स्वमोक्षार्थमनित्यत्वादिति विशेषमाह—

आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः[4] ॥ ११ ॥

एषां महदादीनां स्रष्टृत्वस्यात्मार्थत्वात् पुरुषमोक्षार्थत्वान्न स्वार्थ आरम्भः स्रष्टृत्वं विनाशित्वेन मोक्षायोगादित्यर्थः। परमोक्षार्थकत्वे चावश्यके पुरुषमोक्षा-र्थकत्वमेव युक्तं न प्रकृतिमोक्षार्थकत्वे तस्याः पुरुषगुणत्वादिति ॥ ११ ॥

---

१. द्र० प्रकृतेर्महानुत्पद्यते, ततोऽहंकारः, अहंकारात् तन्मात्राणि इन्द्रियाणि च। तन्मात्रेभ्यो विशेषा इत्युत्पत्तिक्रमः। (देवलवचनम्—अपरार्कटीकायाम् -द्धृतम् ३।१०९)। क्रमोऽयं सुश्रुतसंहितायाम् (शारीर० अ० १) अन्यत्रापि दृश्यते। सृष्टिप्रक्रियासम्बन्धी क्रमोऽयं व्यवस्थित एवेति पूर्वाचार्याः, अतएव 'क्रमानतिवृत्तेः' इत्युक्तं व्यासभाष्ये (२।१९)।

२. द्र० ब्र० सू० ३।३, अधि० १

३. विज्ञानामृतभाष्ये भिक्षुराह—प्रथमं तावद् ईश्वराधिष्ठानेन संयुक्ताभ्यां जीव-प्रधानाभ्यां महानुत्पद्यते, स च क्रियाशक्त्या प्राणः निश्चयशक्त्या च बुद्धिः तयोर्मध्ये प्रथमं प्राणवृत्तिरुत्पद्यते (२।४।१३ अणुश्चेति सूत्रम्)। न खलु सांख्ये ईश्वराधिष्ठानहेतुकः संयोगोऽभ्युगम्यते—इत्यास्माकीना दृष्टिः।

४. इदं संभाव्यते यदार्याछन्दस्कस्य कस्यचित् श्लोकस्य उत्तरार्धभूतं सूत्रमिदम्।

खण्डदिक्कालयोः सृष्टिमाह—

[1]दिक्कालावाकाशादिभ्यः[2] ॥ १२ ॥

नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव । अतो दिक्कालयोर्विभुत्वोपपत्तिः । 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिश्रुत्युक्तं[3] विभुत्वं चाकाशस्योपपन्नम् । यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः । आदिशब्देनोपाधिग्रहणादिति । यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ तथापि विशिष्टस्यातिरिक्तताभ्युपगमवादेन वैशेषिकनये श्रोत्रस्य कार्यतावत् तत्कार्यत्वमत्रोक्तम् ॥ १२ ॥

इदानीं महदादिक्रमेणेत्युक्तान् (२।१०सू०) स्वरूपतो धर्मतश्च क्रमेण वर्णयति—

अध्यवसायो बुद्धिः[4] ॥ १३ ॥

---

१. तु० दिक्कालौ तु अप्रामाणिकत्वाद् नोक्तौ; आकाशस्यैव दिग्व्यवहारजनकत्वसम्भवात्, दिशः श्रोत्रमिति श्रुतेश्च । कालस्तु अविद्या एव, तस्या एव सर्वाधारत्वात् ( सिद्धान्तबिन्दु, श्लोक ७, अनु० १२ ) ।

२. सृष्टिकथनावसरे आदौ दिक्कालौ एव किमर्थमुक्तौ (बुद्धिप्रतिपादनमेतदनन्तरम्, २।१३ सू०) इति चिन्तनीयम् । इदमपि चिन्तनीयं यदत्र दिक्पदेन वैशेषिकसंमता दिग् गृह्यते, आहोस्विच् शब्दादिगुणहीनं बाह्यं वस्तु किमपि (एतादृशं वस्तु वस्तुतो नास्तीति विज्ञेयम् ) । शब्दगुणकाद् आकाशात् कथं देशः कालो वा उदेति, इति न स्पष्टीकृतं भाष्यकारेण । किमाकाशपदेन शब्दगुणकद्रव्याद् भिन्नः कश्चित् पदार्थः सूत्रकृता गृह्यते ? द्र० 'स्पर्शवद् द्रव्यसंचारो निष्क्रमणं प्रवेशनं च तदकार्यस्याकाशस्य लिङ्गमिति सांख्याः ( उपस्कार २।१।२०); न खलु शब्दगुणकमाकाशमकार्यमिति विज्ञेयम् । शब्दादिगुणहीनो बाह्यदेशो विकल्पवृत्तेरुदाहरणम् । कालोऽपि तथैवेति आस्माकीना दृष्टिः ।

३. प्रचलितेषु श्रुतिग्रन्थेषु नेदं वाक्यमुपलभ्यते । इदं काठकवचनमिति शंकराचार्य आह (छान्दोग्य०६।३।२ भाष्ये) । अत्रैव भाष्ये उद्धृतं काठकवचनान्तरं यद्यपि २।२।१२ कठोपनिषदि दृश्यते, तथापि नेदं वचनं तत्रोपलभ्यते । आपस्तम्बधर्मसूत्रान्तर्गताध्यात्मपटलभाष्येऽपि वचनमिदमुद्धृतम् ( द्र० शंकरकृतविवरणम् ) । कठानाम् कस्मिन्नपि आम्नायांशे वाक्यमिदं स्यादिति अनुमीयते । शाण्डिल्योपनिषदि 'आकाशवत् सर्वगतं सुसूक्ष्मम्' इति पठ्यते (२।४) । शान्ति० २३५।२४ टीकायां नीलकण्ठोऽप्येतदुदाजहार ।

४. अध्यवसायलक्षणो महान् बुद्धिर्मतिरुपलब्धिरित्यनर्थान्तरमिति देवल आह । बुद्धिरध्यवसानाय ( शान्ति० २४७।१८ ), बुद्धिरध्यवसायिनी ( शान्ति० २४८।१ ) इति भारतम् ।

महत्तत्त्वस्य पर्यायो बुद्धिरिति । अध्यवसायश्च निश्चयाख्यस्तस्या साधारणी वृत्तिरित्यर्थः । अभेदनिर्देशस्तु धर्मधर्म्यभेदात् । अस्याश्च बुद्धेर्महत्त्वं स्वेतरसकलकार्यव्यापकत्वान्महैश्वर्याच्च मन्तव्यम्—

सविकारात् प्रधानात् तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा[1] ।। (मत्स्यपु० ३।१७)

इति स्मृतेः अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः (बृहदा० २।४।१०) इत्यादिश्रुतिस्मृतिषु च हिरण्यगर्भे चेतनेऽपि महानिति[2] शब्दो बुद्ध्यभिमानित्वेनैव । यथा पृथिव्यभिमानिचेतने पृथिवीशब्दस्तद्वत् । एवमेव रुद्रादिष्वहङ्कारादिशब्दोऽपि[3] बोध्यः । प्रकृत्यभिमानिदेवतामारभ्य सर्वेषामेव भूताभिमानिपर्यन्तानां स्वस्वबुद्धिरूपाश्च प्रतिनियतोपाधयो महत्तत्त्वस्यैवांशा इति ॥१३॥

महत्तत्त्वस्यापरानपि धर्मानाह—

तत्कार्यं धर्मादि ॥ १४ ॥

धर्मज्ञानवैराग्यैश्वर्याण्यपि बुद्ध्युपादानकानि नाहङ्काराद्युपादानकानि बुद्धेरेव निरतिशयसत्त्वकार्यत्वादित्यर्थः ॥ १४ ॥

नन्वेवं कथं नरपश्वादिगतानां बुद्ध्यंशानामधर्मप्राबल्यमुपपद्यताम्; तत्राह—

महदुपरागाद्विपरीतम् ॥ १५ ॥

तदेव महन्महत्तत्त्वं रजस्तमोभ्यामुपरागाद्विपरीतं क्षुद्रधर्माज्ञानावैराग्यानैश्वर्यधर्मकमपि भवतीत्यर्थः । एतेन सर्व एव पुरुषा ईश्वरा इति श्रुतिस्मृतिप्रवादोऽप्युपपादितः[4], सर्वोपाधीनां स्वाभाविकैश्वर्यस्य रजस्तमोभ्यामेवावरणादिति ।

नन्वेवं धर्माद्यवस्थानार्थं बुद्धेरेव नित्यत्वात् कथं कार्यतेति चेन्न । प्रकृत्यंशरूपे बीजावस्थमहत्तत्त्वे सत्त्वविशेषे कर्मवासनादीनामवस्थानात् तस्यैव ज्ञानकार-

---

१. मात्स्ये 'महत्तत्त्वं प्रजायते', 'जायते तथा' ( ३।१७ ) इति पठ्यते ।

२. द्र० हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः । महानिति च योगेषु विरिञ्चिरिति चाप्यजः ।। सांख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः । विचित्ररूपो भगवान् एकाक्षर इति स्मृतः ॥ ( शान्ति० ३०२।१८–१९ ) ।

३. द्र० अहंकारोऽध्यात्मम्, अधिमन्तव्यम्, अधिभूतम्, रुद्रस्तत्राधिदैवतम् । ( तत्त्वसमास ७-९ सूत्राणां व्याख्यानानि द्रष्टव्यानि ) । इन्द्रियाभिमानिदेवताविवरण-प्रसंगे इतिहास-पुराणादिषु एतादृश्युक्तिर्दृश्यत एव ।

४. इदमसंगतम् । पुरुषतत्त्वमैश्वर्यातीतम् । ऐश्वर्यं च बुद्धिधर्मं एव । यद्यपि श्रुत्यादिषु क्वचिन् निर्गुणं पुरुषमभिलक्ष्य ईश्वरादि-शब्दाः प्रयुक्ताः, तथापि तत्र ईश्वरशब्देन 'चित्तस्य प्रभुः' 'चित्तव्यक्तताया हेतुभूतः' 'सर्वबोद्धप्रत्ययप्रकाशकः' इत्येवार्थोऽभिधीयते । ईश्वरता खलु त्रैगुण्यन्येव ।

णावस्थायामङ्कुरवदुपपत्त्यङ्गीकारात् । तथा चाकाशवदेव नित्यानित्योभयरूपा बुद्धिः । [1]यथाकारणं स्वाकारः प्रकृतिप्रभावादिति (?) ॥ १५ ॥

महत्तत्त्वं लक्षयित्वा तत्कार्यमहङ्कारं लक्षयति—

अभिमानोऽहङ्कारः[2] ॥ १६ ॥

अहङ्करोतीत्यहङ्कारः कुम्भकारवत् अन्तःकरणद्रव्यम् । स च धर्मधर्म्यभेदादभिमान इत्युक्तोऽसाधारवृत्तितासूचनाय । बुद्धया निश्चित एवार्थेऽहङ्कार-मम-कारौ जायेते । अतो वृत्त्योः कार्यकारणभावानुसारेण वृत्तिमतोरपि कार्यकारणभाव उन्नीयत इति प्रागेवोक्तम् ।

अन्तःकरणमेकमेव बीजाङ्कुरमहावृक्षादिवदवस्थात्रयमात्रभेदात् कार्यकारणभावमापद्यत इति च प्रागेवोक्तम् । अत एव वायुमात्स्ययो 'मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः' इति[3] मनोबुद्ध्योरेकपर्यायत्वमुक्तमिति ॥ १६ ॥

क्रमागतमहङ्कारस्य कार्यमाह—

[4]एकादश पञ्चतन्मात्रं तत्कार्यम् ॥ १७ ॥

एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्यमित्यर्थः । मयाऽनेनेन्द्रियेणेदं रूपादिकं भोक्तव्यमिदमेव सुखसाधनमित्याद्यभिमानादेवादिसर्गेष्विन्द्रियतद्विषयोत्पत्त्याऽहङ्कार इन्द्रियादिहेतुः । लोके भोगाभिमानिनैव रागद्वारा भोगोपकरणकरणदर्शनात् । 'रूपरागादभूच्चक्षु'रित्यादिना ( शान्ति० २१३।१६ ) मोक्षधर्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुराद्युत्पत्तिस्मरणाच्चेति भावः । अतश्च भूतेन्द्रिययोर्मध्ये रागधर्मकं मन एवादावहङ्कारादुत्पद्यत इति विशेषस्तन्मात्रादीनां रागकार्यत्वादिति ॥ १७ ॥

तत्रापि विशेषमाह—

---

१. द्र० नागेशीया वृत्तिः ।

२. अभिमानलक्षणोऽहंकार इति देवल आह ।

३. वायु० ४।२५; मात्स्ये तु न दृश्यते । वचनमिदं स्मृतिवचनरूपेणोद्धृतं शारीरकभाष्ये ( १।४।१ ) ।

४. एकादशेति पृथक् पदमिति प्रतिभाति । एकादशेति-शब्देन एकादश इन्द्रियाणि लक्ष्यन्ते । यदि एकमिदं समस्तपदं तर्हि एकादशकेति पठनीयम्—'एकादश-इन्द्रिय-संबद्धो गणः' इत्यर्थः । एकादश इन्द्रियाणि पञ्च तन्मात्राणि च अहंकारस्य कार्याणि । अहंकारोऽयम् 'अस्मिता' इति, 'षष्ठाविशेषः' इति च कथ्यते ।

सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात्[1] ॥ १८ ॥

एकादशानां पूरणमेकादशकं मनः षोडशात्मगणमध्ये सात्त्विकम् । अतस्तद् वैकृतात् सात्त्विकाहङ्काराज्जायत इत्यर्थः । अतश्च राजसाहङ्काराद् दशेन्द्रियाणि तामसाहङ्काराच्च तन्मात्राणीत्यवगन्तव्यम्[2] ।

वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ।
अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् ॥
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ।
तैजसानीन्द्रियाण्येव[3] ज्ञानकर्ममयानि च ॥
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः । (भाग० ३।५।३०-३१)

इत्यादिस्मृतिभ्य एव निर्णयात् । अतएव पुराणाद्यनुसारेण कारिकायामप्येतदुक्तम्—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तान्मात्रः[4] स तामसस्तैजसादुभयम् ॥ (२५) इति ।

तैजसो राजसः । उभयं ज्ञानकर्मेन्द्रिये ।

---

१. भिक्षुमते एकादशकमिति पदेन मनो लक्ष्यते । वृत्तिमते एकादशेन्द्रियाणि एकादशकपदेन लक्ष्यन्ते । अस्मन्मते सूत्रमिदं कारिकावदेव पठनीयं व्याख्येयं च । कारिकायामेकादशक इति शब्दः एकादशेन्द्रियाणि लक्षयति इति व्याख्यातारः । भिक्षुरिमां कारिकां स्वदृष्ट्या व्याचष्टे । एतन्मते २।१८ सूत्रं कारिका च समार्थिके इति ।

२. इन्द्रियोत्पत्तिविषये द्वे मते स्तः । वैकृतादहंकाराद् एकादशेन्द्रियाणि, भूतादेरहंकारात् तन्मात्राणि, राजसाहंकारः खलु उभयोः सहायकः । इदं कारिकानुसारि मतम् ( २५ का० द्र० ) ।

सुश्रुतोऽपि इदमेव मतं व्याचष्टे (शारीरस्थान १।४) । मतान्तरं तु—सात्त्विकादहंकारान् मनो-ज्ञानेन्द्रियाणि जायन्ते, राजसात् कर्मेन्द्रियाणि, तामसाच्च तन्मात्राणीति । शैवागमे इदमेवं मतं स्वीकृतम् । मतमिदं पञ्चदश्यामन्यत्र च प्रतिपादितम् । कौर्मे उक्तम्—'वैकारिकस्तैजसश्च भूतादिश्चैव तामसः । त्रिविधोऽयमहङ्कारो महतः संबभूव ह । तैजसादिन्द्रियाणि स्युर्देवा वैकारिका दश । एकादशं मनश्चात्र स्वगुणेनोभयात्मकम् । भूततन्मात्रसर्गस्तु भूतादेरभवद् द्विजाः । ( १।४।१८, २२-२३ ) । सत्त्वगुणस्य मुख्यमुपादानत्वं रजस्तमसोश्च उपष्टम्भकत्वमिति जीवन्मुक्तिविवेकः (परि० २) ।

३. तैजसादिन्द्रियाण्येवेति क्वचिद् भाष्ये पठ्यते ।

४. तन्मात्र इत्यपपाठः । तन्मात्रसम्बन्धी गणस्तान्मात्रः ।

ननु देवतालयश्रुतिरित्यागामिसूत्रे (२।२१) करणानां देवान् वक्ष्यति तत् कथं कारिकयापि देवानां सात्त्विकाहङ्कारकार्यत्वं नोक्तमिति ? उच्यते—समष्टि-चक्षुरादिशरीरिणः सूर्यादिचेतना एव चक्षुरादिदेवताः श्रूयन्ते। अतश्च व्यष्टिकरणानां समष्टिकरणानि देवतेत्येव पर्यवस्यति। तथा च व्यष्टिसमष्ट्योरेकताशयेनात्र शास्त्रे देवाः करणेभ्यो न पृथङ्निर्दिश्यन्ते। अतः समष्टीन्द्रियाणि मनोऽपेक्षयाऽल्पसत्त्वत्वेन राजसाहङ्कारकार्यत्वेनैव निर्दिष्टानि। स्मृतिषु च व्यष्टीन्द्रियापेक्षयाऽधिकसत्त्वत्वेन सात्त्विकाहङ्कारकार्यतयोक्तानीत्यविरोध इत्यवगन्तव्यम्।

तदेवमहङ्कारस्य त्रैविध्यान्महतोऽपि तत्कारणस्य त्रैविध्यं मन्तव्यम्—'सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्' (विष्णु० १।२।३४; मार्क० ४५।३८) इति स्मरणात्। त्रैविध्यं चानयोर्व्यक्तिभेदादंशभेदाद्वेत्यन्यदेतत्[1] ॥१८॥

एकादशेन्द्रियाणि दर्शयति—

कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम्[2] ॥ १९ ॥

कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि च चक्षुःश्रोत्र-त्वग्रसनघ्राणाख्यानि पञ्च। एतैर्दशभिः सहान्तरं मन एकादशकमेकादशेन्द्रिय-मित्यर्थः। इन्द्रस्य संघातेश्वरस्य करणमिन्द्रियम्। तथा चाहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वमिति ॥ १९ ॥

इन्द्रियाणां भौतिकत्वमतं[3] निराकरोति—

---

१. लक्ष्मीसंहितायामुक्तं यद् बुद्धि-प्राण-कालरूपेण त्रिविधो महानिति (१६।२-४)। अहिर्बुध्न्यसंहितायामपि पठ्यते—महान् नाम महत्तत्त्वम् अव्यक्तादुदितं मुने।...कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते (७।७-६)।

२. आन्तरम् (अन्तर्+अण्)। मनसः अन्तःकरणमिति नाम किमर्थं प्रदत्तम्-इत्यत्र पञ्चदशी (२।१२) द्रष्टव्या।

३. भौतिकानि इन्द्रियाणि इति न्यायादीनां मतम्—भौतिकानि इन्द्रियाणि नियतविषयाणि (न्यायभा० १।१।४)। इन्द्रियं नाव्यक्तिकम् आहङ्कारिकं वा, प्रत्युत भौतिकम् इति मतं विस्तरेण प्रतिपादितमन्यत्र (द्र० न्यायसू० ३।१।३२-५१)। द्र० 'विषयसजातीयं कारणं मन्यते श्रुतिः न तु जात्यन्तरम्। विषयस्यैव स्वात्मग्राहकत्वेन संस्थानान्तरं करणं नाम, यथा रूपविशेषस्यैव संस्थानं प्रदीपः करणं सर्वरूपप्रकाशने (बृहदा० २।४।११ शां० भा०)। 'यदि तावद् भौतिकानि करणानि...' (शारीरक २।३।११)।

आहङ्कारिकत्वश्रुतेर्न भौतिकानि[1] ॥ २० ॥

इन्द्रियाणीति शेषः । आहङ्कारिकत्वे च प्रमाणभूता श्रुतिः काललुप्ताप्याचार्यवाक्यान्मन्वाद्यखिलस्मृतिभ्यश्चानुमीयते । प्रत्यक्षा श्रुति'रहं बहु स्यामि'त्यादिः[2] । नन्'वन्नमयं हि सोम्य मनः' (छान्दोग्य ६।५।४) इत्यादिभौतिकत्वेऽपि श्रुतिरस्तीति चेन्न; प्रकाशकत्वसाम्येनान्तःकरणोपादानत्वस्यैवोचिततयाहङ्कारिकत्वश्रुतेरेव मुख्यत्वात् । भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतयाऽन्नस्य मनोजन्यत्वाच्च । व्यष्टिमन आदीनां भूतसंसृष्टतयैव तिष्ठतां भूतेभ्योऽभिव्यक्तिमात्रेण तु भौतिकश्रुति गौणीति ॥ २० ॥

ननु तथाप्याहङ्कारिकत्वनिर्णयो न घटते'ऽस्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि'त्यादि श्रुतौ (बृहदा० ३।२।१३) देवतास्विन्द्रियाणां लयकथनेन देवतोपादानकत्वस्याप्यवगमात्; कारण एव हि कार्यस्य लय इत्याशङ्क्याह—

देवतालयश्रुतिर्नारम्भकस्य ॥ २१ ॥

देवतासु या लयश्रुतिः सा नारम्भकस्य नारम्भकविषयिणीत्यर्थः । अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात् । अनारम्भकेष्वपि भूतेष्वात्मनो लयश्रवणाच्च । 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यती'त्यादि ( बृहदा० २।४।१२ ) श्रुताविति भावः ॥ २१ ॥

इन्द्रियान्तर्गतं मनो नित्यमिति [3]केचित् तत् परिहरति—

---

१. 'द्र० एवं हि सांख्यवृद्धा आहुः—आहङ्कारिकाणि इन्द्रियाणि अर्थं साधयितुमर्हन्ति नान्यथा ''' ( युक्तिदी० २८ का० ); । 'एकादश च यान्याहुरिन्द्रियाणि विशेषतः । अहंकारात् प्रसूतानि तानि वदयाम्यहं द्विजाः ॥' (अश्वमेध ४२।१२ ); 'तस्मादिन्द्रियसंघातो भौतिको नोपपद्यते' ( मालिनीवार्त्तिक १।५२२ ); वस्तुतस्तु सांख्यदृशा इन्द्रियस्वरूपं यत् तद आयुर्वेदादिदृशा नाभ्युपगम्यते । विभिन्नै र्वादिभिरिन्द्रियत्वेन यः पदार्थोऽभ्युपगम्यते स न समानः, प्रत्युत भिन्न एव, अतो भौतिकत्वाहंकारिकत्वदृष्टी संगते एव;— 'तानि अहंकारादुत्पन्नानि आहंकारिकाणीति सांख्ये वैद्यके तु भौतिकानि' (सुश्रुत, शारीर १।४ डल्हणटीका) इति वाक्यत इदमेव सिद्धं भवति ।

२. तु० छान्दोग्य० ६।२।३; तै० उप० २।६ ।

३. मनसो नित्यत्वमुक्तं वात्स्यायनेन —'न चाकाशकालदिगात्ममनसां तद्गुणानां च केषांचिद् उत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते' (४।१।२८ भाष्य) । यया युक्त्या मनसोऽणुत्वं साध्यते नैयायिकैः, तयैव मनसो निरवयवत्वं, ततश्च नित्यत्वमपि सिध्यति । वैशेषिकोऽपि मनसो नित्यतामभ्युपगच्छति (वै० सू० ३।२।२) । तन्मते श्रुतिषु यत्र मनस उत्पत्ति रुच्यते तत्र उत्पत्तिपदेन शरीरेण सह मनस आदिमः संयोग एव प्रतिपाद्यते, न तु वास्तवी उत्पत्तिः ।

तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च ॥ २२ ॥

तेषां सर्वेषामेवेन्द्रियाणामुत्पत्तिरस्ति—एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च—इत्यादिश्रुतेः (मुण्डक २।१।३)। वृद्धाद्यवस्थासु चक्षुरादीनामिव मनसोऽप्य-पचयादिना विनाशनिर्णयाच्चैत्यर्थः। तथा चोक्तम्—'दशकेन निवर्तन्ते मनः सर्वे-न्द्रियाणि च' इति। मनसो नित्यत्ववचनानि[1] च प्रकृत्याख्यबीजपराणीति ॥२२॥

गोलकजातमेवेन्द्रियमिति नास्तिकमतमपाकरोति—

अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठानम्[2] ॥ २३ ॥

इन्द्रियं सर्वमतीन्द्रियं न तु प्रत्यक्षं भ्रान्तानामेव स्वविष्ठाने गोलके तादा-त्म्येनेन्द्रियमित्यर्थः। अधिष्ठानमित्येव पाठः[3] ॥ २३ ॥

एकमेवेन्द्रियं[4] शक्तिभेदाद्विलक्षणकार्यकारीति मतमपाकरोति—

शक्तिभेदेपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥

एकस्यैवेन्द्रियस्य शक्तिभेदस्वीकारेऽपीन्द्रियभेदः सिद्ध्यति शक्तीनामपीन्द्रियत्वात्। अतो नैकत्वमिन्द्रियस्येत्यर्थः[5] ॥ २४ ॥

नन्वेकस्मादहङ्कारान्नानाविधेन्द्रियोत्पत्तिकल्पनायां न्यायविरोधस्तत्राह—

न कल्पनाविरोधः प्रमाणदृष्टस्य[6] ॥ २५ ॥

सुगमम् ॥ २५ ॥

एकस्यैव मुख्येन्द्रियस्य मनसोऽन्ये दश शक्तिभेदाः, इत्याह—

उभयात्मकं मनः ॥ २६ ॥

ज्ञानकर्मेन्द्रियात्मकं मन इत्यर्थः ॥ २६ ॥

उभयात्मकमित्यस्यार्थं स्वयं विवृणोति—

---

१. नित्यं मनोऽनादित्वात् (गोपवनश्रुति)।

२. इन्द्रियाधिष्ठानविषये द्र० चरक० सूत्र ८।१०।

३. अधिष्ठाने इति वृत्तौ पठ्यते।

४. इन्द्रियमेकं बहु वा—इत्यस्य विचारः न्यायसूत्रे द्रष्टव्यः (३।१।५२-६१)। 'तस्मात् नैकमिन्द्रियं सर्वविषयमस्तीति' (न्यायभा० ३।१।५४)। न्यायसू० ३।१।५३ विशेषतो द्र०।

५. अस्ति प्राचीनं मतं त्वङ्मात्रमेवेन्द्रियमिति—'त्वङ्मात्रमवेहि बुद्धीन्द्रियमनेक-रूपादिग्रहणसमर्थमेकम्' इति (भामती २।२।१०)।

६. इन्द्रियस्यैकत्वे बहुत्वकल्पना व्यर्थेति प्रश्नस्य उत्तरमत्र सूत्रे प्रदत्तमिति वृत्तिव्याख्यानतः प्रतीयते। इन्द्रियबहुत्वं यतः प्रमाणसंगतमतः कल्पना-बलेन इन्द्रियाणामैक्यं न स्वीकरणीय मित्यर्थो वृत्तिमते। भिक्षुदर्शितं-व्याख्यानमस्वारसिकम्।

गुणपरिणामभेदान्नानात्वमवस्थावत्[1] ॥ २७ ॥

यथैक एव नरः सङ्गवशान्नानात्वं भजते कामिनीसंगात् कामुको विरक्तसंगाद्विरक्तोऽन्यसंगाच्चान्य एवं मनोऽपि चक्षुरादिसंगाच्चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नाना भवति । तत्र हेतुर्गुणेत्यादि—गुणानां सत्त्वादीनां परिणामभेदेषु सामर्थ्यादित्यर्थः । एतच्चा'न्यत्रमना अभूवं नाश्रौषम् ( बृहदा० १।५।३ ) इत्यादि श्रुतिसिद्धाच्चक्षुरदीनां मनःसंयोगं विना व्यापाराक्षमत्वादनुमीयते ॥२७॥

ज्ञानकर्मेन्द्रिययोर्विषयमाह—

रूपादिरसमलान्त[2] उभयोः[3] ॥२८॥

अन्नरसानां मलः पुरीषादिः । तया रूपरसगन्धस्पर्शशब्दा वक्तव्यादातव्यगन्तव्यानन्दयितव्योत्सृष्टव्याश्चोभयोर्ज्ञानकर्मेन्द्रिययोर्दश विषया इत्यर्थः । आनन्दयितव्यं चोपस्थस्योपस्थान्तरम्, उपस्थस्य हि उपस्थान्तरं विषय[4] इति ॥२८॥

यस्येन्द्रियस्य येनोपकारेणैतानीन्द्रियाणीत्युच्यते तदुभयमाह—

द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥२९॥

---

१. अनेकम् इन्द्रियम् एकस्मादहंकारात् कथं जायते—इत्यस्य उपपत्तिरत्र दर्शिता इति वृत्तिमतम् । मतमिदं २७ सांख्यकारिका-तत्त्वकौमुदी-व्याख्यानमनुसरतीति निश्चप्रचम् । समीचीनमिदं प्रतीयते । मनसः उभयात्मत्वसिद्धये युक्तिः २।२७ सूत्रे प्रदत्तेति भिक्षुमतं न संगतं प्रतीयते ।

२. ज्ञानेन्द्रियविषयाणां नामग्रहणे कथं रूपमेवादौ उक्त मिति प्रश्न उदेति । रूपस्यैवादौ उल्लेखो देवलेन कृतो ज्ञानेन्द्रियविषयनामग्रहणकाले—इति दृश्यते । मन्ये एवंविधं किमपि वचनं सूत्रस्यास्य मूलभूतमिति ।

३. मलान्तेति वक्तव्ये रसमलान्त इति किमर्थं प्रयुज्यते ? 'अन्नरसानां मलः पुरीषादिः' इत्यर्थ इति भिक्षुः । रसमलो नाम मल इति वृत्तिकारः । यो मलः पायुना निःसार्यते स एव रसमल इत्युच्यते । सन्ति अन्यजातीयानि मलानीति एतेन वाक्येन ध्वन्यते ।

४. उपस्थकार्यविषये शास्त्रीयो निर्देशोऽस्पष्टार्थक इति स विशदी क्रियते । उपस्थस्य विषय आनन्द इति कथनमसमीचीनम्; आनन्दो न कार्यरूपः, बोधविशेषः सः, अतः कर्मेन्द्रियस्य विषयः स न भवितुमर्हति । अत्युपस्थक्रियया पीडाबोधोऽपि जायते, अतो नानन्द उपस्थस्य विषयः । प्रसव-बीजसेकौ उपस्थविषयौ, प्रजननं वोपस्थकार्यमिति । बहुलसाहचर्यादानन्दो विषयत्वेनोक्तः । अतएव 'प्रजननानन्दयोः शेफः' (शान्ति० २१९।२१) इत्यादीनि वचांसि शास्त्रेपूक्तानि । क्वचिद् विसर्ग उपस्थकार्यमित्युच्यते । प्रजननहेतुभूतो विसर्ग एवात्राभिप्रेतः; मलमूत्रयोरुत्सर्गः पायुविषय इति ।

स्वरूपेऽवस्थानम्, वृत्तिसारूप्यमितरत्रेति (१।२-४)। इदमेव च पुरुषस्य स्वस्थत्वं यदुपाधिवृत्तेः प्रतिबिम्बस्य निवृत्तिरिति। एतादृशी चावस्था पुरुषस्य वासिष्ठे दृष्टान्तेन प्रदर्शिता। यथा—

अनाप्ताखिलशैलादिप्रतिबिम्बे हि यादृशी।
स्याद्दर्पणे दर्पणता केवलात्मस्वरूपिणी॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे।
स्यात् तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे॥ इति॥३४॥

(योगवासिष्ठ ३।४।५७-५८)

एतदेव दृष्टान्तेन विवृणोति—

कुसुमवच्च मणिः॥३५॥

चकारो हेतौ कुसुमेनेव मणिरित्यर्थः। यथा जपाकुसुमेन स्फटिकमणी रक्तोऽस्वस्थो भवति तन्निवृत्तौ च रागशून्यः स्वस्थो भवति तद्वदिति। तदेतदुक्तं कौर्मे[1] (२।२।२८ ख–२९क)—

यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः॥ इति॥३५॥

ननु कस्य प्रयत्नेन करणजातं प्रवर्त्ततां पुरुषस्य कूटस्थत्वादीश्वरस्य च प्रतिषिद्धत्वादिति; तत्राह—

पुरुषार्थं[2] करणोद्भवोऽप्यदृष्टोल्लासात्॥३६॥

प्रधानप्रवृत्तिवत् पुरुषार्थं करणोद्भवः करणानां प्रवृत्तिरपि पुरुषस्यादृष्टाभिव्यक्तेरेव भवतीत्यर्थः। अदृष्टं चोपाधेरेव॥३६॥

परार्थं स्वतः प्रवृत्तौ दृष्टान्तमाह—

धेनुवद् वत्साय[3]॥३७॥

---

१. मुद्रितपुराणपाठः केषुचित् संस्करणेषु ईषद्भ्रष्ट एव। स्फटिकोपमा १।५१ भाष्येऽपि अस्मिन्नेवार्थे प्रयुक्ता।

२. द्र० 'अन्तःकरणद्वारेण हृद्यन्तर्ज्योतिः पुरुषः आत्मानुग्राहकः करणानामित्युक्तम्' (बृहदा० ४।३।७ शां० भा०)।

३. सामान्यधर्मे तुल्येऽपि सहकारिविशेषबलेन विचित्रकार्यस्योत्पत्तिर्भवति इत्यत्र-दृष्टान्तो दीयतेऽस्मिन् सूत्रे इति वृत्तिमतम्। पुरुषार्थं स्वतः प्रवृत्तौ दृष्टान्तो दीयते अत्र-इति भाष्यमतम्। भाष्यमतमेव साधुतरमिति विज्ञायते। द्र० वत्सविवृद्धिनिमित्तं क्षीरस्य (कारिका ५७); द्र० सर्व एवाचेतन एष वर्गः पुरुषः पञ्चविंशतितमः। स च कार्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्ति मुपदिशन्ति, क्षीरादींश्च हेतूनुदाहरन्ति (सुश्रुत, शारीर० १)। अनया उपमया प्रधानस्य इच्छापूर्विका प्रवृत्तिर्निरस्ता। चिदधिष्ठितं प्रधानमेव प्रवर्तते—इति सांख्यीया दृष्टिः।

यथा वत्सार्थं धेनुः स्वयमेव क्षीरं स्रवति नान्यं यत्नमपेक्षते तथैव स्वामिनः पुरुषस्य कृते स्वयमेव करणानि प्रवर्त्तन्त इत्यर्थः। दृश्यते च सुषुप्तात् स्वयमेव बुद्धेरुत्थानमिति। एतदेव कारिकयाऽप्युक्तम्—

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्॥ (३१) इति॥३७॥

बाह्याभ्यन्तरैर्मिलित्वा कियन्ति करणानीत्याकाङ्क्षायामाह—

करणं त्रयोदशविधमवान्तरभेदात्[1] ॥३८॥

अन्तःकरणत्रयं दश बाह्यकरणानि मिलित्वा त्रयोदश; तेष्वपि व्यक्तिभेदेनानन्त्यं प्रतिपादयितुं विधमित्युक्तम्। बुद्धिरेव मुख्यं करणमित्याशयेनोक्तमवान्तरभेदादिति। एकस्यैव बुद्ध्याख्यकरणस्य करणानामनेकत्वादि[2]त्यर्थः॥३८॥

ननु बुद्धिरेव पुरुषेऽर्थसमर्पकत्वान् मुख्यं करणमन्येषां च करणत्वं गौणम्;तत्र को गुण इत्याकाङ्क्षायामाह—

इन्द्रियेषु साधकतमत्वगुणयोगात् कुठारवत्॥३९॥

इन्द्रियेषु पुरुषार्थसाधकतमत्वरूपः करणस्य बुद्धेर्गुणः परम्परयास्ति, अतस्त्रयोदशविधं करणमुपपद्यते—इति पूर्वसूत्रेणान्वयः। कुठारवदिति यथा फलायोगव्यवच्छिन्नतया प्रहारस्यैव छिदायां मुख्यकरणत्वेऽपि प्रकृष्टसाधनत्वगुणयोगात् कुठारस्यापि करणत्वं तथेत्यर्थः। अन्तःकरणस्यैकत्वमभिप्रेत्याहङ्कारस्य गौणकरणत्वमत्र नोक्तम्॥३९॥

गौणमुख्यभावे व्यवस्थां विशिष्याह—

द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु[3] ॥४०॥

---

१. त्रयोदश करणानीति देवल आह। अस्य विशदीकरणमपि तेनैव कृतम्—दशेन्द्रियाणि बुद्ध्यहंकारमनांसि च करणानि। तेषु मनो बुद्ध्यहंकाराश्च अन्तःकरणानि, दश बहिष्करणानीन्द्रियाणि (द्र० याज्ञ० प्रायश्चित्त० १०९ श्लोकगतापरार्कटीका)।

२. द्वादशविधं करणमिति शंकराचार्येणोक्तम् (द्र० बृहदा ४।४।२ भाष्य); अत्र बुद्धिः, मनः, दश बाह्येन्द्रियाणि च परिगण्यन्ते (द्र० गिरिटीका)।

३, द्वयोः=बुद्धीन्द्रियकर्मेन्द्रिययोरिति वृत्तिकारः। बाह्येन्द्रियाधोशं मनः संस्कारधारकमिति (द्र० २।४२) न प्रसिद्धिः, अतोऽस्यां व्याख्यायां संशयो भवति। यदि मनस ईदृशं स्वरूपमपि अभ्युपगम्यते तर्हि वृत्तिव्याख्यानमेव साधु। २।४२ सूत्रमपि एतत्-संबद्धं नवेत्यत्रापि संशयो जागर्ति। यदि २।४१-२।४३ सूत्रयोः 'तथा' इति शब्दो न प्रयुक्तः किमर्थं तर्हि २।४२ सूत्रे हेतुप्रदर्शनपरे स शब्दः प्रयुक्त इति प्रश्नो दुरुत्तार्य एव।

द्वयोर्बाह्यान्तरयोर्मध्ये मनो बुद्धिरेव प्रधानं मुख्यम्, साक्षात्करणमिति यावत् पुरुषेऽर्थसमर्पकत्वात् । यथा भृत्यवर्गेषु मध्ये कश्चिदेव लोको राज्ञः प्रधानो भवत्यन्ये च तदुपसर्जनीभूता ग्रामाध्यक्षादयस्तद्वदित्यर्थः ।

अत्र मनःशब्दो तृतीयान्तःकरणवाची । वक्ष्यमाणस्याखिलसंस्काराधारत्वस्य बुद्ध्यतिरिक्तेष्वसम्भवात्, सम्भवे वा बुद्धिकल्पनवैयर्थ्यादिति ॥४०॥

बुद्धेः प्रधानत्वे हेतूनाह त्रिभिः सूत्रैः—

अव्यभिचारात्[1] ॥४१॥

सर्वकरणव्यापकत्वात् फलाव्यभिचाराद्वेत्यर्थः ॥४१॥

तथाऽशेषसंस्काराधारत्वात् ॥४२॥

बुद्धेरेवाखिलसंस्काराधारता न तु चक्षुरादेरहङ्कारमनसोर्वा पूर्वदृष्टश्रुताद्यर्थानामन्धवधिरादिभिः स्मरणानुपपत्तेः;तत्त्वज्ञानेनाहङ्कामनसोर्लयेऽपि[2]स्मरणदर्शनाच्च । अतोऽशेषसंस्काराधारतयापि बुद्धेरेव सर्वेभ्य प्रधानत्वमित्यर्थः ॥४२॥

स्मृत्याऽनुमानाच्च[3] ॥४३॥

स्मृत्या चिन्तनरूपया वृत्त्या प्राधान्यानुमानाच्चेत्यर्थः । चिन्तावृत्तिर्हि ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा, तदाश्रयतया च चिन्तापरनाम्नी बुद्धिरेव श्रेष्ठाऽन्यवृत्तिकरणेभ्य इत्यर्थः ॥४३॥

ननु चिन्तावृत्तिः पुरुषस्यैवास्तु तत्राह—

सम्भवेन्न स्वतः[4] ॥४४॥

स्वतः पुरुषस्य स्मृतिर्न सम्भवेत् कूटस्थत्वादित्यर्थः । इत्थं वा व्याख्येयम्—नन्वेवं बुद्धिरेव करणमस्तु कृतमवान्तरकरणैरित्याशङ्कायामाह—'सम्भवेन्न स्वतः' इति । चक्षुरादिद्वारतां विनाखिलव्यापारेषु बुद्धेः स्वतः करणत्वं न सम्भवेदन्धादेरपि रूपादिदर्शनापत्तेरित्यर्थः ॥४४॥

---

१. द्र० अस्ति मनो नामान्तःकरणं सर्वकरणविषययोगीत्यवगम्यते ( बृहदा० १।५।३ शां० भा० ) ।

२. अहंकारमनसोर्लयेऽपि बुद्धिर्व्यक्तरूपेण तिष्ठति, अतः बुद्धिस्थितसंस्कारतः स्मृतिर्भवितुमर्हति—इति भिक्षोर्दृष्टिः ।

३. तुल० मनोऽस्तित्वं प्रति अन्यच्च कारणमुच्यते । यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽप्युपस्पृष्टः केनचिद् हस्तस्यायं स्पर्शो जानोरयमिति विवेकेन प्रतिपद्यते । यदि विवेककृन् मनो नाम नास्ति तर्हि त्वङ्मात्रेण कुतो विवेक-प्रतिपत्तिःस्यात्, यत्तद्-विवेक-प्रतिपत्तिकारणं तन्मनः । ( बृहदा० १।५।३ शां० भा० ) ।

४. पुरुषस्य स्मृतिर्न सम्भवेत् इति भिक्षुः, संस्कारो न संभवेदिति वृत्तिकारः । मतमिदं समीचीनमेव पुरुषस्य निर्गुणत्वात् । वृत्ति-भाष्य-दर्शितः सूत्रार्थस्तु न सूत्राक्षरतो न वा प्रकरणतो स्पष्टं प्रतीयते ।

नन्वेवं बुद्धेरेव प्राधान्ये कथं मनस उभयात्मकत्वं प्रागुक्तम्; तत्राह—

आपेक्षिको गुणप्रधानभावः क्रियाविशेषात्[1] ॥४५॥

क्रियाविशेषं प्रति करणानामापेक्षिको गुणप्रधानभावः, चक्षुरादिव्यापारेषु मनः प्रधानम्, मनोव्यापारे चाहङ्कारोऽहङ्कारव्यापारे च बुद्धिः प्रधानम् ॥४५॥

नन्वस्य पुरुषस्येयं बुद्धिरेव करणं न बुद्ध्यन्तरमित्येवं व्यवस्था किन्निमित्तिकेत्याकाङ्क्षायामाह—

तत्कर्मार्जितत्वात् तदर्थमभिचेष्टा लोकवत् ॥४६॥

तत्पुरुषीयकर्मजत्वात् करणस्य तत्पुरुषार्थमभिचेष्टा सर्वव्यापारो भवति लोकवत्। यथा लोके येन पुरुषेण क्रयादिकर्मणार्ऽजितो यः कुठारादिस्तत्पुरुषार्थमेव तस्य च्छिदादिव्यापार इत्यर्थः ; अतः करणव्यवस्थेति भावः।

यद्यपि कूटस्थतया पुरुषे कर्म नास्ति तथापि भोगसाधनतया पुरुषस्वामिकत्वेन राज्ञो जयादिवदेव[2] पुरुषस्य कर्मोच्यते। ननु कर्मण एव तत्पुरुषीयत्वे किं नियामकमिति चेत्, तथाविधं कर्मान्तरमेव। अनादित्वात् तु नानवस्था दोषायेति।

यत् तु कश्चिदविवेकी[3] वदति—बुद्धिप्रतिबिम्बितपुरुषस्क कर्मेति; तन्न, योगभाष्येऽस्मदुक्तप्रकारस्यैवोक्तत्वेनान्यप्रकारस्याप्रामाणितकत्वात्[4] प्रतिबिम्बस्यावस्तुत्वेन कर्माद्यसम्भवाच्च। अन्यथा प्रतिबिम्बस्य कर्मतद्भोगाद्यङ्गीकारे बिम्बत्वाभिमतपुरुषकल्पनावैय्यर्थस्य पूर्वं प्रतिपादितत्वादिति ॥४६॥

बुद्धेः प्राधान्यं प्रकटीकर्तुमुपसंहरति—

समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥४७॥

यद्यपि पुरुषार्थत्वेन समान एव सर्वेषां करणानां व्यापारस्तथापि बुद्धेरेव प्राधान्यं लोकवत्। लोके हि राजार्थकत्वाविशेषेऽपि ग्रामाध्यक्षादिषु मध्ये मन्त्रिण

---

१. क्रियाविशेषादिति हेतुप्रदर्शनपरं पदं न स्पष्टार्थकम्। अनिरुद्धेन नेदं पदं व्याख्यातम्। अदृष्टजनककर्मणां वैलक्षण्यमेव क्रियाविशेष इति केचित्। क्रियाविशेषात्=क्रियाविशेषं प्रति इति भाष्यम्। अस्यार्थस्य स्वारस्यं चिन्त्यम्।

२. 'ते [ क्लेशादयः ] मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति; यथा जयः पराजयो वा योद्धृषु वर्तमानः पुरुषे व्यपदिश्यते' इति व्यासभाष्यवाक्यम् (१।२४) अत्रालोच्यम्।

३. इदमनिरुद्धमतम्।

४. १।२४, २।२० इत्यादिस्थलगतं योगवार्त्तिकं द्रष्टव्यम्।

एव प्राधान्यं तद्वदित्यर्थः । अत एव बुद्धिरेव महानिति सर्वशास्त्रेषु[1] गीयत इति । वीप्साऽध्यायसमाप्तौ ।।४७।।

लिङ्गदेहस्य घटकं यत् सप्तदशसङ्ख्यकम् ।
प्रधानकार्यं तत् सूक्ष्ममत्राध्यायेऽनुवर्णितम् ।।

इति श्रीविज्ञानाचार्यनिर्मिते[2] कापिलसाङ्ख्यप्रवचनस्य भाष्ये प्रधानकार्याध्यायो द्वितीयः ।।



१. बुद्धि-महदादि-संज्ञाविषये 'बुद्धिरध्यवसायेन ज्ञानेन च महांस्तथा' (अश्व० ४३।३४) इति, 'महानिति यतः ख्यातिर्लोकानां जायते सदा' (मत्स्य० ३।१७) इति, 'संकल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम्' (वायु ४।४६) इत्येतादृशानि वचांसि विचार्याणि ।

२. विज्ञानभिक्षुनिर्मिते (पाठा०) ।

इति सांख्यसूत्रद्वितीयाध्यायगता ज्योतिष्मती टिप्पणी ।

# तृतीयोऽध्यायः

इतःपरं प्रधानस्य स्थूलकार्यं महाभूतानि शरीरद्वयं च वक्तव्यम्; ततश्च विविधयोनिगत्यादयो ज्ञानसाधनानुष्ठानहेत्वपरवैराग्यार्थम्, ततश्च परवैराग्याय ज्ञानसाधनान्यखिलानि वक्तव्यानीति तृतीयारम्भः।

अविशेषाद्विशेषारम्भः ॥१॥

नास्ति विशेषः शान्तघोरमूढत्वादिरूपो यत्रेत्यविशेषो भूतसूक्ष्मं पञ्चतन्मात्राख्यं तस्माच् छान्तादिरूपविशेषवत्त्वेन विशेषाणां स्थूलानां महाभूतानामारम्भ इत्यर्थः। सुखाद्यात्मकता हि शान्तादिरूपा स्थूलभूतेष्वेव तारतम्यादिभिरभिव्यज्यते न सूक्ष्मेषु, तेषां शान्तैकरूपतयैव[1] योगिष्वभिव्यक्तेरिति ॥१॥

तदेवं पूर्वाध्यायमारभ्य त्रयोविंशतितत्त्वानामुत्पत्तिमुक्त्वा तस्माच् छरीरद्वयोत्पत्तिमाह—

तस्माच्छरीरस्य ॥२॥

तस्मात् त्रयोविंशतितत्त्वात् स्थूलसूक्ष्मशरीरद्वयस्यारम्भ इत्यर्थः ॥३॥

सम्प्रति त्रयोविंशतितत्त्वे संसारान्यथानुपपत्तिं प्रमाणयति—

तद्बीजात् संसृतिः[2] ॥३॥

तस्य शरीरस्य बीजात् त्रयोविंशतितत्त्वरूपात् सूक्ष्माद् हेतोः पुरुषस्य संसृतिर्गतागते भवतः, कूटस्थस्य विभुतया स्वतो गत्याद्यसम्भवादित्यर्थः।

त्रयोविंशतितत्त्वेऽवस्थितो हि पुरुषस्तेनैवोपाधिना पूर्वकृतकर्मभोगार्थं देहाद् देहं संसरति—

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्।
वाचा वाचा कृतं कर्म कायेनैव तु कायिकम् ॥ (मनु १२।७)।

---

१. तन्मात्राणि शान्त-घोर-मूढत्व-धर्मशून्यानि; तानि न सुखदुःखमोहकराणि। उक्तं हि–'न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः' (विष्णु० १।२।२४); अतएव तन्मात्राणि शान्तानि (सुखकराणि) एवेति भिक्षुमतमसमीचीनम्।

२. 'तस्य भूतारम्भस्य कारणाद् धर्माधर्मात् संसरणं नाशः'—इत्यर्थो वृत्तिमते। संसृतिशब्दस्य नाशरूपोऽर्थः सांशयिकः। तद्बीजात्=शरीरबीजाद् इति साध्वेव। बीजमिदं शरीरधारणहेतुभूतः यः कश्चिदपि पदार्थो भवितु मर्हति। देहबीजरूपेण प्रसिद्धं वस्तु वा ग्राह्यम्।

इत्यादिस्मृतिभिः पूर्वसर्गीयकरणैरेवोत्सर्गतः सर्गान्तरेषूपभोगसिद्धेः। अतएव ब्रह्मसूत्रमुपसंहरति–सम्परिष्वक्तः (३।१।१) इति ॥३॥

संसृतेरवधिमप्याह—

आ विवेकाच्च प्रवर्त्तनमविशेषाणाम्[1] ॥४॥

ईश्वरानीश्वरत्वादिविशेषरहितानां सर्वेषामेव पुंसां विवेकपर्यन्तमेव प्रवर्त्तनं संसृतिरावश्यकी विवेकोत्तरं च न सेत्यर्थः ॥४॥

तत्र हेतुमाह—

उपभोगादितरस्य[2] ॥५॥

इतरस्याविवेकिन एव स्वीयकर्मफलभोगावश्यम्भावादित्यर्थः ॥५॥

देहसत्त्वेऽपि संसृतिकाले भोगो नास्तीत्याह—

सम्प्रति परिमुक्तो द्वाभ्याम्[3] ॥६॥

सम्प्रति संसृतिकाले पुरुषो द्वाभ्यां शीतोष्णसुखदुःखादिद्वन्द्वैः परिमुक्तो भवतीत्यर्थः। तदेतत् कारिकयोक्तम्–संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् (४०)। इति ॥६॥

अतः परं शरीरद्वयं विशिष्य वक्तुमुपक्रमते–

[4]मातापितृजं स्थूलं प्रायश इतरन्न तथा ॥७॥

---

१. अविशेषपदस्य भिक्षुदर्शितोऽर्थः सांशयिक एव। सांख्यशास्त्रे पञ्च तन्मात्राणि अस्मिता च अविशेषपदेन उच्यन्ते। एषां प्रवर्तनम् आविवेकात् इति कथनमपि एकदेशदर्शनमेव; अस्मितामात्रस्य बुद्धितत्त्वस्य प्रवर्तनमपि आ विवेकात् स्वीकार्यमेव; 'विवेकख्यातिपर्यन्तं विज्ञेयं चित्तचेष्टितम्' इति सांख्याचार्य-कथनात्। अविशेषाणां संबन्धः पुरुषं प्रति आ विवेकात् तिष्ठति-इत्यर्थो वृत्तिमते। नेदं कथन मसंगतम् (अविशेषे भूतस्यापि ग्रहणं करोति वृत्तिकारः; मतमिदमसाधु)।

२. इतरपदेन किं बोध्यमिति न स्पष्टं प्रतीयते। अविशेषेतर-शब्देन विशेष एव ग्राह्यः, अर्थोऽयं नात्र योजयितुं शक्यते।

३. पुरुषः परिमुक्तो भवति इति भिक्षुः। पुरुषरूपोऽर्थः कथमवगत इति न विज्ञायते। द्वाभ्यां=धर्माधर्माभ्याम् इति वृत्तिः। परिमुक्तस्थले परिष्वक्त इति पठ्यते वृत्तौ। परिष्वक्तः=आबद्धः। द्वाभ्यां सूक्ष्मस्थूलशरीराभ्यामित्यर्थः संगततरः स्याद् वृत्तिदृष्ट्या। द्वाभ्याम् इत्यस्य शीतोष्णादिद्वन्द्वरूपः अर्थो न न्याय्यः।

४. मातापितृशब्देनात्र लोहितरेतसी गृह्येते। 'बीजपूर्विका तु शरीरोत्पत्तिः। मातापितृशब्देन लोहितरेतसी गृह्येते' (न्यायभा० ३।२।६३)।

स्थूलं मातापितृजं प्रायशो बाहुल्येनायोनिजस्यापि[1] स्थूलशरीरस्य स्मरणादितरच्च सूक्ष्मशरीरं न तथा न मातापितृजं सर्गाद्युत्पन्नत्वादित्यर्थः। तदुक्तं कारिकया—

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्॥ (४०) इति।

नियतं नित्यं द्विपरार्धस्थायि गौणनित्यं प्रतिशरीरं लिङ्गोत्पत्तिकल्पने गौरवात्। प्रलये तु तन्नाशः श्रुतिस्मृतिप्रामाण्यादिष्यते[2]। गतिकाले भोगाभाववचनमुत्सर्गाभिप्रायेण। कदाचित् नु वायवीयशरीरप्रवेशतो गमनकालेऽपि भोगो भवति, अतो यममार्गे दुःखभोगवाक्यान्युपपद्यन्ते[3] ॥७॥

स्थूल-सूक्ष्मशरीरयोर्मध्ये किमुपाधिकः पुरुषस्य द्वन्द्वयोगस्तदवधारयति—

**पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ॥८॥**

पूर्वं सर्गादा वुत्पत्तिर्यस्य लिङ्गशरीरस्य तस्यैव तत्कार्यत्वं सुखदुःखकार्यकत्वम्; कुतः, एकस्य लिङ्गदेहस्यैव सुखदुःखाख्यभोगात्, न त्वितरस्य स्थूलशरीरस्य मृतशरीरे सुखदुःखाद्यभावस्य सर्वसम्मतत्वादित्यर्थः ॥८॥

उक्तस्य सूक्ष्मशरीरस्य स्वरूपमाह—

---

१. अयोनिजशरीरं प्रसिद्धमेव। 'अपि च स्मर्यते लोके द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां चायोनिजत्वम् इति' ( शारीरकभा० ३।१।१९ )।

२. प्रलये (=द्विपरार्धावसाने) लिङ्गस्य लयो भवति इति नास्माभिरभ्युपगम्यते। प्रलये विषयाभावात् लिङ्गं क्रियाशक्तिहीनं भूत्वा नष्टमिव तिष्ठति। न वासनाना मात्यन्तिको नाशो भवति प्रलये, ताः खलु निरुद्धरूपेण तिष्ठन्त्येव।

३. अग्निपुराणम् ३४३।१२-२१; ३६९।३-१६; ३७१।१२-२९ द्र०। गरुडपुराणीये प्रेतखण्डेऽपि अन्तराऽन्तरा यममार्गविवरणमुपलभ्यते।

४. तत्कार्यत्वम् =सुखदुःखकार्यकत्वमिति भिक्षुः। वृत्तिकारस्यापि इदमेव संमतं प्रतीयते। अर्थोऽयं सांशयिक एव।

[1]सप्तदशैकं लिङ्गम्[2] ॥९॥

सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति । तत्र सप्तदश मिलित्वा लिङ्गशरीरम्, तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः । एकादशेन्द्रियाणि

---

१. लिङ्गशरीरमेकं सर्गादौ उत्पन्नम्, पश्चात् कर्मविशेषात् तद् बहुधा भिद्यते- इत्यर्थो भिक्षुमते । लिङ्गस्य अवयवा अष्टादश इति वृत्तिः । सूत्रमिदमद्वैत- ब्रह्मसिद्धौ उद्धृतम् ( पृ० २६३ ) । २।१९ योगवार्त्तिके लिङ्गशरीर- व्याख्या द्रष्टव्या ।

२. लिङ्गविषये अस्माकं मतमिदम्—बुद्धितत्त्वमेव मुख्यं लिङ्गम् । ब्रह्माण्डे अभिव्यक्ते सति विषयसम्पर्काद् बुद्धितोऽहंकारः, ततश्च मनश्च इन्द्रियाणि च प्रादुर्भवन्ति ( इमानि तत्त्वानि प्राग्लीनान्यासन् बुद्धौ ) । इमानि त्रयोदश करणानि तन्मात्रसंपर्कमविहाय न स्थातु मुत्सहन्ते, अतः पञ्चभिः तन्मात्रैः सह त्रयोदश करणानि मिलितान्येव संसृतौ तिष्ठन्ति । संघातोऽयं लिङ्गं लिङ्गशरीरं वा उच्यते । विषयभूततन्मात्रैः सह योगादेव शरीरेति शब्दः प्रयुज्यते इत्येका दृष्टिः । अन्ये पुनः त्रयोदशभिः करणैः सह बाह्यकरणभूतान् पञ्च प्राणान् स्वीकृत्य अष्टादशावयवरूपं लिङ्गं प्रतिपादयन्ति । प्राणानां धार्यो विषयः शरीरमेव, अतः शरीरसम्पर्केण लिङ्गशरीरेति शब्दोऽपि प्रयुज्यते । व्यावहारिकस्य आत्मभावस्य परिणामः खलु त्रीणि आन्तरकर- णानि (ज्ञान-कर्मेन्द्रिये प्राणाश्च) पञ्चदशसंख्यकानि—इति अष्टादशावयवयुक्तं लिङ्गम् । संघातोऽयं तन्मात्ररूपविषयसम्पर्कं विना न स्थातुमुत्सहते—इत्यतः तन्मात्रसत्तायां स्वीकृतायां पञ्च प्राणाः परित्यज्यन्ते अष्टादशसंख्यारक्षणाय । करणविशेषस्य करणविशेषे अन्तर्भावे कृते, प्राणानां तन्मात्राणां च सत्तायां स्वीकृतायामस्वीकृतायां वा लिङ्गावयवगणने मतभेदा भवन्ति—इति ज्ञेयम् । लिङ्गमेव सूक्ष्मशरीर मिति मतं प्रसिद्धमेव । अस्मन्मते लिङ्गशरीरं सूक्ष्म- शरीरात् पृथक् । सूक्ष्मशरीरं खलु भूतनिर्मितमेव, न तत् तान्मात्रिकम् । सूक्ष्मरूपावस्थितैर्भूतैः सूक्ष्मशरीरं निर्मितम् इति ।

पञ्च तन्मात्राणि बुद्धिश्चेति सप्तदश[1]। अहङ्कारस्य बुद्धावेवान्तर्भावः। चतुर्थसूत्र (?) -वक्ष्यमाणप्रमाणादेतान्येव सप्तदश लिङ्गं मन्तव्यं न तु सप्तदशमेकं चेत्यष्टादशतया व्याख्येयम्। उत्तरसूत्रेण व्यक्तिभेदस्योपपाद्यतयाऽत्र लिङ्गैकत्व एकशब्दस्य तात्पर्यावधारणाच्च।

कर्मात्मा पुरुषो यौऽसौ बन्धमोक्षैः प्रयुज्यते[2]।
स सप्तदशकेनापि राशिना युज्यते च सः॥ (३५१।१५-१६)

इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वसिद्धेश्च सप्तदशावयवा अत्र सन्तीति सप्तदशको राशिरित्यर्थः। राशिशब्देन स्थूलदेहवल्लिङ्गदेहस्यावयवित्वं निराकृतम्, अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात्। स्थूलदेहस्य चावयवित्वमेकतादिप्रत्यक्षानुरोधेन कल्प्यत इति।

अत्र च लिङ्गदेहे बुद्धिरेव प्रधानेत्याशयेन लिङ्गदेहस्य भोगः प्रागुक्तः (३।८)। प्राणाश्चान्तःकरणस्यैव वृत्तिभेदः। अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भाव इत्यस्य सप्तदशावयवकस्य शरीरत्वं स्वयं वक्ष्यति—'लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः' (६।६९) इति सूत्रेण। अतो भोगायतनत्वमेव मुख्यं शरीरलक्षणम्। तदाश्रयतया त्वन्यत्र शरीरत्वमिति पश्चाद् व्यक्तीभविष्यति। चेष्टेन्द्रियार्थाश्रयः शरीरमिति तु न्यायेऽपि (१।१।११) तस्यैव लक्षणं कृतमिति॥९॥

---

१. सप्तदशाङ्गक-लिङ्गविषये इमानि वचनानि द्रष्टव्यानि—बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया। शरीरं सप्तदशभिः सुसूक्ष्मं लिङ्गमुच्यते॥ (शारीरकोपनिषद् ५); इन्द्रियसमूहात्मकं लिङ्गशरीरम् (अज्ञानबोधिनी, पृ० ३५, ज्ञान-कर्मेद्रिये प्राणाः इति पञ्चदश इन्द्रियाणि मनश्च बुद्धिश्चेति द्वे—इति सप्तदशेन्द्रियसमूहात्मकम्); अपञ्चीकृतभूतेभ्यो जातं सप्तदशाङ्गकम्। संसारकारणं लिङ्गमात्मनो भोगसाधनम्॥ श्रोत्रादिपञ्चकं चैव वागादीनां च पञ्चकम्। प्राणादिपञ्चकं बुद्धिमनसी लिङ्गमुच्यते॥ (स० वे० सि० सा० सं० ३४०-३४१); लिङ्गं पञ्चप्राणदशेन्द्रियमनोबुद्धिसंघातरूपम् (शान्ति० २१४।८ नील०); सूक्ष्मशरीरं सप्तदशकं लिङ्गम्। सप्तदशकं नाम? ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, प्राणादिवायवः पञ्च, बुद्धिर्मनश्च (आत्मानात्मविवेक, पृ० १९)। इदमेव मतं देवीभागवते प्रतिपादितम् (७।३२। ४१-४२)। उक्तं च शंकरेण—'नाडीषु सूक्ष्मासु सकलदेहव्यापिनीषु सप्तदशकं लिङ्गं वर्तते (वृहदा० ४।३।२० भा०। द्र० पञ्चदशी, ततुत्वविवेक २३।

२. कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते—इति मुद्रितशान्ति० पाठः।

ननु लिङ्गं चेदेकं तर्हि कथं पुरुषभेदेन विलक्षणा भोगाः स्युस्तत्राह—

[1]व्यक्तिभेदः कर्मविशेषात्[2] ॥१०॥

यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गं तथापि तस्य पश्चाद् व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति; यथेदानीमेकस्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति पुत्रकन्यादिलिङ्गदेहरूपेण। तत्र कारणमाह—कर्मविशेषादिति। जीवान्तराणां भोगहेतुकर्मादेरित्यर्थः। अत्र विशेषवचनात् समष्टिसृष्टिर्जीवानां साधारणैः कर्मभिर्भवतीत्यायातम्।

अयं च व्यक्तिभेदो मन्वादिष्वप्युक्तः। यथा मनौ समष्टिपुरुषस्य षडिन्द्रियोत्पत्त्यनन्तरम्—

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे॥ (१।१६)

इति षण्णामिति समस्तलिङ्गशरीरोपलक्षणम्। आत्ममात्रासु चिदंशेषु संयोज्येत्यर्थः। तथा च तत्रैव वाक्यान्तरम्[3]—

तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः॥ इति ॥१०॥

नन्वेवं भोगायतनतया लिङ्गस्यैव शरीरत्वे स्थूले कथं शरीरव्यवहारस्तत्राह—

तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः[4] ॥११॥

तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तस्याश्रये षाट्कौशिकदेहे तद्वादो देहवादस्तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहवादादित्यर्थः; लिङ्गसम्बन्धादधिष्ठानस्य देहत्वमधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति

---

१. व्यक्तीनां स्थूलदेहानां भेदो वैलक्षण्यं कर्मणां विशेषाद् वैलक्षण्याद् भवति—इत्यर्थो वृत्तिमते।

२. उद्धृतमिदमद्वैतब्रह्मसिद्धौ—'व्यक्तिभेदः कर्मविशेषात् इति सूत्रेण व्यक्तिभेदोपपादनाद् अतिरिक्तधर्मिकल्पने गौरवाच्च' (पृ० २६०)।

३. मनुश्लोकत्वेन उक्तमपीदं वचनं न मनावुपलभ्यते; पुराणादिषु तु श्लोकोऽय मुपलभ्यते (पद्म० ५।३।१५६); आकर-ग्रन्थेषु पाठान्तराणि च दृश्यन्ते—'कायस्थै' रिति, 'कारणै' रिति च। अस्माकं मते 'कार्यैस्तैः करणैः सह' इत्येव समीचीनः पाठः।

४. देहे अहमिति मिथ्याज्ञानं कथं भवति—इत्यस्य समाधानमस्मिन् सूत्रे प्रदत्तम्-इति वृत्तिकारीया दृष्टिः। लिङ्गाधिष्ठानमेव वस्तुतो देहः, तत्संबन्धादेव षाट्कौशिके स्थूले द्रव्ये देहशब्दः प्रयुज्यते—इत्यर्थो भिक्षुमते।

पर्यवसितोऽर्थः। अधिष्ठानशरीरं च सूक्ष्मं पञ्चभूतात्मकं वक्ष्यते। तथा च शरीरत्रयं सिद्धम्[1]॥ यत् तु—

आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः।
सर्वासां भूतजातीनां ब्रह्मणस्त्वेक एव किम्॥

इत्यादिशास्त्रेषु शरीरद्वयमेव श्रूयते तल्लिङ्गशरीराधिष्ठानशरीरयोरन्योऽन्यनियतत्वेन सूक्ष्मत्वेन चैकताभिप्रायादिति॥११॥

ननु षाट्कौशिकातिरिक्ते लिङ्गशरीराधिष्ठानभूते शरीरान्तरे किं प्रमाणमित्याकाङ्क्षायामाह—

न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च[2]॥१२॥

तल्लिङ्गशरीरं तदृतेऽधिष्ठानं विना स्वातन्त्र्यान्न तिष्ठति। यथा च्छाया निराधारा न तिष्ठति यथा वा चित्रमित्यर्थः। तथा च स्थूलदेहं त्यक्त्वा लोकान्तरगमनाय लिङ्गदेहस्याधारभूतं शरीरान्तरं सिध्यतीति भावः। तस्य च स्वरूपं कारिकायामुक्तम्—

सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते॥ (३९) इति।

अत्र तन्मात्रकार्यं मातापितृजशरीरापेक्षया सूक्ष्मं यद्भूतपञ्चकं यावल्लिङ्गस्थायि प्रोक्तं तदेव लिङ्गाधिष्ठानं शरीरमिति लब्धं कारिकान्तरेण—

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्॥ (४१)।

---

१. अस्मन्मते लिङ्गस्य आधारभूतं शरीरं भूतनिर्मितम् (=विशेषनिर्मितमिति प्रायेण उच्यते) एव। इदं विशेषनिर्मितं शरीरं मुख्यतो द्विधा—स्थूलं सूक्ष्मं च। स्थूलमपि बहुविधं जरायुजादिभेदात्। स्थूलशरीरमपि क्वचिद् अयोनिजं भवितुमर्हति। सूक्ष्मशरीरमपि बहुविधम्—दैवशरीरं नारकशरीरमिति द्वे मुख्ये शरीरे उपभोगप्रधाने। स्थूलदेहत्यागानन्तरं दैवादिशरीरग्रहणात् प्राक् च कियत्कालस्थायि आतिवाहिकनामकं शरीरं भवति तदपि सूक्ष्मशरीरमेव। इमानि सूक्ष्मशरीराणि न तन्मात्रनिर्मितानि, एभिः सुखादिभोगानिष्पादनाद् इति विज्ञेयम्।

२. यस्मिन् देहे आत्मा नास्ति तस्मिन् अहमिति प्रतीतिरपि न भवति यथा आवरणं विना छाया न भवति, भित्तिं विना चित्रं न भवति—इत्यर्थो वृत्तिमते। भिक्षुदर्शितोऽर्थः कारिकासंमतो न वृत्तिदर्शितः—इत्यास्माकीना दृष्टिः।

इति। विशेषैः स्थूलभूतैः सूक्ष्माख्यैः, स्थूलावान्तरभेदैरिति यावत्। अस्यां कारिकायां सूक्ष्माख्यानां स्थूलभूतानां लिङ्शरीराद् भेदावगमेन 'पूर्वोत्पन्नमसक्तं महदादिसूक्ष्मपर्यन्तम्' इत्यादिपूर्वोदाहृतकारिकायां सूक्ष्मभूतपर्यन्तस्य लिङ्गत्वं नार्थः, किन्तु महदादिरूपं यल्लिङ्गं तत् स्वाधारसूक्ष्मपर्यन्तं संसरति तेन सह संसरतीत्यर्थः।

नन्वेवं लिङ्गघटकपदार्थाः कियन्त इति कथमवधार्यमिति चेत्—

वासनाभूतसूक्ष्मं च कर्मविद्ये तथैव च।
दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः॥
(योगवासिष्ठ ६।१२८।१८–१९)

इति वासिष्ठादिवाक्येभ्यः। अत्र लिङ्गशरीरप्रतिपादनेनैव पुर्यष्टकमपि[1] व्याख्येयमित्याशयेन बुद्धिधर्माणामपि वासनाकर्मविद्यानां पृथगुपन्यासः। भूतसूक्ष्मं चात्र तन्मात्रं दशेन्द्रियाणि च ज्ञानकर्मेन्द्रियभेदेन पुरद्वयमित्याशयः। यत् तु मायावादिनो लिङ्गशरीरस्य तन्मात्रस्थाने प्राणादिपञ्चकं प्रक्षिपन्ति पुर्यष्टकं चान्यथा कल्पयन्ति तदप्रामाणिकमिति॥१२॥

ननु मूर्तद्रव्यतया वाय्वादेरिव लिङ्गस्याकाशमेवासंगेनाधारोऽस्तु व्यर्थमन्यत्र संगकल्पनमिति; तत्राह—

मूर्तत्वेऽपि न सङ्घातयोगात् तरणिवत्॥१३॥

मूर्तत्वेऽपि न स्वातन्त्र्यादसंगतयाऽवस्थानं प्रकाशरूपत्वेन सूर्यस्येव सङ्घात-संगानुमानादित्यर्थः। सूर्यादीनि सर्वाणि तेजांसि पार्थिवद्रव्यसंगेनैवावस्थितानि दृश्यन्ते लिङ्गं च सत्त्वप्रकाशमयमतो भूतसंगतमिति॥१३॥

लिङ्गस्य परिमाणमवधारयति—

अणुपरिमाणं तत् कृतिश्रुतेः॥१४॥

तल्लिङ्गमणुपरिमाणं परिच्छिन्नं न त्वत्यन्तमेवाणु सावयवस्योक्तत्वात्। कुतः, कृतिश्रुतेः क्रियाश्रुतेः—'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' (तै. उप. २।५)

---

१. पुर्यष्टकविषयेऽन्यत्रोक्तम्—'तदुक्तं सनन्देन—भूतेन्द्रियमनोबुद्धिर्वासनाकर्म-वायवः। अविद्या चाष्टकं प्रोक्तं पुर्यष्टमृषिसत्तमैः' (कुल्लूकटीका १।५६)। योगावसिष्ठे चोक्तम्—मनोबुद्धिरहंकारस्तथा तन्मात्रपञ्चकम्। इति पुर्यष्टकं प्रोक्तं देहोऽसावातिवाहिकः॥ (६।५१।५०)।

इत्यादिश्रुतेर्विज्ञानानाख्यबुद्धिप्रधानतया विज्ञानस्य लिङ्स्याखिलकर्मश्रवणादित्यर्थः । विभुत्वे सति क्रिया न सम्भवति । तद्गतिश्रुतेरिति पाठस्तु समीचीनः । लिङ्गशरीरस्य च गतिश्रुतिः—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति' (बृहदा. ४।४।२) इति सविज्ञानो बुद्धिसहित एव जायते सविज्ञानं यथा स्यात् तथा संसरति चेत्यर्थः[1] ॥१४॥

परिच्छिन्नत्वे युक्त्यन्तरमाह—

तदन्नमयत्वश्रुतेश्च ॥१५॥

तस्य लिङ्गस्यैकदेशतोऽन्नमयत्वश्रुतेर्न विभुत्वं सम्भवतीति । विभुत्वे सति नित्यतापत्तेरित्यर्थः । सा च श्रुतिर्ह्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागित्यादिः (छन्दोग्य ६।५।४) । यद्यपि मन आदीनि न भौतिकानि तथाप्यन्नसंसृष्टसजातीयांशपूरणादन्नमयत्वादिव्यवहारो बोध्यः ॥१५॥

अचेतनानां लिङ्गानां किमर्थं संसृतिर्देहाद्देहान्तरसञ्चार इत्याशङ्कायामाह—

पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः ॥१६॥

यथा राज्ञः सूपकाराणां पाकशालासु सञ्चारो राजार्थं तथा लिङ्गशरीराणां संसृतिः पुरुषार्थमित्यर्थः ॥१६॥

लिङ्गशरीरमशेषविशेषतो विचारितमिदानीं स्थूलशरीरमपि तथा विचारयति—

पाञ्चभौतिको देहः ॥१७॥

पञ्चानां भूतानां मिलितानां परिणामो देह इत्यर्थः ॥१७॥

मतान्तरमाह—

चातुर्भौतिकमित्येके ॥१८॥

आकाशस्यानारम्भकत्वमभिप्रेत्येदम् ॥१८॥

ऐकभौतिकमित्यपरे ॥१९॥

पार्थिवमेव शरीरमन्यानि च भूतान्युपष्टम्भकमात्राणीति भावः । अथवैकभौतिकमेकैकभौतिकमित्यर्थः । मनुष्यादिशरीरे पार्थिवांशाधिक्येन पार्थिवता

---

१. इत आरभ्य कानिचन टीकापत्राणि नष्टानि—इति टीकावर्जं सूत्रं भाष्यं चात्र मुद्र्यते ।

सूर्यादिलोकेषु च तेज आद्याधिक्येन तैजसादिता शरीराणां सुवर्णादीनामिवेतीममेव पक्षं पञ्चमाध्यायेऽपि सिद्धान्तयिष्यति (५।१०२-१०३, ५।१११-११३ सूत्रगतं भाष्यं द्रष्टव्यम्) । ।।१९।।

देहस्य भौतिकत्वेन यत् सिध्यति, तदाह—

न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ।।२०।।

भूतेषु पृथक्-कृतेषु चैतन्यादर्शनाद् भौतिकस्य न स्वाभाविकं चैतन्यं किन्त्वौपाधिकमित्यर्थः ।।२०।।

बाधकान्तरमाह—

प्रपञ्चमरणाद्यभावश्च ।।२१।।

प्रपञ्चस्य सर्वस्यैव मरणसुषुप्त्याद्यभावश्च देहस्य स्वाभाविकचैतन्ये सति स्यादित्यर्थः । मरणसुषुप्त्यादिकं हि देहस्याचेतनता सा च स्वाभाविकचैतन्ये सति नोपपद्यते स्वभावस्य यावद्द्रव्यभावित्वादिति ।।२१।।

प्रत्येकादृष्टेरिति यदुक्तं तत्राशङ्क्य परिहरति—

मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः ।।२२।।

ननु यथा मादकता-शक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितद्रव्ये वर्त्तत एवं चैतन्यमपि स्यादिति चेन्न, प्रत्येकपरिदृष्टे सति सांहत्ये तदुद्भवः सम्भवेत् । प्रकृते तु प्रत्येकपरिदृष्टत्वं नास्ति । अतो दृष्टान्ते प्रत्येकं शाल्यादिभिः सूक्ष्मतया मादकत्वे सिद्धे संहतभावकाले मादकत्वाविर्भावमात्रं सिध्यति । दार्ष्टान्तिके तु प्रत्येकभूतेषु सुक्ष्मतया न केनापि प्रमाणेन चैतन्यं सिद्धमित्यर्थः ।

ननु समुच्चिते चैतन्यदर्शनेन प्रत्येकभूते सूक्ष्मचैतन्यशक्तिरनुमेयेति चेन्न; अनेकभूतेष्वनेकचैतन्यशक्तिकल्पनायां गौरवेण लाघवादेकस्यैव नित्यचित्स्वरूपस्य कल्पनौचित्यात् । ननु यथाऽवयवेऽवर्त्तमानमपि परिमाणजलाहरणादिकार्यं घटादौ दृश्यते, एवमेव शरीरे चैतन्यं स्यादिति; मैवम्, भूतगतविशेषगुणानां सजातीयकारणगुणजन्यतया कारणे चैतन्यं विना देहे चैतन्यासम्भवादिति ।।२२।।

पुरुषार्थं संसृतिर्लिङ्गानामित्युक्तम्; (३।१६); तत्र लिङ्गानां स्थूलदेहसञ्चाराख्यजन्मनो यो यः पुरुषार्थो येन येन व्यापारेण सिध्यति तदाह सूत्राभ्याम्—

ज्ञानान्मुक्तिः ।।२३।।

लिङ्गसंसृतितो जन्मद्वारा विवेकसाक्षात्कारस्तस्मान् मुक्तिरूपः पुरुषार्थो भवतीत्यर्थः । ज्ञानादिकं च प्रत्ययसर्गतया कारिकायां परिभाषितम्—'एष

प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः' (४७ का०) इति। विपर्ययादयो व्याख्यास्यन्तेऽत्र च स एव बुद्धिसर्गः प्रयोजनयोगेन सूत्रैरुच्यत इति विशेषः ॥२३॥

बन्धो विपर्ययात् ॥२४॥

विपर्ययात् सुखदुःखात्मको बन्धरूपः पुरुषार्थो लिङ्गसंसृतितो भवतीत्यर्थः ॥२४॥

ज्ञानविपर्ययाभ्यां मुक्तिबन्धावुक्तौ, तत्रादौ ज्ञानात् मुक्तिं विचारयति—

नियतकारणत्वान्न समुच्चयविकल्पौ ॥२५॥

यद्यपि 'विद्यां चाविद्यां च यस्तद्वेदोभयं सहे' त्यादि (ईशोप. ११) श्रूयते तथाप्यविवेक- निवृत्तौ लोकसिद्धतया ज्ञानस्य नियतकारणत्वादविद्याख्यकर्मणा सह ज्ञानस्य मोक्षजनने समुच्चयो विकल्पो वा नास्तीत्यर्थः। 'तमेव विदित्वातिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय', (श्वेताश्व. ३।८; ६।१५) 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' (तै. आ. १०।१०) इत्यादिश्रुतिभ्योऽपि कर्मणो न साक्षान्मोक्षहेतुत्वम्; समुच्चयानुष्ठानश्रुतिस्त्व[1]ङ्गाङ्गिभावादिभिरभ्युपपद्यत इति ॥२५॥

समुच्चयविकल्पयोरभावे दृष्टान्तमाह—

स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ॥२६॥

यथा मायिकामायिकाभ्यां स्वप्नजागरपदार्थाभ्यामन्योऽन्यसहकारिभावेनैकः पुरुषार्थो न सम्भवति, एवमुभयोर्मायिकामायिकयोरनुष्ठितयोः कर्मज्ञानयोः पुरुषस्य मुक्तिरपि न युक्तेत्यर्थः। मायिकत्वं चासत्यत्वम्, अस्थिरत्वमिति यावत्। तच्च स्वाप्नेऽर्थेऽस्ति जाग्रत्पदार्थस्तु स्वाप्नापेक्षया सत्य एव कूटस्थपुरुषापेक्षयैवास्थिरत्वेनासत्यत्वादतः स्वप्नविलक्षण-स्नानादिकार्यकरः। एवं कर्माप्यस्थिरत्वात् प्रकृतिकार्यत्वाच्च मायिकम्। आत्मा तु स्थिरत्वादकार्यत्वाच्चामायिकः। अतस्तयोरनुष्ठितकर्मज्ञानयोः समानफलदातृत्वमयौक्तिकमिति विलक्षणमेव कार्यं युक्तम् ॥२६॥

नन्वेवमप्यात्मोपासनाख्यज्ञानेन सह तत्त्वज्ञानस्य समुच्चयविकल्पौ स्यातामुपास्यस्यामायिकत्वादिति, तत्राह—

इतरस्यापि नात्यन्तिकम् ॥ २७ ॥

---

१. समुच्चयानुष्ठानं श्रुतिषु (पाठा०)।

इतरस्याप्युपास्यस्य नात्यन्तिकममायिकत्वमुपास्यात्मन्यध्यस्तपदार्थानामपि प्रवेशादित्यर्थः ॥२७॥

उपासनस्य मायिकत्वं यस्मिन्नंशे तदाह—

सङ्कल्पितेऽप्येवम् ॥२८॥

मन.सङ्कल्पिते ध्येयांश एवमपि मायिकत्वमपीत्यर्थः। सर्वं खल्विदं ब्रह्मे[1] त्यादिश्रुत्युक्ते ह्युपास्ये प्रपञ्चांशस्य मायिकत्वमेवेति ॥२८॥

तद्ध्युपासनस्य किं फलमित्याकाङ्क्षायामाह—

भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥२९॥

भावनाख्योपासनानिष्पत्त्या शुद्धस्य निष्पापस्य पुरुषस्य प्रकृतेरिव सर्वमैश्वर्यं भवतीत्यर्थः। प्रकृतिर्यथा सृष्टिस्थितिसंहारं करोति[2], एवमुपासकस्य बुद्धिसत्त्वमपि प्रकृतिप्रेरणेन सृष्ट्यादिकर्तृ भवतीति ॥२९॥

ज्ञानमेव मोक्षसाधनमिति स्थापितम्। इदानीं ज्ञानसाधनान्याह—

रागोपहतिर्ध्यानम्[3] ॥३०॥

ज्ञानप्रतिबन्धको यो विषयोपरागश्चित्तस्य तदुपघातहेतुर्ध्यानमित्यर्थः। उपचारेण कार्यकारणयोरभेदनिर्देशो रागक्षयस्य ध्यानत्वासम्भवात्। अत्र ध्यानशब्देन धारणाध्यानसमाधयो योगोक्तास्त्रय एव ग्राह्याः, पातञ्जले योगाङ्गानामष्टानामेव विवेकसाक्षात्कारहेतुत्वश्रवणादिति[4]। एतेषां चावान्तरविशेषास्तत्रैव द्रष्टव्याः। इतराणि च पञ्चाङ्गानि स्वयं वक्ष्यति[5] ॥३०॥

ध्याननिष्पत्त्यैव ज्ञानोत्पत्तिर्नारम्भमात्रेणेत्याशयेन ध्याननिष्पत्तेर्लक्षणमाह—

वृत्तिनिरोधात् तत्सिद्धिः ॥३१॥

ध्येयातिरिक्तवृत्तिनिरोधरूपेण सम्प्रज्ञातयोगेन तत्सिद्धिर्ध्यानस्य निष्पत्ति-

---

१. छान्दोग्य० ३।१४।१

२. कथनमिदं तात्त्विकदृष्ठ्या, परिणामशीलत्वाद् गुणेष्वेव कर्तृत्वसंभवात्। परन्तु व्यक्तताहेतुभूतः पुरुषोऽपरिहार्यः। तथा चोक्तम्—पुरुषाधिष्ठितं प्रधानं प्रवर्तते इति।

३. ६।२५ सूत्रे ध्यानं निर्विषयं मन इत्युक्तम्। अत्र साधनदृशा, षष्ठाध्याये च स्वरूपदृशाऽभिहितमिति विवेच्यम्।

४. तथा च सूत्रम्—योगाङ्गानुष्ठानाद् अशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः (२।२८)।

५. सांख्यसूत्रकार इति शेषः। यमनियमासनप्राणायामप्रत्याहारनिर्देशपराणि सूत्राणि—३।३२–३।३५, ४।१९, ६।२४, ६।२५ च।

ज्ञानाख्यफलोपधानरूपा भवतीत्यर्थः। अतस्तावत्पर्यन्तमेव ध्यानं कर्त्तव्यमित्याशयः। इतरवृत्तिनिरोधे सत्येव विषयान्तरसञ्चाराख्यप्रतिबन्धापगमाद् ध्येयसाक्षात्कारो भवतीति कृत्वा योगोऽपि[1] ज्ञाने कारणं योगाङ्गध्यानादिवदित्यपि मन्तव्यम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीत्यादि[2] श्रुतिस्मृत्योस्तदवगमादिति ॥३१॥

ध्यानस्यापि साधनान्याह—

धारणासनस्वकर्मणा तत्सिद्धिः ॥३२॥

वक्ष्यमाणेन धारणादित्रयेण ध्यानं भवतीत्यर्थः ॥३२॥

धारणादित्रयं क्रमात् सूत्रत्रयेण लक्षयति—

निरोधश्छर्दिविधारणाभ्याम् ॥३३॥

प्राणस्येति प्रसिद्धया लभ्यते। प्रच्छर्दनविधारणाभ्यां वा प्राणस्येति योगसूत्रे[3] भाष्यकारेण प्राणायामस्य व्याख्यातत्वात्। छर्दिश्च वमनम्, विधारणस्त्याग इति यावत्, तेन पूरणरेचनयोर्लाभः। विधारणं च कुम्भकम्। तथा च प्राणस्य पूरकरेचककुम्भकैर्यो निरोधो वशीकरणं सा धारणेत्यर्थः। आसनकर्मणोः स्वशब्देन पश्चाल्लक्षणीयतया सूत्रे परिशेषत एव धारणाया लक्ष्यत्वलाभाद्धारणापदं नोपात्तम्। चित्तस्य धारणा तु समाधिवद् ध्यानशब्देनैव गृहीतेत्युक्तम् ॥३३॥

क्रमप्राप्तमासनं लक्षयति—

स्थिरसुखमासनम्[4] ॥३४॥

यत् स्थिरं सत् सुखसाधनं भवति स्वस्तिकादि तदासनमित्यर्थः ॥३४॥

स्वकर्म लक्षयति—

स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥३५॥

सुगमम्। तत्र कर्मशब्देन यमनियमयोर्ग्रहणम्; जितेन्द्रियत्वरूपः प्रत्याहारोऽपि सर्वाश्रमसाधारणतया कर्ममध्ये प्रवेशनीयः। तथा च पातञ्जलसूत्रे ज्ञानसाधनतया प्रोक्तान्यष्टौ योगाङ्गान्यत्रापि लब्धानि। तथा तत्सूत्रम्—यमनियमासनप्राणायाम-

---

१. अत्र देवलोक्तिर्द्रष्टव्या—विषयेभ्यो निवर्त्याऽभिप्रेतार्थे मनसोऽवस्थापनं योग इति (याज्ञ० प्रायश्चित्त० १०९ अपरार्कोद्धृता)।

२. कठ० १।२।१२

३. १।३४

४. स्थिरसुखमासनमिति न नियमः (६।२४) इति सूत्रमप्यालोच्यम्; द्र० भाग० २।२।१५

प्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति[1]। तेषां च स्वरूपं तत्रैव द्रष्टव्यम् ॥३५॥

मुख्याधिकारिणो नास्ति वहिरङ्गस्य यमादिपञ्चकस्यापेक्षा, केवलाद्धारणाध्यानादित्रयरूपात् संयमादेव ज्ञानं योगश्च भवतीति पातञ्जलसिद्धान्तः[2]। जडभरतादिषु च तथा दृश्यतेऽपि। अतस्तदनुसारेणाचार्योऽप्याह—

वैराग्यादभ्यासाच्च ॥३६॥

केवलाभ्यासाद् ध्यानरूपादेव वैराग्यसहिताज् ज्ञानं तत्साधनयोगश्च भवत्युत्तमाधिकारिणामित्यर्थः। तदुक्तं गारुडेऽपि[3]—

आसनस्थानविधयो[4] न योगस्य प्रसाधकाः।
विलम्बजननाः सर्वे विस्तराः परिकीर्तिताः॥
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात्।
(१।२२७।४४–४५ क)

इति। अथवा वैराग्यध्यानाभ्यासावत्र ध्यानस्यैव हेतुतयोक्तौ, चकारश्च धारणासमुच्चयायेति। तदेवं ज्ञानान्मोक्षो (द्र० ३।२३) व्याख्यातः ॥३६॥

अतः परं बन्धो विपर्ययादित्युक्तो (३।२४) बन्धकारणं विपर्ययो व्याख्यास्यते; तत्रादौ विपर्ययस्य स्वरूपमाह—

विपर्ययभेदाः[5] पञ्च[6] ॥३७॥

---

१. २।२९

२. भिक्षुणा ३।७ योगवार्त्तिके मतमिदं प्रपञ्चितम्, उदाहृतं च गरुडपुराणवचनमस्मिन्नर्थे—आसनस्थानविधयो न योगस्य प्रसाधकाः।····शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवादिति। अत एव जडभरतादीनां समाधिविघ्नतया बाह्यकर्मत्यागोऽपि श्रूयते—इत्यप्यत्र उक्तम्।

३. तुल० "यदन्यत्रोच्यते—'स्थानासनविधानानि योगस्य विधयोऽपि वा। व्याक्षेपजनकाः सर्वे न ते योगस्य हेतवः"। (द्र० योगभाष्यविवरण २।२९)।

४. 'आसनस्थानविषयाः' इति मुद्रितपुराणपाठः।

५. द्र० पञ्चपर्वा अविद्या इत्याह भगवान् वार्षगण्यः (सांख्यतत्त्वकौ० ४७)।

६. विपर्यय-अशक्ति-तुष्टि-सिद्धीनां सूत्रोक्ता गणना देवलादिभिरपि कृतेति विज्ञायते। एतद्विषये वायुपुराणगतं विवरणं द्रष्टव्यम्—पञ्चमोऽनुग्रहः सर्गः चतुर्धा स व्यवस्थितः। विपर्ययेणाशक्त्या च तुष्ट्या सिद्ध्या तथैव च ॥५७॥ स्थावरेषु विपर्यासः तिर्यग्योनिष्वशक्तिता ॥६८॥ सिद्ध्यात्मानो मनुष्यास्तु तुष्टिर्देवेषु कृत्स्नशः। इत्येते प्राकृता श्चैव वैकृताश्च नव स्मृताः॥
(वायु० ६।६९)।

अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च योगोक्ताः (२।३), बन्धहेतुविपर्ययस्यावान्तरभेदा इत्यर्थः । तेन शुक्त्यादिज्ञानरूपाणां विपर्ययाणामसङ्ग्रहेऽपि न क्षतिः । तत्राविद्याऽनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरिति योगे प्रोक्ता ( २।५ )। एवमस्मिताप्यात्मानात्मनोरेकताप्रत्ययः, शरीराद्यतिरिक्त आत्मा नास्तीत्येवंरूपः । अविद्या तु नैवंरूपा, आत्मनः शरीराशरीरोभयरूपत्वेऽपि शरीरेऽहम्बुद्ध्युपपत्तेः । रागद्वेषौ तु प्रसिद्धावेव । अभिनिवेशश्च मरणादित्रास इति । रागादीनां विपर्ययकार्यतया विपर्ययत्वम् ।।३७।।

विपर्ययस्य स्वरूपमुक्त्वा तत्कारणस्याशक्तेरपि स्वरूपमाह—

अशक्तिरष्टाविंशतिधा[1] तु ।।३८।।

सुगमम् । एतदपि कारिकया व्याख्यातम्—

एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम् ।। (४९) इति ।
वाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमुग्धताः[2] ।।

इत्येकादशेन्द्रियाणामेकादशाशक्तयः स्वतश्च बुद्धेः सप्तदशाशक्तयः । यथा वक्ष्यमाणानां नवतुष्टीनां विघाता नव, तथा वक्ष्यमाणानामष्टसिद्धीनां च विघाता अष्टाविति मिलित्वा चेमाः स्वतः परतश्चाष्टाविंशतिर्बुद्धेरशक्तय इत्यर्थः । तु-शब्द एषां विशेषप्रसिद्धिख्यापनार्थः ।।३८।।

---

१. वस्तुतस्तु तु-कारो व्यर्थ एव । यदि प्रसिद्धिख्यापनमेव हेतुः, तर्हि कथं न विपर्ययतुष्टिसिद्धिप्रतिपादकेषु सूत्रेष्वपि ( ३।३०, ३।३९, ३।४० ) तुकारः प्रयुक्तः—इति प्रश्न उदेति । अस्मन्मते ३।३९ सूत्रीयो य आदिम स्तुकारः स एव भ्रान्त्या लेखकेन ३।३८ सूत्रेऽपि लिखितः, ततश्च भ्रान्तिपरम्परया स तुकारः ३।३८ सूत्रे अन्यैरपि पठितः सन् सूत्राङ्गभूतः संजातः । वृत्तिसंमत-सूत्रपाठे तु-कारो न दृश्यते । विशेष-प्रसिद्धिख्यापनार्थस्तुकारः १।१।९ न्यायसूत्रे प्रयुक्त इति न्यायमञ्जरीतो विज्ञायते ( तुशब्दो····सूचयति, भाग २, पृ० २ )। अत्र तुशब्दस्य ईदृशं तात्पर्यं वर्तत एव । मन्ये भिक्षुणा अस्थाने तुकारस्य सार्थक्यं दर्शितम् ।

२. श्लोकस्यास्याकरस्थलं न ज्ञायते । बहुत्रोद्धृतोऽयम्—जयमङ्गलाटीकायाम्, सांख्यतत्त्वकौमुद्याम्, सांख्यचन्द्रिकायां च । तत्त्वसमाससूत्रव्याख्यानेष्वप्यय-मुद्धृतः; अनिरुद्धवृत्तावत्रैवायमुद्धृतः । एषु स्थलेषु पाठान्तराण्यपि दृश्यन्ते ।

ययोर्विघाते बुद्धेरशक्ती ते तुष्टिसिद्धी सूत्रद्वयेनाह—

तुष्टिर्नवधा ॥३९॥

स्वयमेव नवधात्वं वक्ष्यति ( ३।४३ सू० ) ॥३९॥

सिद्धिरष्टधा ॥४०॥

एतदपि स्वयं वक्ष्यति (३।४४ सू०) ॥४०॥

उक्तानां विपर्ययाशक्तितुष्टिसिद्धीनां विशेषजिज्ञासायां क्रमेण सूत्रचतुष्टयं प्रवर्तते—

अवान्तरभेदाः[1] पूर्ववत्[2] ॥४१॥

विपर्ययस्यावान्तरभेदा ये सामान्यतः पञ्चोक्तास्ते पूर्ववत् पूर्वाचार्यै र्यथोक्तास्तथैव विशिष्यावधार्याः, विस्तरभयान्नेहोच्यन्त इत्यर्थः। ते चाविद्यादयो मयापि सामान्यत एव व्याख्याताः पञ्चेति। विशेषतस्तु द्वाषष्टिभेदाः, तदुक्तं कारिकायाम्—

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः॥ (४८) इति।

अस्यायमर्थः—अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु प्रकृतिष्वनात्मस्वात्मबुद्धिरविद्या तमोऽष्टधा भवति। कार्यकारणाभेदेन केवलविकृतिष्वात्मबुद्धेरप्यत्रान्तर्भावः। एवमविद्याया विषयभेदेनाष्टविधत्वात् तत्समानविषयकस्यास्मिताख्यमोहस्याष्टविधत्वम्। दिव्यादिव्यभेदेन शब्दादीनां विषयाणां दशत्वात् तद्विषयको रागाख्यो महामोहो दशविधः। अविद्यास्मितयोरष्टौ ये विषया ये रागस्य दश

---

१. 'अवान्तरभेदाः' इत्यस्य 'विपर्यय-अशक्ति-तुष्टि-सिद्धीनाम् अवान्तरभेदाः' इत्यर्थ एव समीचीनतया प्रतिभाति। अवान्तरभेदा विपर्ययस्यैवास्मिन् सूत्रे लक्षिता इति कथने न मानम्।

२. 'पूर्ववद्' इत्यस्य 'यथा पूर्वाचार्यैरुक्ताः' इत्यर्थ इति भाष्यवृत्तिकारौ। नायमर्थ उपपद्यते। विपर्ययाशक्ति-तुष्टि-सिद्धीनां भेदाः कियन्त इति प्रागेवोक्तम् (३७-४०)। किमेषां भेदानामपि अवान्तरभेदाः सन्ति इत्युच्यतेऽत्र? वस्तुतस्तु अवान्तरभेदा एषां सन्ति, ते च कारिकादिषु उक्ताः। यथा—विपर्यस्य पञ्च भेदा भवन्ति। प्रत्येकं भेदस्य उपभेदा अपि उक्ताः; विषयगतवैचित्र्य-भेदाद् उपभेदा अपि पुर्नविभागार्हाः। विपर्ययाशक्ति-तुष्टि सिद्धिस्वरूपविषये नानाविधानि मतानि सांख्यसप्ततिटीकासु द्रष्टव्यानि (४७-५१)।

विषयास्तद्विघातकेष्वष्टादशस्वष्टादशधा तामिस्राख्यो द्वेषः। एवं तेषामष्टादशानां विनाशादिदर्शनादष्टादशधाऽन्धतामिस्राख्योऽभिनिवेशो भयमिति। एतेषां च तम आदिसंज्ञा तद्धेतुत्वादिति ॥४१॥

एवमितरस्याः[1] ॥४२॥

एवं पूर्ववदेवेतरस्या अशक्ते रप्यवान्तरभेदा अष्टाविंशति विशेषतोऽवगन्तव्या इत्यर्थः। अशक्तिरष्टाविंशतिधेत्येतस्मिन्नेव ( ३८ ) सूत्रेऽष्टाविंशतिधात्वं मया व्याख्यातम् ॥४२॥

आध्यात्मिकादिभेदान्नवधा तुष्टिः ॥४३॥

इदं सूत्रं कारिकया व्याख्यातम्—

आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।
बाह्या विषयोपरमात् पञ्च च नव तुष्टयोऽभिमताः॥ (५०) इति।

अस्यायमर्थः—आत्मानं तुष्टिमतः सङ्घातमधिकृत्य प्रवर्तन्त इत्याध्यात्मिकास्तुष्टयश्चतस्रः। तत्र प्रकृत्याख्या तुष्टिर्यथा—साक्षात्कारपर्यन्तः परिणामः सर्वोऽपि प्रकृतेरेव, तं च प्रकृतिरेव करोत्यहं तु कूटस्थः पूर्ण इत्यात्मभावनात् परितोषः। इयं तुष्टिरम्भ इत्युच्यते। ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाख्या सलिलमित्युच्यते। ततश्च प्रव्रज्यायां बहुकालं समाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिरोघ इत्युच्यते। ततश्च प्रज्ञानपरमकाष्ठारूपे धर्ममेघसमाधौ सति या तुष्टिः सा भाग्याख्या वृष्टिरित्युच्यत इति चतस्र आध्यात्मिक्यः।

बाह्याः पञ्च तुष्टयो बाह्यविषयेषु पञ्चसु शब्दादिष्वर्जनरक्षणक्षयभोगहिंसादि-

---

१. स्त्रीलिङ्ग—'इतरेति' पदेन कथम् अशक्तिरेव गृहीता न पुनः तुष्टिः सिद्धिश्च इति न सुष्ठु विज्ञायते। यदि ४३-४४ सूत्रयोः तुष्टि-सिद्ध्योरवान्तर-भेदानां पृथक् कथनमावश्यकं स्यात् तर्हि २।४२ सूत्रेऽपि कथं न 'एवमशक्तेः' इत्युक्तम्? किं च ४६-४४ सूत्रयोः द्वे अवान्तरभेदनामनी गृहीते, ४२ सूत्रे तु अवान्तरशक्तिभेदनाम नोक्तम्। किं कारणमस्य वैचित्र्यस्येति ज्ञायते। किं च ३।३७-४४ सूत्रेषु पुनरुक्ति-रूपं सूत्ररचनाशैथिल्यमवलोक्यते। तथाहि-'नवधा तुष्टिः' इत्युक्त्वा (३।३९) किमर्थः पुनः 'आध्यात्मिकादिभेदान्नवधा तुष्टिः' इत्युच्यते ३।४३ सूत्रे? ३।३८ सूत्रे 'अशक्तिरष्टाविंशतिधा' इत्युक्तम्। किमर्थं पुनः एतदर्थकमेव 'एवमितरस्याः' इति सूत्रम् (३।४२) उच्यते? विभिन्ने समये इमानि वचांसि अस्मिन् ग्रन्थे संग्रथितानि—इति प्रतिभाति।

दोषनिमित्तकोपरमाज्जायन्ते । ताश्च तुष्टयो यथाक्रमं पारं सुपारं पारपारमनुत्तमाम्भ उत्तमाम्भ इति परिभाषिता इति ।

कश्चित्[1] त्विमां कारिकामन्यथा व्याख्यातवान् । तद्यथा—विवेकसाक्षात्कारोऽपि प्रकृतिपरिणाम एवेत्यलं ध्यानाभ्यासेनेत्येवं दृष्टया या ध्यानादिनिवृत्तौ तुष्टिः सा प्रकृत्याख्या । प्रव्रज्योपादानेनैव मोक्षो भविष्यति किं ध्यानादिनेति या तुष्टिः सोपादानाख्या । कृत न्यासस्यापि कालेनैव मोक्षो भविष्यत्यलमुद्वेगेनेति या तुष्टिः सा कालाख्या । भाग्यादेव मोक्षो भविष्यति न मोक्षशास्त्रोक्तसाधनैरेवं कुतर्के या तुष्टिः सा भाग्याख्येत्यादिरर्थः इति; तन्न, तद्व्याख्याततुष्टीनामभावस्य ज्ञानाद्यनुकूलत्वेनाशक्तिपरिभाषानौचित्यादिति ॥४३॥

ऊहादिभिः सिद्धिः ॥४४॥

ऊहादिभेदैः सिद्धिरष्टधा भवतीत्यर्थः । इदमपि सूत्रं कारिकया व्याख्यातम्—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ (५७) इति ।

अस्यायमर्थः । अत्राध्यात्मिकादिदुःखत्रयप्रतियोगिकत्वात् त्रयो दुःखविघाता मुख्यसिद्धयः । इतरास्तु तत्साधनत्वाद् गौण्यः सिद्धयः । तत्रोहो यथा—उपदेशादिकं विनैव प्राग्भवीयाभ्यासवशात् तत्त्वस्य स्वयमूहनमिति । शब्दस्तु यथा—अन्यदीयपाठमाकर्ण्य स्वयं वा शास्त्रमाकलय्य यज्ज्ञानं जायते तदिति । अध्ययनं च यथा—शिष्याचार्यभावेन शास्त्राध्ययनाज् ज्ञानमिति । सुहृत्प्राप्तिर्यथा—स्वयमुपदेशार्थं गृहागतात् परमकारुणिकाज् ज्ञानलाभ इति । दानं च यथा—धनादिदानेन परितोषिताज् ज्ञानलाभ इति । एषु[2] च पूर्वस्त्रिविध ऊहशब्दाध्ययनरूपो मुख्यसिद्धेरङ्कुश आकर्षकः । सुहृत्प्राप्तिदानयोरूहादित्रयापेक्षया मन्दसाधनत्वप्रतिपादनायेदमुक्तम् ।

कश्चित्[3] त्वेतासामष्टसिद्धीनामङ्कुशो निवारकः पूर्वस्त्रिविधो विपर्ययाशक्तितुष्टिरूपो भवति बन्धकत्वादिति व्याचष्टे; तन्न, तुष्ट्यभावस्याशक्तितया बाधिर्यादिवत् सिद्धिविरोधितालाभेन तुष्ट्यतुष्ट्यो रुभयोः सिद्धिविरोधित्वासम्भवात् ॥४४॥

---

१. कश्चिदिति वाचस्पतिः (द्र० तत्त्वकौमुदी) ।

२. अस्मिन् वाक्ये यन् मतं प्रतिपादितं तत् पूर्णिमाटीकायां खण्डितम् (५१ कारिका) ।

३. कश्चिदिति वाचस्पतिः (द्र० तत्त्वकौमुदी)

ननूहादिभिरेव कथं सिद्धिरुच्यते मन्त्रतपःसमाध्यादिभिरप्यणिमाद्यष्टसिद्धेः सर्वशास्त्रसिद्धत्वादिति, तत्राह—

नेतरादितरहानेन विना[1] ॥४५॥

इतरादूहनादिपञ्चकभिन्नात् तपआदेस्तात्त्विकी न सिद्धिः; कुत इतरहानेन विना, यतः सा सिद्धिरितरस्य विपर्ययस्य हानं विनैव भवत्यत संसारापरिन्थित्वात् सा सिद्धयाभास एव न तु तात्त्विकी सिद्धिरित्यर्थः। तथा चोक्तं योगसूत्रेण—ते समाधावुपसर्गा व्युत्थाने सिद्धय इति (३।३७)।

तदेवं ज्ञानान् मुक्ति (३।२३) रित्यारभ्य विस्तरतो बुद्धिगुणरूपः प्रत्ययसर्गः सकार्यबन्धो मोक्षरूपपुरुषार्थेन सहोक्तः। एतौ च बुद्धि-तद्गुणरूपौ सर्गौ प्रवाहरूपेणान्योऽन्यं हेतू बीजाङ्कुरवत्। तथा च कारिका—

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः॥ (५२) इति।

भावो वासनारूपा बुद्धेर्ज्ञानादिगुणाः, लिङ्गं महत्तत्त्वं बुद्धिरिति। समष्टिसर्गः प्रत्ययसर्गश्च समाप्तः[2] ॥४५॥

साम्प्रतं व्यक्तिभेदः कर्मविशेषादिति (३।१०) सङ्क्षेपादुक्ता व्यष्टिसृष्टिर्विस्तरतः प्रतिपाद्यते—

दैवादिप्रभेदा[3] ॥४६॥

---

१. वृत्तिकृत्कृतोऽर्थस्तु सर्वथा भिन्न एव। विपर्यय-अशक्ति-तुष्टयो हातव्या एव इति वृत्तिकृतस्तात्पर्यम्। भाष्यदर्शितोऽर्थस्तु काल्पनिक एव; तथैव च वृत्तिकृत्कृतः। वस्तुतस्तु अस्पष्टार्थमिदं सूत्रम्।

२. 'तदेवं ज्ञानान्मुक्ति''''प्रत्ययसर्गश्च समाप्तः' इत्यंशः ४६ सूत्रपातनिकारूपेण केषुचित् संस्करणेषु दृश्यते। अस्मत्स्थापितो ग्रन्थविभागः समीचीनतर इति प्रतिभाति।

३. दैवादिप्रभेदा इति बहुवचनान्तं सूत्रं वृत्तिमते। सुरासुरनरप्रेततिर्यङ्नारकभेदेन षड् भेदाः सर्गस्य—इत्यर्थ इति वृत्तिकारः। भाष्ये 'दैवादिप्रभेदा' इत्यत्र बहुव्रीहिसमासः, पदं च एकवचनान्तम्; सृष्टिशब्दस्य विशेषणमिदं पदम्। सृष्टि-पदं ३।४७ सूत्रत आकर्षणीयम् इति प्रतिभाति। वस्तुतः ३।४७ सूत्रानन्तरं यदि ३।४६ सूत्रं स्यात् तर्हि अर्थबोधः सुघटः स्मात्। व्युत्क्रमदोषोऽत्र प्रतिभाति।

दैवादिः प्रभेदोऽवान्तरभेदो यस्याः सा तथा सृष्टिरिति शेषः। तदेतत् कारिकया व्याख्यातम्—

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥ (५३) इति।

ब्राह्म-प्राजापत्यैन्द्र-पैत्र-गान्धर्व-याक्ष-राक्षस-पैशाचा इत्यष्टविधो दैवः सर्गः। पशु-मृग-पक्षि-सरीसृप-स्थावरा इति तैर्यग्योनः पञ्चविधः। मानुष्यसर्गश्चेकप्रकार इति। भौतिको भूतानां व्यष्टिप्राणिनां विराजः सकाशात् सर्ग इत्यर्थः ॥४६॥

अवान्तरसृष्टेरप्युक्तायाः पुरुषार्थत्वमाह—

आब्रह्मस्तम्बपर्यन्तं तत्कृते[1] सृष्टिराविवेकात् ॥४७॥

चतुर्मुखमारभ्य स्थावरान्ता व्यष्टिसृष्टिरपि विराट्सृष्टिवदेव पुरुषार्था भवति तत्तत्पुरुषाणां विवेकख्यातिपर्यन्तमित्यर्थः ॥४७॥

व्यष्टिसृष्टावपि विभागमाह सूत्रत्रयेण—

ऊर्ध्वं सत्त्वविशाला[2] ॥४८॥

ऊर्द्ध्वं भूर्लोकादुपरि सृष्टिः सत्त्वाधिका भवतीत्यर्थः ॥४८॥

तमोविशाला मूलतः ॥४९॥

मूलतो भूर्लोकादध इत्यर्थः ॥४९॥

मध्ये रजोविशाला ॥५०॥

मध्ये भूर्लोक इत्यर्थः ॥५०॥

नन्वेकस्या एव प्रकृतेः केन निमित्तेन सत्त्वादिविशालतया विचित्राः सृष्टय इत्याकाङ्क्षायामाह—

कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत्[3] ॥५१॥

---

१. तत्कृते इत्यत्र 'कृते' इत्यव्ययम्। 'तवकृते' इति सौन्दर्यलहरीपदव्याख्यायां (९१) लक्ष्मीधर आह—"अथकृते च तादर्थ्ये निपातद्वयमीरितम् इति कृते शब्दस्तादर्थ्ये निपातितः, तत्योगे षष्ठी एव" इति। तदिति पुरुषः इति भाष्यम्। अर्थाऽयं नानुवृत्तिलभ्यः। अर्थस्तु समीचीन एव प्रतिभाति।

२. ३।४८-५० सूत्राणि सांख्यकारिका-(५४) नुकारीणीति निश्चप्रचम्, अन्यथा सत्त्व-रजस्तमोगुणक्रमेण सृष्टिनिर्देशः स्यादेव। कारिकायां छन्दोरक्षार्थं सत्त्व-तमः-रजः-क्रमेण सृष्टेर्निर्देशः कृतः।

३. गर्भदास उदरदासशब्देनापि उच्यते। यस्य माता दासी पिता च भृत्यः स- एवमुच्यते। कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् (६।४१) इत्यनेन सूत्रेणास्य पौन रुक्त्यमेव।

विचित्रकर्मनिमित्तादेव यथोक्ता प्रधानस्य चेष्टा कार्यवैचित्र्यरूपा भवति। वैचित्र्ये दृष्टान्तो गर्भदासवदिति। यथा गर्भावस्थामारभ्य यो दासस्तस्य भृत्यवासनापाटवेन नानाप्रकारा चेष्टा परिचर्या स्वाम्यर्थं भवति तद्वदित्यर्थः ॥५१॥

ननु चेद् ऊर्ध्वं सत्त्वविशाला सृष्टिरस्ति तर्हि तत एव कृतार्थत्वात् पुरुषस्य किं मोक्षेणेति, तत्राह—

आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद् हेयः[1] ॥५२॥

तत्राप्यूर्ध्वगतावपि सत्यामावृत्तिरस्त्यत उत्तरोत्तरयोनियोगादधोऽधो योनिजन्मनः सोऽपि लोको हेय इत्यर्थः ॥५२॥

किञ्च—

समानं जरामरणादिजं दुःखम्[2] ॥५३॥

ऊर्ध्वाधोगतानां ब्रह्मादिस्थावरान्तानां सर्वेषामेव जरामरणादिजं[3] दुःखं साधारणमतोऽपि हेय इत्यर्थः ॥५३॥

किं बहुना, कारणे लयादपि न कृतकृत्यतेत्याह—

न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥५४॥

विवेकज्ञानाभावे यदा महदादिषु वैराग्यं प्रकृत्युपासनया भवति तदा प्रकृतौ लयो भवति 'वैराग्यात् प्रकृतिलयः' (४५ का०) इति वचनात्। तस्मात् कारणलयादपि न कृतकृत्यतास्ति मग्नवदुत्थानात्। यथा जले मग्नः पुरुषः पुनरुत्तिष्ठति, एवमेव प्रकृतिलीनाः पुरुषा ईश्वरभावेन पुनराविर्भवन्ति[4]। संस्कारादेरक्षयेण पुना रागाभिव्यक्तेर्विवेकख्यातिं विना दोषदाहानुपपत्तेरित्यर्थः ॥५४॥

---

१. तत्र ऊर्ध्वगताविति भिक्षुः; उत्तरोत्तरविशिष्टजन्मलाभे इति वृत्तिः। कथमयमर्थः पूर्वसूत्रतो लब्ध इति न विज्ञायते।

२. जरामरणादिजं दुःखं सर्वेषु दर्शनेषु अतितरां प्रसिद्धम्। द्र० 'जरामरणदुःखयोः' (देवलवचनम्), जरामरणकृतं दुःखम् (सांख्यका०), अशनायापिपासे शोकं मोहं जरां मृत्युमत्येति (बृहदा० ३।५।१), जन्मजराव्याधिप्रायण-अनिष्टसंयोग-इष्टवियोग-प्रार्थितानुपपत्तिनिमित्त मनेकविधं यावद् दुःख मुत्पद्यते (न्यायमा० ४।१।५७)।

३. जरेति कार्यकारणसंघातपरिणामो बलीपलितादिलिङ्गः। मृत्युरिति तद्विच्छेदो विपरिणामावसानः। तौ जरामृत्यू शरीराधिकरणौ एवेति (बृहदा० ३।५।१ भाष्य)।

४. प्रकृतिलयविषये १।१९ योगसूत्रं द्र०।

ननु कारणं केनापि न कार्यतेऽतः स्वतन्त्रा कथं स्वोपासकस्य दुःखनिदान-मुत्थानं पुनः करोति, तत्राह—

अकार्यत्वेऽपि तद्योगः पारवश्यात्[1] ॥५५॥

प्रकृतेरकार्यत्वेऽप्यप्रेर्यत्वेऽप्यन्येच्छानधीनत्वेऽपि तद्योगः पुनरुत्थानौचित्यं तल्लीनस्य, कुतः पारवश्यात् पुरुषार्थतन्त्रत्वात्। विवेकख्यातिरूपपुरुषार्थवशेन प्रकृत्या पुनरुत्थाप्यते स्वलीन इत्यर्थः। पुरुषार्थादयश्च प्रकृतेर्न प्रेरकाः किन्तु प्रवृत्तिस्वभावायाः प्रवृत्तौ निमित्तानीति न स्वातन्त्र्यक्षतिः। तथा च योगसूत्रम्—निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदिति (३।४)। वरणभेदः प्रतिबन्धनिवृत्तिः ॥५५॥

प्रकृतिलयात् पुरुषस्योत्थाने [2]प्रमाणमप्याह—

स हि [3]सर्ववित् सर्वकर्ता ॥५६॥

स हि पूर्वसर्गे कारणलीनः सर्गान्तरे सर्ववित् सर्वकर्त्तेश्वर आदिपुरुषो भवति, प्रकृतिलये तस्यैव प्रकृतिपदप्राप्तौचित्यात्—तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य (बृहदा० ४।४।६) इत्यादिश्रुतेरित्यर्थः ॥५६॥

नन्वेवमीश्वरप्रतिषेधानुपपत्तिस्तत्राह—

---

१. अकार्यत्वम् = अप्रेर्यत्वम् = अन्येच्छानधीनत्वम् इति भिक्षुः। अकार्यत्वम् अप्रयोजकमिति वृत्तिः। अर्थोऽयमनुपपन्न एव। तद्योगः = बन्धयोगः। स च प्रधानस्य इति वृत्तिकारः; तद् = पुनरुत्थानम् इति भाष्यम्। पुनरुत्थान-रूपस्य फलस्य प्रसंगे प्रकृतेरकार्यत्वस्य कथनं किमर्थमिति दुरुत्तार्योऽयं प्रश्नः।

२. सूत्रस्यास्य प्रमाणपरता कथमुपपद्यत इति न विज्ञायते। 'हि'—शब्दस्य साथक्यमपि चिन्त्यम्।

३. सः = परमात्मा (वृत्ति)। सर्वंवित्त्वं सर्वकर्तृत्वं च आभिमानिक मौपाधिक-मिति वृत्तिमतम्। काल्पनिक मिदं व्याख्यानं प्रतीयते। सः = प्रकृतिलया-दुत्थितः पुरुषः (ग्रहीतृपुरुषः चित्तवान्) इत्यर्थ इति भिक्षुः। व्याख्यान-मिदं समीचीनम्। समाधिविशेषबलेन ये प्रकृतिलीना भवन्ति तेषु एव केचन सर्ववित्त्व-सर्वकर्तृत्व-संपन्ना भूत्वा जगन्निर्मातारो भवन्ति।

ईदृशेश्वरसिद्धिः सिद्धा[1] ॥५७॥

प्रकृतिलीनस्य जन्येश्वरस्य सिद्धि र्यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ( मुण्डक १।१।९ ) इत्यादिश्रुतिभ्यः सर्वसम्मतैव; नित्येश्वरस्यैव विवादास्पदत्वादित्यर्थः ।

अथवा 'स हि' इत्यादिसूत्रद्वयमेवं व्याख्येयम्[2]—पारवश्यपि प्रतिपादयति[3] स हीति सूत्रेण । स हि परः पुरुषसामान्यं सर्वज्ञानशक्तिमत् सर्वकर्तृताशक्तिमच्च, अयस्कान्तवत् सन्निधिमात्रेण प्रेरकत्वादित्यर्थः । तदा[4] चासमाप्तार्थपुरुषसान्निध्यात् तदर्थमन्येच्छानधीनाया अपि प्रकृतेः प्रवृत्तिरावश्यकीति ।

नन्वेवमीश्वरप्रतिषेधविरोध ( १।९२ द्र० ) स्तत्राह—ईदृशेश्वरसिद्धिः सिद्धा । सान्निध्यमात्रेणेश्वरस्य सिद्धिस्तु श्रुतिस्मृतिषु सर्वसम्मतेत्यर्थः ।

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ (कठ २।४।१२)
सृजते च गुणान् सर्वान् क्षेत्रज्ञस्त्वनुपश्यति ।
गुणान् विक्रियते सर्वानुदासीनवदीश्वरः ॥

---

१. सांख्ये जगत्सर्जकेश्वरचर्चाऽसीदिति विज्ञायते, अतएवेश्वरमधिकृत्योक्तम्—"सांख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः" इति ( ब्रह्म० २४०।१७ ); विरञ्च इति यत् प्रोक्तं कापिलज्ञानचिन्तकैः । स प्रजापतिरेवाहं चेतनात् सर्वलोककृत् ( शान्ति० ३४२।९४ ) । धर्मज्ञानवैराग्येश्वर्यादीनां यादृशे उत्कर्षे संपादिते सति चित्तमीश्वरतायुक्तं भवति तत् सांख्यशास्त्रे विवृतम् । प्रजापतेर्भूतादिनामाऽहंकार एव जगतो मूलमुपादानम् इति सांख्याः । अत उक्तम्—'त्रैलोक्यं सेश्वरं सर्वमहंकारे प्रतिष्ठितम् इति ( शान्ति० २१२।१९ ) ।

२. व्याख्यानमिदमप्राकरणिकम् । ३।५६-५७ सूत्रप्रतिपादित ईश्वरो जगत्सर्जकः, नायम् अनादिमुक्तचित्तव्यपदिष्टः क्लेशकर्मविपाकाशयै रपरामृष्टः इति वेदितव्यम् । ब्रह्माण्डानामनन्तत्वाद् अपरिसंख्येया इमे ईश्वराः; ईदृशः पुरुषः प्रजापतिर्वा हिरण्यगर्भो वा उच्यते । न खलु निर्गुणः पुरुषः स्वरूपतः ज्ञानक्रियादिशक्तिमान् । यद्यपि सोऽविकारी हेतुः गुर्णवैषम्यस्य तथापि तत्र न क्रियाशक्तिर्न वा ज्ञानमस्ति इति विज्ञेयम् ।

३. सूत्रद्वयमिदं व्याख्याय पारवश्यमपि प्रतिपादयति सहीति सूत्रेण इति क्वचित् पठ्यते, सोऽपपाठः ।

४. तथा च ( पाठा० ) ।

इत्यादि श्रुतिस्मृतयश्चैतादृशेश्वरे प्रमाणमिति ।।५७।।

द्वितीयाध्यायादिमारभ्यैतावत्पर्यन्तं सूत्रव्यूहैः प्रधानसृष्टिः समापिता । इतः परं मोक्षोपपत्त्यर्थं प्रधानसृष्टेर्ज्ञानिपुरुषं प्रत्यत्यन्तनिवृत्तिरत्यन्तलयाख्या वक्तव्या; तदुपपत्त्यर्थमादौ प्रधानसृष्टेः प्रयोजनं द्वितीयाध्यायादिसूत्रे दिङ्मात्रेणोक्तं विस्तरतः प्रतिपादयति—

प्रधानसृष्टिः [1]परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत् ।।५८।।

प्रधानस्य स्वत एव सृष्टिर्यद्यपि तथापि परार्थमन्यस्य भोगापवर्गार्थम् । यथोष्ट्रस्य कुङ्कुमवहनं स्वाम्यर्थं कुतोऽभोक्तृत्वादचेतनत्वेन भोगापवर्गासम्भवादित्यर्थः ।

ननु विमुक्तमोक्षार्थं स्वार्थं वेत्यनेन (२।१) स्वार्थापि सृष्टिरुक्तेति चेत्, सत्यम्; तथापि पुरुषार्थतां विना स्वार्थतापि न सिध्यति । स्वार्थो हि प्रधानस्य कृतभोगापवर्गात् पुरुषादात्मविमोक्षणमिति ।

ननु भृत्यतुल्या चेत् प्रकृतिस्तर्हि कथं स्वामिनो दुःखार्थमपि प्रवर्तत इति चेन्न, सुखार्थप्रवृत्त्यैव नान्तरीयकदुःखसम्भवाद् दुष्टभृत्यतुल्यत्वाद्वेति ।।५८।।

ननु प्रधानस्याचेतनस्य[2] स्वतः स्रष्टृत्वमेव नोपपद्यते, रथादेः परप्रयत्नेनैव प्रवृत्तिदर्शनादिति; तत्राह—

अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य[3] ।।५९।।

यथा क्षीरं पुरुषप्रयत्ननैरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते, एवमचेतनत्वेऽपि परप्रयत्नं विनापि महदादिरूपपरिणामः प्रधानस्य भवतीत्यर्थः । धेनुवद्वत्सायेत्य-

---

१. प्रधानस्य पारार्थ्यं प्रवृत्तिश्च नोपपद्यते इति अद्वैतिनो दर्शयन्ति (द्र० उपदेशसाहस्री १६।४८-५०, टीका च )।

२. प्रधान मचेतनमिति प्रसिद्धमेव । द्र० सांख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति····(शारीरक १।१।५),सांख्यपरिकल्पितमचेतनं प्रधानम् (शारीरक १।१।१८ ) । अचेतनं जडम्, चिद्रूपपुरुषसंबन्धशून्यम् । इदम् अव्यक्तास्था । यद् व्यक्तं तत् चिज्-जड-संयोग-जन्यम् इति विज्ञेयम् । अतएव बुद्ध्यादयः पदार्था न जड़स्वरूपा एव ।

३. द्र० यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते····( शारीरक २।२।३ )।

नेन (२।३७) सूत्रेणास्य न पौनरुक्त्यम्, तत्र करणप्रवृत्तेरेव विचारितत्वात्, धेनूनां चेतनत्वाच्चेति ।।५९।।

दृष्टान्तान्तरप्रदर्शनपूर्वकमुक्तार्थहेतुमाह—

कर्मवद् दृष्टेर्वा कालादेः[1] ।।६०।।

कालादेः कर्मवद्वा स्वतः प्रधानस्य चेष्टितं सिद्धयति दृष्टत्वात् । अथैको गच्छति ऋतुरितरश्च प्रवर्तत इत्यादिरूपं कालादिकर्म स्वत एव भवत्येवं प्रधानस्यापि चेष्टा स्यात् कल्पनाया दृष्टानुसारित्वादित्यर्थः ।।६०।।

ननु तथापि ममेदं भोगादिसाधनमिति प्रतिसन्धानाभावान् मूढायाः प्रकृतेः कदाचित् प्रवृत्तिरपि न स्याद्विपरीता च प्रवृत्तिः स्यात्, तत्राह—

स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ।।६१।।

यथा प्रकृष्टभृत्यस्य स्वभावात्[2] संस्कारादेव प्रतिनियतावश्यकी च स्वामिसेवा प्रवर्तते न तु स्वभोगाभिप्रायेण, तथैव प्रकृतेश्चेष्ठितं संस्कारादेवेत्यर्थः ।।५१।।

कर्माकृष्टेर्वाऽनादितः[3] ।।६२।।

वाशब्दोऽत्र समुच्चये । यतः कर्मानाद्यतः कर्मभिराकर्षणादपि प्रधानस्यावश्यकी व्यवस्थिता च प्रवृत्तिरित्यर्थः ।।६२।।

तदेवं प्रधानस्य परार्थतः स्रष्टृत्वे सिद्धे परप्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्षः सिद्ध्यतीत्याह प्रघट्टकेन—

विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके[4] ।।६३।।

---

१. 'कालादेः कर्मवद् वा प्रधानस्य चेष्टितम् दृष्टेः' इति भाष्यसंमतः सूत्रार्थः । 'अचेतनस्य कर्मणः कालादेव फलनिष्पत्तिः यथा तथा अचेतनं प्रधानं प्रवर्तते' इति वृत्तिसंमतोऽर्थः । सूत्रगतः शब्दप्रयोगो न भाष्यदर्शितं वृत्तिदर्शितं वार्थं सुष्ठु प्रकटयति । अस्पष्टार्थकमिदं सूत्रम् ।

२. तुल० 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयो स्वभावस्तु प्रवर्तते' ।।इति।। ( गीता ५।१४ ) ।

३. अनादित इति कर्माकृष्टे विशेषणमिति भाष्यम्; संसारस्येति वृत्तिःगं ( संसारस्येति अध्याहार्यम् ) ।

४. 'तु० कुम्भवत् प्रधानं पुरुषार्थं कृत्वा निवर्तते' इति षष्टितन्त्रीयं वचनम् ( सांख्यका० ५६ भाष्ये उद्धृतम् ) ।

विविक्तपुरुषज्ञानात् परवैराग्येण पुरुषार्थसमाप्तौ प्रधानस्य सृष्टिर्निवर्तते। यथा पाके निष्पन्ने पाचकस्य व्यापारो निवर्तत इत्यर्थः। इयमेवात्यन्तिकप्रलय इत्युच्यते[1]। तथा च श्रुतिः—तस्याभिध्यानाद्योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः ॥६३॥ ( श्वेताश्व० १।१० ) इति।

नन्वेवमेकपुरुषस्योपाधौ विवेकज्ञानोत्पत्त्या प्रकृतेः सृष्टिनिवृत्तौ सर्वमुक्तिप्रसङ्ग इति, तत्राह—

इतर इतरवत् तद्दोषात्[2] ॥६४॥

इतरस्तु विविक्तबोधरहित इतरवद् बद्धवदेव प्रकृत्या तिष्ठति; कुतस्तद्-दोषात्—तस्य प्रधानस्यैव तत्पुरुषार्थासमापनाख्यदोषादित्यर्थः। तदुक्तं योगसूत्रे—कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वाद् (२।२२) इति। तथा च पूर्वसूत्रे या प्रधाननिवृत्तिरुक्ता सा विविक्तबोद्धृपुरुषं प्रत्येवेति भावः। विश्वमायाश्रुतिरपि (श्वेताश्व० १।१०) ज्ञानिनं प्रत्येव मन्तव्या, अजामिति (श्वेताश्व० ४।५) श्रुत्यैकवाक्यत्वादिति ॥६४॥

सृष्टिनिवृत्तेः फलमाह—

द्वयोरेकतरस्य वौदासीन्यमपवर्गः[3] ॥६५॥

द्वयोः प्रधानपुरुषयोरेवौदासीन्यमेकाकिता, परस्परवियोग इति यावत्, सोऽ-

---

१. आत्यन्तिक-प्रलयः पुराणेषु बहुधा वर्णित। द्र० ब्रह्म० २३३।१-७५; विष्णु० ६।५।१-७।१०४; कूर्म० २।४५ अ०, वायु० १०२।४८-१३३; अग्नि० ३६९। १-३८२।३७; गरूड़० १।२१७।१-१७; भागवत० १२।४।२३-३४। आत्यन्तिकलयो नाम सर्वात्मना अज्ञानतत्कार्यनाशात्मको मोक्षः ( विष्णुणु० ६।५।१ श्रीधरी टीका )।

२. इतर इतरज् जहाति तद्दोषात् इति वृत्तिसमंतः पाठः। इतरः आत्मा; इतरत् प्रधानम्। इतरशब्दस्य यावर्थौ भाष्ये वृत्तौ च दर्शितौ तौ कथं लब्धाविति न सुष्ठु ज्ञायते। अस्पष्टार्थमिदं सूत्रम्। वृत्तिभाष्यदर्शिते मते तु सांख्यशास्त्र-संमते—इति ज्ञेयम्।

३. द्वयोः = प्रधानपुरुषयोरित्यर्थ इति व्याख्यातारः। कथं प्रधान-पुरुषरूपावर्थौ लब्धौ इति न स्फुटं प्रतीयते। द्वयोरित्यस्य विवक्षितार्थोऽपि न सुष्ठु विज्ञायते। तुल० 'सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्' (योगसू० ३।५५)। अपवर्गः खलु भोक्तृस्वरूपावधारणम्। भोगश्चापवर्गश्च चित्तस्थितौ धर्मौ। भोगावसानमपवर्गप्राप्तौ, अपवर्गावसानं च कैवल्याधिगमे—इति विज्ञेयम्। अपवर्गशब्दः कैवल्यार्थेऽपि प्रयुज्यते।

पवर्गः। अथवा पुरुषस्यैव कैवल्यमहं मुक्तः स्यामित्येव पुरुषार्थतादर्शनादित्यर्थः ॥६५॥

नन्वेकपुरुषमुक्तावेव विवेकाकारवृत्त्या विरक्ता प्रकृतिः कथमन्यपुरुषार्थं पुनः सृष्टौ प्रवर्तताम्। न च प्रकृतेरंशभेदान्नैष दोष इति वाच्यम्, मुक्तपुरुषोपकरणैरपि पृथिव्यादिभिरन्यस्य भोग्यसृष्टिदर्शनादिति; तत्राह—

अन्यसृष्ट्युपरागेऽपि न विरज्यते प्रबुद्धरज्जुतत्त्वस्येवोरगः[1] ॥६६॥

एकस्मिन् पुरुषे विविक्तबोधाद्विरक्तमपि प्रधानं नान्यस्मिन् पुरुषे सृष्टयुपरागाय विरक्तं भवति किन्तु तं प्रति सृजत्येव। यथा प्रबुद्धरज्जुतत्त्वस्येवोरगो भयादिकं न जनयति मूढं प्रति तु जनयत्येवेत्यर्थः। उरगतुल्यत्वं च प्रधानस्य रज्जुतुल्ये पुरुषे समारोपणादिति।

एवंविधं रज्जुसर्पादिदृष्टान्तानामाशयमबुद्ध्वैवाबुधाः केचिद्वेदान्तिब्रुवाः प्रकृतेरत्यन्ततुच्छत्वं मनोमात्रत्वं वा कल्पयन्ति। एतेन प्रकृतिसत्यतावादि-[2] साङ्ख्योक्तदृष्टान्तेन श्रुतिस्मृत्यर्था बोधनीयाः ॥६६॥

न केवलं [3]दृष्टान्तवत्त्वेनायमर्थः सिद्ध्यति—

---

१. अन्यसृष्ट्यु परागेऽपि = अन्यस्मिन् पुरुषे सृष्टयुपरागाय। न विरज्यते = न विरक्तं भवति—इति भाष्यतः प्रतीयते। अत्र अपिशब्दस्य स्वारस्यं चिन्त्यम्। 'प्रबुद्धरज्जुतत्त्वस्य उरग इव' इति दृष्टान्तः। अत्र विभक्तीनां यादृशः प्रयोगः तेन सह दार्ष्टान्तिकवाक्यीयविभक्तीनां समन्वयः कथं भवतीति विचार्यं सुधीभिः। उरग उरगभ्रम इत्यर्थ इति वृत्तिः (सर्पभ्रमः निवर्तते)। भाष्ये तु 'उरगः भयादिकं न जनयति' इत्यर्थः कृतः। एवंविधेऽर्थभेदे एकतरपक्षनिर्धारिकां युक्तिं न पश्यामः। अस्पष्टार्थमिदं सूत्रमिति।

२. इयं खलु सांख्यीया दृष्टिः—व्यक्तरूपेणाव्यक्तरूपेण वा गुणा स्तिष्ठन्ति, न तेषामत्यन्ताभावो भवति। कृतार्थं पुरुषं प्रति ते नष्टाः सन्तोऽव्यक्तीभूता भवन्ति; अन्ये अकृतार्थाः पुरुषा गुणबद्धास्तिष्ठन्त्येव। असंख्याताश्च पुरुषाः। अतएव सदसदात्मकमव्यक्तमिति पुराणादिषु बहुधोक्तम् (वायु० ४।१८)। अतएव गुणत्रयरूपं प्रधानमजातं ध्रुवमक्षयं नित्यमित्युच्यते पुराणेषु (वायु० ४।२०)। अतएव सदसच्चैव तत् सर्वमव्यक्तं त्रिगुणं स्मृतमिति गीयते (अश्व० ३९।२४)। महाप्रलये यथा महान् प्रधाने लीयते, तथा प्रधानं कस्मिन्नपि न लीयते (ब्रह्म० २३।२५-२६) इति विज्ञेयम्।

३. दृष्टान्ततावलेन (पाठा०)।

कर्मनिमित्तयोगाच्च[1] ॥६७॥

सृष्टौ निमित्तं यत् कर्म तस्य सम्बन्धादप्यन्यपुरुषार्थं सृजतीत्यर्थः ॥६७॥

ननु सर्वेषां पुरुषाणामप्रार्थकतया नैरपेक्ष्याविशेषेऽपि कञ्चित् प्रत्येव प्रधानं प्रवर्तते कञ्चित् प्रति निवर्तत इत्यत्र किं नियामकम् । न च कर्म नियामकम्, कस्य पुरुषस्य किं कर्मेत्यत्र नियामकाभावादिति; तत्राह—

नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥६८॥

पुरुषाणां नैरपेक्ष्येऽप्ययं मे स्वाम्ययमेवाहमित्यविवेकादेव प्रकृतिः सृष्ट्यादिभिः पुरुषानुपकरोतीत्यर्थः । तथा च यस्मै पुरुषायात्मानमविविच्य दर्शयितुं वासना वर्तते तं प्रत्येव प्रधानं प्रवर्तत इत्येव नियामकमिति भावः[2] ॥६८॥

प्रवृत्तिस्वभावत्वात् कथं विवेकेऽपि निवृत्तिरुपपद्यताम्; तत्राह—

नर्तकीवत् प्रवृत्तस्या प निवृत्तिश्चारितार्थ्यात्[3] ॥६९॥

पुरुषार्थमेव प्रधानस्य प्रवृत्तिस्वभावो न तु सामान्येन । अतः प्रवृत्तस्यापि प्रधानस्य पुरुषार्थसमाप्तिरूपे चरितार्थत्वे सति निवृत्तिर्युक्ता । यथा परिषद्भ्यो नृत्यदर्शनार्थं प्रवृत्ताया नर्तक्यास्तत्सिद्धौ निवृत्तिरित्यर्थः ॥६९॥

---

१. कर्मनिमित्तायोगाद् इति वृत्तिसमंतः पाठः; 'विवेकिनः प्रति कर्मणो निमित्तस्याभावात्' इति वृत्तिसंमतः सूत्रार्थः । हेतु-प्रदर्शनपरमिदं सूत्रम् । कर्मनिमित्तयोगेन हेतुना किं साध्यते किं वा निषेध्यते—इति न स्फुटं विज्ञायते ।

२. नेदं मन्तव्यं यत् प्रधानस्य प्रवृत्तिरिच्छापूर्विका भवति, जडत्वान् मूलायाः प्रकृतेः । ये च पुरुषा बद्धास्ते अनादिबद्धा एव, अतएव सा वासनाबलेन पुरुषं बध्नातीति कल्पनमयुक्तम् । सांख्यदृष्टिमज्ञात्वा बौद्ध आह—'अभिलाषानुसारेण प्रकृतिश्चेत् प्रयच्छति'·· इति, एतदसारम् । साम्यावस्थं प्रधानं वैषम्यावस्थापन्नं सत् महदादीनि वस्तूनि उत्पादयति—इत्यत्र हेत्वभावरूपो दोषः शङ्कराचार्येण प्रदत्तः (शारीरकभाष्य २।२।८–९); इदं मतमपि सांख्यदृष्ट्यज्ञानमूलकमिति प्रकृतिस्वभावविज्ञानतो स्फुटं विज्ञायते ।

३. चरितार्थतायां सत्यां निवृत्तिर्भवति इति मतं खण्डितं न्यायभाष्ये—'चरितार्थताविशेषः····शरीरारम्भः पुनर्दृश्यते' (३।२।६८) । प्रधानस्य निवृत्ति र्नोपपन्ना भवति इति ब्र० सू० द्वितीयाध्यायद्वितीयपादव्याख्यानेषु पूर्वाचार्याः प्रदर्शयन्ति । यथा प्रवृत्तिस्तथा निवृत्तिश्च प्रधानस्य स्वभाव एव, योग्येन हेतुना निवृत्तिराविर्भवति प्रवृत्तिर्वेति सांख्यीया दृष्टिः ।

निवृत्तौ हेत्वन्तरमाह—

दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥७०॥

पुरुषेण परिणामित्वदुःखात्मकत्वादिदोषदर्शनादपि लज्जितायाः प्रकृतेः पुनर्न पुरुषं प्रत्युपसर्पणं कुलवधूवत्। यथा स्वामिना मे दोषो दृष्ट इत्यवधारणेन लज्जिता कुलवधूर्न स्वामिनमुपसर्पति तद्वदित्यर्थः। तदुक्तं नारदीये—

सविकारापि मौढ्येन चिरं भुक्ता[1] गुणात्मना।
प्रकृतिर्ज्ञातदोषेयं लज्जयेव निवर्तते॥

इति। एतदेवोक्तं कारिकयापि—

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य॥ (६१) इति ॥७०॥

ननु पुरुषार्थं चेत् प्रधानप्रवृत्तिस्तर्हि बन्धमोक्षाभ्यां पुरुषस्य परिणामापत्तिरिति; तत्राह—

नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते[2] ॥७१॥

दुःखयोग-वियोगरूपौ बन्धमोक्षौ पुरुषस्य नैकान्ततस्तत्त्वतः, किन्तु चतुर्थसूत्रवक्ष्यमाणप्रकारेण (?) अविवेकादेवेत्यर्थः ॥७१॥

परमार्थतस्तु यथोक्तौ बन्धमोक्षौ प्रकृतेरेवेत्याह—

प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥७२॥

प्रकृतेरेव तत्त्वतो दुःखेन बन्धमोक्षौ ससङ्गत्वाद् दुःखसाधनैर्धर्मादिभिर्लिप्तत्वात्। यथा पशू रज्ज्वा लिप्ततया बन्धमोक्षभागी तद्वदित्यर्थः। एतदुक्तं कारिकया—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः[3]।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥ (६२)

इति। द्वयोरेकतरस्य वौदासीन्यमपवर्ग इति सूत्रे (३।६५) च यः पुरुषस्यापवर्ग उक्तः, स प्रतिबिम्बरूपस्य मिथ्यादुःखस्य वियोग एवेति ॥७२॥

---

१. भुक्त्वा (पाठा०)।

२. तुल० एवं बन्धमोक्षौ बुद्धावेव वर्तमानौ पुरुषे व्यपदिश्येते स हि तत्फलस्य भोक्तेति। बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बन्धः, तदर्थावसायो मोक्ष इति (व्यासभा० २।१८)। तदर्थावसायः = पुरुषार्थावसायः।

३. सांख्यसप्तत्यां खलु पुरुषस्थले कश्चिदिति पठ्यते। 'नापि मुच्यते' इति पाठान्तरमप्यत्र भाष्ये दृश्यते।

तत्र कैः साधनैर्बन्धः कैर्वा मोक्ष इत्याकाङ्क्षायामाह—

रूपैः सप्तभिरात्मानं बध्नाति प्रधानं [1]कोशकारवद्विमोचयत्येकरूपेण ॥७३॥

धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः सप्तभी रूपैः स्वधर्मैर्दुःखहेतुभिः प्रकृतिरात्मानं दुःखेन बध्नाति, कोशकारवत्; कोशकारकृमिर्यथा स्वनिर्मितेनावासेनात्मानं बध्नाति तद्वत्। सैव च प्रकृतिरेकरूपेण ज्ञानेनैवात्मानं दुःखान्मोचयतीत्यर्थः ॥७३॥

ननु बन्धमुक्ती अविवेकादिति यदुक्तं (द्र० ३।७१) तदयुक्तम्, अविवेकस्याहेयानुपादेयत्वात्। लोके दुःखस्य तदभावसुखादेरेव च स्वतो हेयोपादेयत्वात्। अन्यथा दृष्टहानिरित्याशङ्क्य चतुर्थसूत्रोक्तं (३।४) स्वयं विवृणोति—

निमित्तत्वमविवेकस्य न दृष्टहानिः[2] ॥७४॥

अविवेकस्य पुरुषेषु बन्धमोक्षनिमित्तत्वमेव पुरोक्तम् (१।५५, अन्यत्र च), नत्वविवेक एव ताविति नातो दृष्टहानिरित्यर्थः। एतच्च प्रथमाध्यायसूत्रेषु स्पष्टम् (द्र० १।५५-५७)।

अविवेकनिमित्तात् प्रकृतिपुरुषयोः संयोगस्तस्माच्च संयोगादुत्पद्यमानस्य प्राकृतदुःखस्य पुरुषे यः प्रतिबिम्बः स एव दुःखभोगो दुःखसम्बन्धस्तन्निवृत्तिरेव च मोक्षाख्यः पुरुषार्थ इति ॥७४॥

तदेवमादिसर्गमारभ्यात्यन्तिकलयपर्यन्तोऽखिलपरिणामः प्रधान-तद्विकाराणामेव, पुरुषस्तु कूटस्थपूर्णचिन्मात्र एवेत्यध्यायद्वयेन विस्तरतो विवेचितम्, तस्य विवेकस्य निष्पत्त्युपायेषु सारभूतमभ्यासमाह—

---

१. कोशकारोपमा शान्तिपर्वणि दृश्यते—'कोशकारो यथात्मानं कीटः समवरुन्धति। सूत्रतन्तुगुणैर्नित्यं तथायमगुणो गुणैः॥ इति (३०३।४)।

२. अविवेकस्य बन्धमोक्षनिमित्तत्वम्, नतु अविवेक एव बन्धमोक्षौ—इति सूत्रतात्पर्यमिति भिक्षुः। संसारस्य निमित्तत्वम् अविवेकस्य, स चाविवेको ज्ञानेनैव नाश्यः। निष्कामकर्मणा मुक्ति रिति मतेन सह ज्ञानान्मुक्तिरिति मतस्य न विरोधः, तस्य परम्परया मुक्तिहेतुत्वस्वीकारात्—इति सूत्रतात्पर्यं वृत्तिमते। अर्थोऽयं नितरां क्लिष्ट एव। निमित्तत्वमित्यस्य बन्धमोक्षनिमित्तत्वमिति योऽर्थो भाष्ये दर्शितः स कथं लब्ध इति न ज्ञायते। अविवेको मोक्षस्य निमित्तम्; यद्वा अविवेकजनितसंयोगजनित–दुःखसंबन्धस्य निवृत्तिः। इयमतितरां क्लिष्टकल्पनेति सुधीभिर्विभाव्यम्।

तत्त्वाभ्यासान्नेति नेतीति त्यागाद्विवेकसिद्धिः[1] ।।७५।।

प्रकृतिपर्यन्तेषु जडेषु नेति नेतीत्यभिमानत्यागरूपात् तत्त्वाभ्यासाद् विवेकनिष्पत्तिर्भवति । इतरत् सर्वमभ्यासस्याङ्गमात्रमित्यर्थः । तथा च श्रुतिः— 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति' (बृहदा० २।३।६), 'स एष आत्मा नेति नेती'त्यादिरिति (३।९।२६;४।२।४) ।

अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्णिते ।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते[2] ।। इति ।

यथा—

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ।।
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।।
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते[3] ।।१।। (मनु० ६।७६-७८)

इति । एतदेव कारिकयाऽप्युक्तम्—
एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ।। (६४) ।। इति ।

नास्मीत्यात्मनः कर्तृत्वनिषेधः । न म इति सङ्गनिषेधः, नाहमिति तादात्म्यनिषेधः, केवलमित्यस्य विवरणमविपर्ययाद्विशुद्धमिति, अन्तराऽन्तरा विपर्येणाविप्लुतमित्यर्थः । इदमेव केवलत्वं सिद्धिशब्देन सूत्रे प्रोक्तम् । विवेकख्यातिरविप्लवा हानोपायः (२।२६) इति योगसूत्रेणेतादृशज्ञानस्यैव मोक्षहेतुत्वसिद्धिरिति ।।७५।।

विवेकसिद्धौ विशेषमाह—

---

१. अस्मन्मते तु 'नेति नेतीति' यदुक्तं तेन 'न मे नाहं नास्मि' इत्येवंरूपोऽभ्यास एव लक्ष्यते; द्र० कारिका ६४ ।

२. वायौ पठ्यते–अव्यक्तादिविशेषान्ते विकारेऽस्मिन्नचेतने । चेतनाचेतनान्यत्वविज्ञानं ज्ञानमुच्यते (५९।५४) । अग्नि० ३७९।३ ख–४क इत्यत्रापि स्वल्पपाठभेदेन श्लोकोऽयमुपलभ्यते; द्र० मत्स्य० १४५।५५ अपि ।

३. अन्यत्रापि इमे श्लोकाः पठ्यन्ते, केचित् पाठभेदाश्च अवलोक्यन्ते । शान्ति० ३२९।४२–४३ इत्यत्र आद्यौ श्लोकौ पठ्येते; नारदपरि० उप० ४६-४७ अपि० द्र० ।

अधिकारिप्रभेदान्न नियमः[1] ।।७६।।

मन्दाद्यधिकारिभेदसत्त्वादभ्यासे क्रियमाणेऽप्यस्मिन्नेव जन्मनि विवेकनिष्पत्तिर्भवतीति नियमो नास्तीत्यर्थः। अत उत्तमाधिकारमभ्यासपाटवेनात्मनः सम्पादयेदिति भावः ।।७६।।

विवेकनिष्पत्त्यैव निस्तारो नान्यथेत्याह—

बाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः ।।७७।।

सकृत् सम्प्रज्ञातयोगेनात्मसाक्षात्कारोत्तरं मध्यविवेकावस्थे मध्यमविवेकेऽपि सति पुरुषे बाधितानामपि दुःखादीनां प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवतीत्यर्थः ।

विवेकनिष्पत्तिश्चापुनरुत्थानादसम्प्रज्ञातादेव भवतीत्यतस्तस्यां सत्यां न भोगोऽस्तीति प्रतिपादयितुं मध्यविवेकत इत्युक्तम्। मन्दविवेकस्तु साक्षात्कारात् पूर्वं श्रवणमननध्यानमात्ररूप इति विभागः ।।७७।।

जीवन्मुक्तश्च[2] ।।७८।।

जीवन्मुक्तोऽपि मध्यविवेकावस्थ एव भवतीत्यर्थः ।।७८।।

जीवन्मुक्ते प्रमाणमाह—

उपदेश्योपदेष्टृत्वात् तत्सिद्धिः[3] ।।७९।।

शास्त्रेषु विवेकविषये गुरुशिष्यभावश्रवणाज्जीवन्मुक्तसिद्धिरित्यर्थः। जीवन्मुक्तस्यैवोपदेष्टृत्वसम्भवादिति ।।७९।।

श्रुतिश्च[4] ।।८०।।

---

१. अधिकारभेदान्नियमभेदो भवतीति सार्वत्रिको नियमः। किमर्थं मतमिदं स्थलत्रयेषु विशेषेण उक्तम् (१।७०, ३।७६ ६।२२) इति न स्फुटं विज्ञायते।

२. विज्ञानामृतभाष्ये जीवन्मुक्तस्वरूपविचारो द्र० ( ४।१ पा० )। चकारस्य किमपि सार्थक्यं न विज्ञायते। इवार्थकश्चकार इति वृत्तिः। जीवन् मुक्त इव ( जीवन्निति प्रथमान्तोऽयं शब्दः )—इत्येव वृत्तिकारस्य तात्पर्यमिति प्रतिभाति, अन्यथा इवार्थक श्चकारः अनर्थकः स्यात्। काल्पनिकीयं व्याख्या। जीवन्मुक्त इति समस्तमेकं पदमिति विज्ञेयम्।

३. जीवितानां तत्त्वदर्शिनामुपदेशरूपं शास्त्रम् इति न्यायवार्त्तिके प्रोक्तम् (द्र० १।१।२)।

४. जीवन्मुक्तौ श्रुतयः—विमुक्तश्च विमुच्यते ( कठ० ५।१ ); यदा सर्वे प्रमुच्यन्ते⋯अत्र ब्रह्म समश्नुते ( बृहदा० ४।४।७; कठ० ६।१५ ); सचक्षुरचक्षुरिव⋯⋯( शारीरकभाष्योद्धृता श्रुतिः ); जीवन्नेव हि विद्वान् संहर्षायासाभ्यां मुच्यते ( न्यायवा० ४।२।२ धृता श्रुतिः )।

श्रुतिश्च जीवन्मुक्तेऽस्ति—

दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे ।
कुलालचक्रमध्यस्तो विच्छिन्नोऽपि भ्रमेद् घटः ॥

ब्रह्मैव सन् ब्रह्माप्येति (बृहदा० ४।४६) इत्यादिरिति । नारदीयस्मृतिरपि—

पूर्वाभ्यासबलात् कार्ये न लोको न च वैदिकः ।
अपुण्यपापः सर्वात्मा जीवन्मुक्तः स उच्यते ॥ इति ॥८०॥

ननु श्रवणमात्रेणाऽप्युपदेष्टृत्वं स्यात्; तत्राह—

इतरथाऽन्धपरम्परा ॥८१॥

इतरथा मन्दविवेकस्याप्युपदेष्टृत्वेऽन्धपरम्परापत्तिरित्यर्थः । सामग्र्येणात्मतत्त्वमज्ञात्वा चेदुपदिशेत् कस्मिश्चिदंशे स्वभ्रमेण शिष्यमपि भ्रान्ती कुर्यात्, सोऽप्यन्यं सोऽप्यन्यमित्येवमन्धपरम्परेति ॥८१॥

ननु ज्ञानेन कर्मक्षये सति कथं जीवनं स्यात्, तत्राह—

चक्रभ्रमणवद्[1] धृतशरीरः[2] ॥८२॥

कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् स्वयमेव कियत्कालं[3] चक्रं भ्रमति । एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं शरीरं धृत्वा जीवन्मुक्तस्तिष्ठतीत्यर्थः ॥८२॥

ननु ज्ञानहेतुसम्प्रज्ञातयोगेन भोगादिवासनाक्षये कथं शरीरधारणम् ? न च योगस्य संस्काराभिभावकत्वे किं मानमिति वाच्यम्, व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः (३।९) इति योगसूत्रतस्तत्सिद्धेः । चिरकालीनस्य विषयान्तरावेशस्य विषयान्तरसंस्काराभिभावकतया लोकेऽप्यनुभवाच्चेति; तत्राह—

संस्कारलेशतस्तत्सिद्धिः[4] ॥८३॥

---

१. अस्मिन्नर्थे कुलालचक्रोपमा बहुत्र दृश्यते—कुलालचक्रवत् प्रवृत्तवेगस्य···· (शारीरक० ४।१।१५) ।

२. द्र० येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयात् देहपातो यावदित्यर्थः (छान्दोग्य० ६।१४।२ शां० भा०) ।

३. कालक्षेपविषये द्र० छान्दोग्य० ६।१४।२ भाष्यम् ।

४. द्र० बाधितमपि मिथ्याज्ञानं द्विचन्द्रादिज्ञानवत् संस्कारवशात् कञ्चित्कालमनुवर्तते एव (शारीरक० ४।१।१५); अविद्याया आवरणशक्ति नश्यते तत्त्व-

शरीरधारणहेतवो ये विषयसंस्कारास्तेषामल्पावशेषात् तस्य शरीरधारणस्य सिद्धिरित्यर्थः । अत्र चाविद्यासंस्कारलेशस्य सत्ता नापेक्ष्यते । अविद्यया जन्मादिरूपकर्मविपाकारम्भमात्रे हेतुत्वात्, योगभाष्ये व्यासैस्तथा व्याख्यातत्वात्[1], वीतरागजन्मादर्शनादिति न्यायाच्च (३।१।२५), न तु प्रारब्धफलककर्मभोगेऽपीति । यत्र च नियमेनाऽविद्याऽपेक्ष्यते स प्रयासविशेषरूपो भोगो मूढेष्वेवास्ति, जीवन्मुक्तानां तु भोगाभास एवेति प्रागुक्तम् ।

यत् तु कश्चिद्—अविद्यासंस्कारलेशोऽपि[2] जीवन्मुक्तस्य तिष्ठतीत्याह; तन्न—धर्माधर्मोत्पत्तिप्रङ्गात्, अन्धपरम्पराप्रसङ्गात्, अविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभावाच्च । एतच्च ब्रह्ममीमांसाभाष्ये (४।१पा०) प्रपञ्चितमिति ॥८३॥

शास्त्रवाक्यार्थमुपसंहरति—

विवेकान्निःशेषदुःखनिवृत्तौ[3] कृतकृत्यता नेतरान्नेतरात्[4] ॥८४॥

---

ज्ञानेन, विक्षेपशक्तिस्तु वर्तत एव । अयमेव अविद्यालेश इति केचनाद्वैतिनः । तत्त्वज्ञानिन्यदृढो रागोऽस्त्येवेति सिद्धान्तितं बृहदारण्यकवार्त्तिके (१।४।१५३९; गिरिटीकाऽपि द्र०) । द्र० पञ्चदशी ७।१९१ ।

१. २।१३ भाष्यं सवार्त्तिकं द्र० । ४।११ भाष्ये अन्यत्रापि चाविद्याकार्याणि विवृतानि ।

२. जीवन्मुक्ते अविद्यालेशो वर्तते इति पञ्चदश्यां विवृतम् (२।१०७ ; जीवन्मुक्ते अविद्यालेशसत्ता प्रत्यक्तत्त्वप्रदीपिकाकारेणापि अभ्युपगता; अज्ञानस्य आवरकांशस्य नाशो भवति तत्त्वज्ञानेन, विक्षेपांशस्य बाधने सत्यपि प्रारब्धक्षयपर्यन्तं स तिष्ठत्येव; न सोऽनिष्टमुत्पादयति भृष्टबीज इव । इदमेवाविद्यालेशस्वरूपं पद्मपादमते । तुल० अनेन सूत्रेण जीवन्मुक्तानां वृत्तिरूपोऽप्याविद्यालेशस्तिष्ठतीति अभ्युपगम आधुनिकानां वेदान्तिब्रुवाणामपसिद्धान्त इति निर्णेयम् (योगवा० २।११) ।

३. द्र० 'सांख्यैः' 'गुणपुरुषान्तरज्ञानात् कैवल्यम् इति वदद्भिः (शारीरक० १।४।४); चेतनात्मविज्ञानाद्धि मृत्युमुखात् प्रमुच्यते इति हि तेषां [ = सांख्यानाम्] अभ्युपगमः (शारीरक, अत्रैव) ।

४. इतरात् = कर्मण इति वृत्तिः; सांशयिकोऽयमर्थः । जीवन्मुक्तावस्थायामपि कृतकृत्यता न परिपूर्णा भवति, विवेकपूर्वकचित्तलये एव कृतकृत्यता निरतिशया जायते इति विज्ञेयम् ।

उक्ताया विवेकसिद्धितः परवैराग्यद्वारा सर्ववृत्तिनिरोधेन यदा निःशेषतो बाधिताबाधितसाधारण्येनाखिलदुःखं निवर्त्तते तदैव पुरुषः कृतकृत्यो भवति। नेतराज्जीवन्मुक्त्यादेरपीत्यर्थः। नेतरादिति वीप्साऽध्यायसमाप्तौ ॥८४॥

अत्यन्तलयपर्यन्तः कार्योऽव्यक्तस्य नात्मनः।
प्रोक्त एवं विवेकोऽत्र परवैराग्यसाधनम् ॥

इति विज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये वैराग्याध्यायस्तृतीयः ॥

# चतुर्थोऽध्यायः

शास्त्रसिद्धाख्यायिकाजात[1]-मुखेनेदानीं विवेकज्ञानसाधनानि[2] प्रदर्शनीयानीत्येतदर्थं चतुर्थाध्याय आरभ्यते ।

[3]राजपुत्रवत् तत्त्वोपदेशात् ॥ १ ॥

पूर्वपादशेषसूत्रस्थविवेकोऽनुवर्त्तते । राजपुत्रस्येव तत्त्वोपदेशाद्विवेको जायत इत्यर्थः ।

अत्रेयमाख्यायिका—कश्चिद्राजपुत्रो गण्डर्क्षजन्मा पुरान्निःसारितः शबरेण केनचित् पोषितोऽहं शबर इत्यभिभन्यमान आस्ते, तं जीवन्तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति—न त्वं शबरो राजपुत्रोऽसीति । स यथा झटित्येव चण्डालाभिमानं त्यक्त्वा तात्त्विकं राजभावमेवालम्बते राजाहमस्मीति; एवमेवादिपुरुषात् परिपूर्णचिन्मात्रेणाभिव्यक्तादुत्पन्नस्त्वं तस्यांश इति कारुणिकोपदेशात् प्रकृत्यभिमानं त्यक्त्वा ब्रह्मपुत्रत्वादहमपि ब्रह्मैव न तु तद्विलक्षणः संसारीत्येवं स्वस्वरूपमेवालम्बत इत्यर्थः । तथा गारुडे—

---

१. आख्यायिका-वाङ्मयमतिप्राचीनम्, चरकसंहितायां (शारीर० ४।४ सूत्र० १५।७), तैत्तिरीयारण्यके (१।६।३), अर्थशास्त्रादिषु च अस्य स्मरणात् । षष्टितन्त्रशास्त्रे आख्यायिकासत्ताऽसीदिति सप्ततिवाक्यतो विज्ञायते ।

२. आख्यायिकाबलेनापि अर्था ज्ञाप्यन्ते इति पूर्वाचार्याः । तथाहि—विध्यपेक्षितार्थवादसिद्धयमर्थमाख्यायिकेतिभावः (बृहदा० २।४।१ गिरिटीका); पूर्वपक्षसिद्धान्ताख्यायिकारूपेण समर्प्यमाणोऽर्थः श्रोतुश्चित्तस्य वशमेति····एवमाचारवतोर्वक्तृ-श्रोत्रोराख्यायिकानुगतोऽर्थोऽवगम्यते। केवलतर्कबुद्धिनिषेधार्था चाख्यायिका (बृहदा० २।१ शां० भा०) ।

३. बृहदारण्यकभाष्ये उक्तम्—अत्र च संप्रदायविद आख्यायिकां संप्रचक्षते । कश्चित् किल राजपुत्रो जातमात्र एव····राजाहमस्मीति (२।१।२०); अत्राह गिरिः—द्रविडाचार्यसंमतिमाह—अत्र चेति। द्रष्टव्यं च बृहदारण्यकवार्त्तिकम्-'× × व्याधभावनयाञ्चितः । राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते । तथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥ (पृ० ७१; द्र० आनन्दगिरिकृतं व्याख्यानमपि; पृ० ९००, १८६५ च द्र० । इयमाख्यायिका 'आत्मलाभान्नपरं विद्यते' इति आपस्तम्बधर्मसूत्रव्याख्याने हरदत्तेनोदाहृता ।

यथैकहेममणिना सर्वं हेममयं जगत् ।
तथैव ज्ञातमीशेन ज्ञातेनाप्यखिलं भवेत् ।।
ग्रहाविष्टो द्विजः कश्चिच्छुद्रोऽहमिति मन्यते ।
ग्रहनाशात् पुनः स्वीयं ब्राह्मण्यं मन्यते यथा ।।
मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते ।
मायानाशात् पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते ।। इति ।।

स्त्रीशूद्रादयोऽपि ब्राह्मणेन ब्राह्मणस्योपदेशं श्रुत्वा कृतार्थाः स्युरित्येतदर्थमाख्यायिकान्तरं दर्शयति—

पिशाचवदन्यार्थोपदेशेऽपि[1] ।।२।।

अर्जुनार्थं श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्य पिशाचस्य विवेकज्ञानं जातमेवमन्येषामपि भवेदित्यर्थः ।।२।।

यदि च सकृदुपदेशाज् ज्ञानं न जायते तदोपदेशावृत्तिरपि कर्त्तव्येतीतिहासान्तरेणाह—

आवृत्तिरसकृदुपदेशात्[2] ।।३।।

उपदेशावृत्तिरपि कर्तव्या छान्दोग्यादौ (६।१ख०) श्वेतकेत्वादिकं प्रत्यारुणिप्रभृतीनामसकृदुपदेशेतिहासादित्यर्थः ।।३।।

वैराग्यार्थं निदर्शनपूर्वकमात्मसङ्घातस्य भङ्गुरत्वादिकं प्रतिपादयति—

पितापुत्रवदुभयोर्दृष्टत्वात्[3] ।।४।।

स्वस्य पितापुत्रयोरिवात्मनोऽपि मरणोत्पत्त्योर्दृष्टत्वादनुमितत्वाद्वैराग्येण विवेको भवतीत्यर्थः । तदुक्तम्—

---

१. पिशाचज्ञानोत्पत्तिकथा नेतिहासपुराणे उपलभ्यते । 'कश्चिदाचार्यः शिष्यमुपदेशं दत्तवान्' इति वृत्तिकारः । वस्तुतस्तु अत्र न पिशाचशब्दः, प्रत्युत पिशाचकेति कस्यचित् मनुष्यस्य नाम, यथोक्तं नैष्कर्म्यसिद्धौ—'वाक्यश्रवणमात्राच्च पिशाचकवदाप्नुयात्' (२।३) इति । व्याख्यातं च ज्ञानोत्तमेन—'पिशाचको नाम कश्चिदरण्यं गतः स्वकर्मणा तत्राधीयमानं तत्त्वमस्यादिवाक्यमाकर्ण्य जन्मान्तरसंस्कारवशात् तदैव वाक्यार्थं प्रतिपेदे' इति ।

२. सूत्रमिदं भास्करेण स्मृतम्—तथा च व्याससूत्रं कपिलसूत्रं च—आवृत्तिरसकृदुपदेशात् (ललितासहस्रनामभाष्यम्, पृ० १९४; द्र० ब्रह्मसू० ४।१।१) ।

३. नात्र कापि आख्यायिकोक्ता । उभयोरिति शब्देन कथं 'मरणोत्पत्त्योः' ग्रहणं कृतमिति न विज्ञायते । वृत्तिकारेण अन्यैवाख्यायिका काचिदुक्ता । अस्पष्टार्थकमिदं सूत्रम् ।

आत्मनः पितृपुत्राभ्यामनुमेयौ भवात्ययौ । इति ॥४॥

इतः परमुत्पन्नज्ञानस्य विरक्तस्य च ज्ञाननिष्पत्त्यङ्गान्याख्यायिकोक्तदृष्टान्तैर्दर्शयति—

श्येनवत् सुखदुःखी त्यागवियोगाभ्याम्[1] ॥५॥

परिग्रहो न कर्तव्यो यतो द्रव्याणां त्यागेन लोकः सुखी वियोगेन च दुःखी भवति श्येनवदित्यर्थः । श्येनो हि सामिषः केनाप्यपहृत्यामिषाद्वियोज्य दुःखी क्रियते, स्वयं चेत् त्यजति तदा दुःखाद्विमुच्यते । तदुक्तम्—

सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ॥ (भाग० ११।९।२)[2] ।

इति । तथा मनुनाप्युक्तम्—

नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते ॥ इति (६।७८) ॥५॥

[3]अहिनिर्ल्वयनीवत्[4] ॥६॥

---

१. स्कन्द-नागरखण्डे ( १८५।१-२२ ) ऽपि कथेयमुपलभ्यते । अनिरुद्धप्रोक्ताख्यायिका ईषद्भिन्ना ।

२. द्र० शान्ति १७८।९ (सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः । आमिषस्य परित्यागात् कुररः सुख मेधते) ।

३. क्वचित् निर्ल्वयिनीति पठ्यते; निर्ल्वयनीत्येव साधुः पाठः, बृहदारण्यके (४।४।७) तथा दर्शनात्, नितरां लूयते स्वशरीराद् बहिः क्रियते सरीसृपैरिति निर्ल्वयनी भुजङ्गमुक्ता त्वगिति गणरत्नमहोदधिकारः (२।१४७) । ग्रन्थस्यास्य समीक्षात्मके संस्करणे किमपि पाठान्तरमस्य न दृश्यते) ।

४. अहिनिर्ल्वयनी–उपमा नैकार्थज्ञापनाय प्रयुक्ता; तथाहि—अहिनिर्ल्वयनी यद्वद् द्रष्टुः पूर्वं भयप्रदा । ततोऽस्य न भयं किञ्चिद् तद्वद् द्रष्टुरयं जनः ॥ ( शिवगीता १३।३० ); अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति ( आत्मोपनिषद् १७ ); अहिनिर्ल्वयनी सर्पनिर्मोको जीववर्जितः । वल्मीके पतितस्तिष्ठेत् तं सर्पो नाभिमन्यते ॥ एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ॥ ( वराहोपनिषद् २।६७-६८ ); 'तद् यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते(बृहदा० ४।४।७; उद्धृतमिदं वाक्यमज्ञानबोधिन्याम्, पृ० ६६); जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् (शान्ति० २६३।१५); प्राणी मुञ्चति सर्पवज् जगति यां निर्मोकमायाकृतिम्····

यथाऽहि र्जीर्णां त्वचं परित्यजत्यनायासेन हेयबुद्ध्या तथैव मुमुक्षुः प्रकृतिं बहुकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेदित्यर्थः—जीर्णां त्वचमिवोरग इति (द्र० कूर्म २।३६।४०) ॥६॥

त्यक्तं च प्रकृत्यादिकं पुनर्न स्वीकुर्यादित्यत्राह—

छिन्नहस्तवद्वा ॥७॥[1]

यथा छिन्नं हस्तं पुनः कोऽपि नादत्ते तथैवैतत् त्यक्तं पुनर्नाभिमन्येतेत्यर्थः। वा-शब्दोऽप्यर्थे ॥७॥

असाधनानुचिन्तनं बन्धाय भरतवत् ॥८॥

विवेकस्य यदन्तरङ्गसाधनं न भवति स चेद्धर्मोऽपि स्यात् तथापि तदनुचिन्तनं तदनुष्ठाने चित्तस्य तात्पर्यं न कर्तव्यं यतस्तद्बन्धाय भवति विवेकविस्मारकतया भरतवत्। यथा भरतस्य राजर्षेर्धर्म्यमपि दीनानाथहरिणशावकस्य पोषणमित्यर्थः। तथा च जडभरतं प्रकृत्य विष्णुपुराणे[2]—

---

(नागरखण्ड २६२।८०); विमुक्तः सर्वपापेभ्यो मुक्तत्वच इवोरगः (शान्ति० २४९।११), एवं ज्ञात्वा महाविष्णोर्माहात्म्यं लक्षणं तथा। पूर्वबन्धानुगं लिङ्गं जीर्णां त्वचमिवोरगः॥ विसृज्य परमं याति नारायणमनामयम्। (स्कन्द, वैशाखमास १९।६७-६८); सर्पो जीर्णामिव त्वचं जहाति पापं सशिरस्कोऽभ्युपेत्य (निरुक्त १४।३४ धृता ऋक्), आत्मयाजी श्रेयान् देवयाजी ३····आत्मयाजीति ह ब्रूयात्।····स यथाहिस्त्वचो निर्मुच्येत एव मस्मान् मर्त्याच् छरीरात् पाप्मनो निर्मुच्यते स····(शतपथ० ११।२।६।१३-१४); यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुच्यते इति (शारीरक० १।३।१३); पाप्मानमुत्सृजेद् यत्र जीर्णां त्वचमिवोरग. (कूर्मपु० २।३६।४०)। निर्ल्वयनीस्नेहेन अहिः आहितुण्डिकेन बद्धो भवतीति वृत्तिकारः।

१. कश्चिन्मुनिः स्वहस्तं छेदितवान् इत्येवंरूपा काचिदत्राख्यायिका वृत्तिकृता दर्शिता। लिखित-मुनिना स्वहस्तस्य छेदनं विहित मिति शान्तिपर्वणि उक्तम् (२३।१८-३६)। वृत्तिदर्शितोऽर्थ एव समीचीनः, आख्यायिकापरत्वात् सूत्रस्य। छिन्नहस्तोपमायाः सार्थक्यं शंकराचार्येण इत्थं दर्शितमुपदेश-साहस्र्याम्—'छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशिष्यते। तथा शिष्टेन सर्वेण येन येन विशेष्यते॥ तस्मात् त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम्। अनात्मत्वेन तस्माज् ज्ञो मुक्तः सर्वैः विशेषणैः' ॥ (पद्यभाग ६।१-२)।

२. पूर्वार्धः २।१३।३० श्लोके, उत्तरार्धस्तु २।१३।२२ इत्यत्र अंशतः प्राप्यते। अत्र २।१३।२३ श्लोकोऽपि द्र०।

चपलं चपले तस्मिन् दूरगं दूरगामिनि ।
आसीच्चेतः समासक्तं तस्मिन् हरिणपोतके ॥८॥

बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत्[1] ॥९॥

बहुभिः सङ्गो न कार्यः । बहुभिः सङ्गे हि रागाद्यभिव्यक्त्या कलहो भवति योगभ्रंशकः । यथा कुमारीहस्तशङ्खानामन्योऽन्यसङ्गे न झणत्कारो भवतीत्यर्थः ॥९॥

द्वाभ्यामपि तथैव[2] ॥१०॥

द्वाभ्यां योगेऽपि तथैव विरोधो भवत्यत एकाकिनैव स्थातव्यमित्यर्थः । तदुक्तम्[3]—

वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः[4] ॥इति
(भाग० ११।९।१०) ॥१०॥

आशा वैवश्यविरसे चित्ते सन्तोषवर्जिते ।
म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति ॥

(योगवा० २।१५।९) इति वचनान्निराशता योगिनाऽनुष्ठेयेत्याह—

निराशः सुखी पिङ्गलावत्[5] ॥११॥

आशां त्यक्त्वा पुरुषः सन्तोषाख्यसुखवान् भूयात् पिङ्गलावत् । यथा पिङ्गला नाम वेश्या कान्तार्थिनी कान्तमलब्ध्वा निर्विण्णा सती विहायाशां सुखिनी बभूव तद्वदित्यर्थः । तदुक्तम्[6]—

---

१. कुमारीशङ्खोपमा भागवते (११।९।५-६); नागरखण्डे (१८५।७१-८७) च द्रष्टव्या ।

२. यतिभिस्त्रिभिरेकत्र द्वाभ्यां पञ्चभिरेव वा । न स्थातव्यं कदाचित् स्यात् तिष्ठन्तो नाशमाप्नुयुः ॥ बहुत्वं यत्र भिक्षूणां वार्तास्तत्र विचित्रकाः । स्नेह-पैशुन्यमात्सर्यं भिक्षूणां नृपते रपि ॥ (बृ० परा० स्मृति १२।१३५-१३६) ।

३. द्र० नागरखण्ड १८५।८७ ।

४. शान्तिपर्वणि दृश्यते—बहूनां कलहे नित्यं द्वयोः संकथनं ध्रुवम् । एकाकी विचरिष्यामि कुमारीशङ्खको यथा ॥१७८।१३॥

५. पिङ्गलाकथा बहुत्र दृश्यते—नागरखण्ड १८४।१९-४३; शिवपु० ५।२।२९; शान्ति० १७४।५६-६२; आशा बलवती राजन् नैराश्यं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला ॥ (शान्ति० १७८।८) ।

६. आशादूषणं-तृष्णादोषौ बहुत्र वर्णितौ; द्र० नागरखण्ड १८४।३३-४३; आशा हि परमं दुःखं नैराश्यं परमं सुखम् (ब्रह्मवै०४।९७।५६) ।

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ।।इति (भाग०११।८।४४) ।।

नन्वाशानिवृत्त्या दुःखनिवृत्तिः स्यात् सुखं तु कुतः साधनाभावादिति; उच्यते—चित्तस्य सत्त्वप्राधान्येन स्वाभाविकं यत् सुखमाशया पिहितं तिष्ठति तदेवाशाविगमे लब्धवृत्तिकं भवति तेजःप्रतिबद्धजलशैत्यवदिति, न तत्र साधनापेक्षा । एतदेव चात्मसुखमित्युच्यत[1] इति ।।११।।

योगप्रतिबन्धकत्वादारम्भोऽपि भोगार्थं न कर्तव्योऽन्यथैव तदुपपत्तेरित्याह—

अनारम्भेऽपि परगृहे सुखी सर्पवत्[2] ।।१२।।

सुखी भवेदिति शेषः । शेषं सुगमम्; तदुक्तम्—
गृहारम्भो हि दुःखाय न सुखाय कथञ्चन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ।।
(शान्ति० १७८।१०) ।।१२।।

शास्त्रेभ्यो गुरुभ्यश्च सार एव ग्राह्योऽन्यथाभ्युपगमवादादिभिरंशतोऽसारभागेऽन्योऽन्यविरोधेनार्थबाहुल्येन चैकाग्रताया असम्भवादित्याह—

बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत्[3] ।।१३।।

कर्त्तव्यमिति शेषः । अन्यत् सुगमम् । तदुक्तम्—
अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ।। (भाग० ११।८।१०)

इति । मार्कण्डेयपुराणे च—
सारभूतमुपासीत ज्ञानं यत् स्वार्थसाधकम्[4] ।
ज्ञानानां बहुता यैषा योगविघ्नकरी हि सा ।।
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
असौ कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात् ।। इति
(मार्क ४१।१८-१९) ।।१३।।

---

१. चार्थे सुखम् (पाठा०) ।

२. भागवते पठ्यते—गृहारम्भोऽतिदुःखाय विफलश्च ध्रुवात्मनः । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते (११।९।१५); द्र० नागरखण्ड १८५।२३-४१ ।

३. द्र० नागरखण्ड—१८५।४२-५३ क० । षट्पदकथनं नाख्यायिका, अतः आख्यायिकाध्याये अस्योपस्थापनं चिन्त्यम् । यद्वा दृष्टान्ता अपि अस्मिन्नध्याये संगृहीता इति स्वीकार्यम् ।

४. शास्त्रसाधकम् इति मुद्रितपुराणपाठः ।

साधनान्तरं यथा तथा भवत्वेकाग्रतयैव समाधिपालनद्वारा विवेकसाक्षात्कारो निष्पादनीय इत्याह—

इषुकारवन्नैकचित्तस्य समाधिहानिः[1] ॥१४॥

यथा शरनिर्माणायैकचित्तस्येषुकारस्य पार्श्वे राज्ञो गमनेनापि न वृत्त्यन्तर-निरोधो हीयत एवमेकाग्रचित्तस्य सर्वथापि न समाधिहानिर्वृत्त्यन्तरनिरोध-क्षतिर्भवति। ततश्च विषयान्तरसञ्चाराभावे ध्येयसाक्षात्कारोऽप्यवश्यं भवतीत्येकाग्रतां कुर्यादित्यर्थः। तदुक्तम्—

तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे। इति
(भाग० ११।९।१३) ॥१४॥

सत्यां शक्तौ ज्ञानबलाच्चेच्छास्त्रकृतनियमो वृथा लङ्घ्यते तदा ज्ञानानिष्प-त्त्याऽनर्थक्यं योगिनो भवतीत्याह—

कृतनियमलङ्घनादानर्थक्यं लोकवत्[2] ॥१५॥

यः शास्त्रेषु कृतो योगिनां नियमस्तस्योल्लङ्घने ज्ञाननिष्पत्त्याख्योऽर्थो न भवति लोकवत्। यथा लोके भैषज्यादौ विहितपथ्यादीनां लङ्घने तत्तत्सिद्धिर्न भवति तद्वदित्यर्थः। अशक्त्या ज्ञानरक्षार्थं वा लङ्घने तु न ज्ञानप्रतिबन्धः।

अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः।
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते[3] ॥ (अश्व० २६।१६)

इति मोक्षधर्मादिभ्यः, वसिष्ठादिस्मृतिभ्यश्च।[4] अत एव विष्णुपुराणादौ

---

१. शान्ति० १७८।१२ इत्यत्र इषुकारकथा स्मृता; भागवतेऽपि (११।९।१३)। शारीरकभाष्येऽपि दृष्टान्तोऽयं प्रदत्तः—इषुकारन्यायेन मुग्धो भविष्यति (३।२।१०) इति। द्र० बृहदारण्यकभाष्यवार्त्तिक-(१।५।१०) टीका, द्र० नागरखण्ड १८५।५३ तः।

२. अत्र न कश्चिदाख्यायिका-विशेषः।

३. ब्रह्मचारी भवत्ययमिति मुद्रितभारतपाठः।

४. 'इति··स्मृतिभ्यश्च' इत्यस्य स्थाने क्वचित् कोशे इत्थं पठ्यते—'न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम्। न ददर्श च कर्माणि शास्त्राणि जगृहे न च॥ इत्याद्यनुगीतादिवाक्येभ्यः।' न पपाठेति श्लोकः विष्णुपुराणे (२।१३।३९) दृश्यते।

वृथाकर्मत्यागिन एव पाषण्डतया निन्दिताः—पुंसां जटाधरणमौण्ड्यवतां वृथैव (विष्णु० ३।१८।१०३) इत्यादिनेति ।।१५।।

नियमविस्मरणेऽप्यानर्थक्यमाह—

तद्विस्मरणेऽपि भेकीवत् ।।१६।।

सुगमम् । भेक्याश्चेयमाख्यायिका—कश्चिद्राजा मृगयां गतो विपिने सुन्दरीं कन्यां ददर्श । सा च राज्ञा भार्याभावाय प्रार्थिता नियमं चक्रे—यदा मह्यं त्वया जलं प्रदर्श्यते तदा मया गन्तव्यमिति । एकदा तु क्रीडया परिश्रान्ता राजानं पप्रच्छ—कुत्र जलमिति । राजापि समयं विस्मृत्य जलमदर्शयत् । तत्र सा भेकराजदुहिता कामरूपिणी भेकी भूत्वा जलं विवेश; ततश्च राजा जालादिभिरन्विष्यापि न तामविन्ददिति ।।१६।।

श्रवणवद् गुरुवाक्यमीमांसाया अप्यावश्यकत्व इतिहासमाह—

नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते[1] विरोचनवत् ।।१७।।

परामर्शो गुरुवाक्यतात्पर्यनिर्णायको विचारस्तं विनोपदेशवाक्यश्रवणेऽपि तत्त्वज्ञाननियमो नास्ति, प्रजापतेरुपदेशश्रवणेऽपीन्द्रविरोचनयोर्मध्ये (छान्दोग्य० ८।७८) विरोचनस्य परामर्शाभावेन भ्रान्तत्वश्रुतेरित्यर्थः । अतो गुरूपदिष्टस्य मननमपि कार्यमिति । दृश्यते चेदानीमप्येकस्यैव तत्त्वमस्युपदेशस्य [2]नानारूपैरर्थैः सम्भावना—अखण्डत्वमवैधर्म्यंलक्षणाभेदोऽविभागश्चेति[3] ।।१७।।

अतएव च परामर्शो दृश्यत इत्याह—

दृष्टस्तयोरिन्द्रस्य ।।१८।।

---

१. एतदाख्यायिकाप्रसंगे उपनिषद्युक्तम्—सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः इति (८।७।१) । अन्वेष्टव्यः = शास्त्राचार्योपदेशैर्ज्ञातव्यः; विजिज्ञासितव्यः = स्वसंवेद्यतामापादयितव्य; (शां० भा०) । सूत्रे यः परामर्शतिशब्द उपात्तः सोऽन्वेषणं विजिज्ञासां च लक्षयमतीति निश्चप्रचम् ।

२. अर्थे (पाठ०) ।

३. विभिन्नैः सांप्रदायिकैः 'तत्त्वमसि'–इति वाक्यस्य बहूनि तात्पर्याणि उक्तानि । तथाहि—(१) तत्त्वमसि-इत्यत्र तत्-त्वम्पदे जीव-ब्रह्मणोरैक्यं जहदजहल्लक्षणाबलेन इति अद्वैतिनः; (२) श्रुतिरयमात्मग्रहोपासनां दर्शयति; उपासनाविधेः शेषभूतेयं श्रुतिरिति मीमांसकाः; (३) उपासनाप्रकारविशेष एवात्र उपदिष्ट इति नैयायिकाः; (४) अभिन्नताज्ञापिकेयं श्रुतिर्न स्वाम्यज्ञापिकेति निम्बार्कमत्रम् (ब्र० सू० २।३।४२); ततश्च जीवव्यापित्वेन अभेदो व्यपदिश्यते, तत्त्वमसि-अयमात्मा ब्रह्म इत्यादिषु तच्छब्द-

तच्छब्देनोक्तोच्यमानयोः परामर्शः । तयोरिन्द्रविरोचनयोर्मध्ये परामर्श इन्द्रस्य दृष्टश्चेत्यर्थः (छान्दोग्य० ८।९-१२; विशेषतश्च ८।९।२) ।।१८।।

सम्यग्ज्ञानार्थिना च गुरुसेवा बहुकालं कर्त्तव्येत्याह—

प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात्[1] तद्वत् ।।१९।।

तद्वदिन्द्रस्येवान्यस्यापि गुरौ प्रणतिवेदाध्ययनसेवादीन् कृत्वैव सिद्धिस्तत्त्वार्थस्फूर्त्तिर्भवति नान्यथेत्यर्थः । तथा च श्रुतिः—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः (श्वेताश्व० ६।२३) इति ।।१९।।

न काल नियमो वामदेववत्[2] ।।२०।।

ऐहिकसाधनादेव भवतीत्यादिर्ज्ञानोदये कालनियमो नास्ति वामदेववत् । वामदेवस्य जन्मान्तरीयसाधनेभ्यो गर्भेऽपि यथा ज्ञानोदयस्तथान्यस्यापीत्यर्थः । तथा च श्रुतिः—तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति, तदिदमप्येतर्हि, य एवं वेदाहं ब्रह्मास्मीति स इदं सर्व भवतीत्यादिरिति ( बृहदा० १।४।१० ) । "अहं मनुरभवमि" त्यादिकमवैधर्म्यलक्षणाभेदपरं सर्वव्यापकताख्यब्रह्मतापरं वा । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादिस्मरणात् ( गीता ११।४० ) 'स इदं सर्वं भवती' ति त्वौपाधिकपरिच्छेदस्यात्यन्तोच्छेदपरमिति ।।२०।।

---

ब्रह्मशब्दवत् त्वयमात्मेति शब्दस्यापि जीवशरीरब्रह्मवाचकत्वेन एकार्थाभिधायित्वात् (वेदान्ततत्त्वसार); (६) स आत्मा अतत्त्वमसि इति च्छेदो मध्वमते, अनेन वाक्येन सादृश्यमेव प्रकटितम्; परपक्षगिरिवज्र (१।७) तच्-शब्दाद् विहितस्य तृतीयादि-विभक्तेः लुकमाश्रित्य 'तेन त्वम्' 'तस्मै त्वम्' इत्यादिना पञ्च अर्था. अस्य वाक्यस्य दर्शिताः; (७) तत्त्वम् (तस्य भावः) असि इत्येवंरूपेण अस्याः श्रुतेरर्थम् आविष्कुर्वन्ति वल्लभीयाः (द्र० तत्त्वार्थदीपनिबन्ध १।४२, ४६, ५०, ५१); वाक्यमिदं गुणसाम्यज्ञापकमिति; (८) तत्त्वमस्यादिशास्त्रमपि तत्-प्रेमपरतयैव नेयम्' त्वमेवामुक इतिवत् (जीवगोस्वामिकृत-प्रीतिसन्दर्भ, अनु० ९); (९) तत्त्वमस्यादिवाक्यं स्वरूपावबोधकम् (ब्र० सू० १।१।१ भास्करभाष्य) ।

१. न काचिदाख्यायिकास्मिन् सूत्रे ।

२. द्र० ऐ० उप० २।१।५ 'तदुक्तमृषिणा ( =मन्त्रेण )—गर्भे नु सन् नु एषाम्'' इति गर्भे एव एतच्छयानो वामदेव एवमुवाच' ।

ननु सगुणोपासनाया अपि ज्ञानहेतुत्वश्रवणात् तत एव ज्ञानं भविष्यति किमर्थं दुष्करसूक्ष्मयोगचर्येति; तत्राह—

अध्यस्तरूपोपासनात्[1] पारम्पर्येण यज्ञोपासकानामिव[2] ॥२१॥

सिद्धिरित्यनुषज्यते। अध्यस्तरूपैः पुरुषाणां ब्रह्मविष्णुहरादीनामुपासनात् पारम्पर्येण ब्रह्मादिलोकप्राप्तिक्रमेण सत्त्वशुद्धिद्वारा वा ज्ञाननिष्पत्तिर्न साक्षात्। यथा याज्ञिकानामित्यर्थः ॥२१॥

ब्रह्मादिलोकपरम्परयापि ज्ञाननिष्पत्तौ नास्ति नियम इत्याह—

इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः[3] ॥२२॥

निर्गुणात्मन इतरस्याध्यस्तरूपस्य ब्रह्मलोकपर्यन्तस्य लाभेऽप्यावृत्तिरस्ति कुतो देवयानपथेन ब्रह्मलोकं गतस्यापि द्युपर्जन्यधरान[4] रयोषिद्रूपाग्निपञ्चके पञ्चाहुतितो जन्मश्रवणात्, 'छान्दोग्यपञ्चमप्रपाठके असौ वाव लोको गौतमाग्नि'रित्यादिनेत्यर्थः (द्र० छान्दोग्य० ५।४।१)। यच्च ब्रह्मलोकादनावृत्तिवाक्यं (द्र० विज्ञानामृत-भाष्य ४।४।१७-२२) तत् तत्रैव प्रायेणोत्पन्नज्ञानपुरुषविषयकमिति ॥२२॥

ज्ञाननिष्पत्तिर्विरक्तस्यैवेत्यत्र निदर्शनमाह—

विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत्[5] ॥२३॥

विरक्तस्यैव हेयानां प्रकृत्यादीनां हानमुपादेयस्य चात्मन उपादानं भवति। यथा दुग्धजलयोरेकीभावापन्नयोर्मध्येऽसारजलत्यागेन सारभूतक्षीरोपादानं हंसस्यैव न तु काकादेरित्यर्थः ॥२३॥

---

१. उपासना द्विविधा—प्रतीकाश्रिता चाहंग्रहाश्रिता च। आद्याया लक्षणम्—आश्रयान्तरप्रत्ययस्य आश्रयान्तरे प्रक्षेपो यथा आदित्यादिप्रतीकेषु ब्रह्म-दृष्टिः। सेयं प्रतीकाश्रितोपासना चतुर्विधा—संपद्-आरोप-संवर्ग-अध्यास-भेदात्। अध्यासोपासनाया लक्षणं खलु 'आरोपो बुद्धिपूर्वेण य उपासाविधिश्च सः। योषित्यग्निमतिर्यत् तदध्यासः स उदाहृतः॥ (शिवगीता १२।१२)। बुद्धिपूर्वेण = शास्त्रोपदिष्ट-बुद्धिपूर्वेण। एतदुपासनास्वरूपं छान्दोग्ये द्र० (५।८।१)।

२. अत्र न काचिदाख्यायिकोपर्णिता।

३. अत्र न काचिदाख्यायिकोपवर्णिता।

४. अमरेत्यपपाठः।

५. तुल० अनन्तशास्त्रं बहु वेदितव्यं स्वल्पश्च कालो बहवश्च विघ्नाः। यत् सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमिश्रम्॥ (उत्तरगीता ३।१)। अत्र न काचिदाख्यायिकोक्ता। हंसक्षीरोपन्यासो नाख्यायिका।

सिद्धपुरुषसङ्गादप्येतदुभयं भवतीत्याह—

लब्धातिशययोगाद्वा तद्वत् ॥२४॥

लब्धोऽतिशयो ज्ञानकाष्ठा येन तत्सङ्गादप्युक्तं भवति हंसवदेवेत्यर्थः। यथाऽलर्कस्य दत्तात्रेयसङ्गममात्रादेव स्वयं विवेकः प्रादुरभूदिति ( मार्कण्डेयपु० अ० ३८-४३ ) ॥२४॥

रागिसङ्गो न कार्य इत्याह—

न कामचारित्वं रागोपहते शुकवत्[1] ॥२५॥

रागोपहते पुरुषे कामतः संगो न कर्तव्यः, शुकवत्। यथा शुकपक्षी प्रकृष्टरूप इति कृत्वा कामचारं न करोति रूपलोलुपैर्बन्धनभयात् तद्वदित्यर्थः ॥२५॥

रागिसंगे तु दोषमाह—

गुणयोगाद् बद्धः शुकवत्[2] ॥२६॥

तेषां संगे तु गुणयोगात् तदीयरागादियोगाद् बद्धः स्यात् शुकवदेव—यथा शुकपक्षी व्याधस्य गुणैः रज्जुभिर्बद्धो भवति तद्वदित्यर्थः। अथवा गुणितया गुणलोलुपैर्बद्धो भवति शुकवदित्यर्थः। अत्रैवोक्तं सौभरिणा—

स मे समाधिर्जलवासमित्रमत्स्यस्य संगात् सहसैव नष्टः।
परिग्रहः संगकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः॥ इति
(विष्णु० ४।२।४८) ॥२६॥

वैराग्यस्याप्युपायमवधारयति द्वाभ्याम्—

न भोगाद्रागशान्तिर्मुनिवत्[3] ॥२७॥

यथा मुनेः सौभरेर्भोगान्न रागशान्तिरभूत्, एवमन्येषामपि न भवतीत्यर्थः। तदुक्तं सौभरिणैव—

आमृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसंगि[4]॥ इति
(विष्णु० ४।२।४७) ॥२७॥

अपितु—

---

१. अत्र न काचिदाख्यायिकोक्ता। कामचारित्वशब्दस्य 'कामपूर्वकः संगः' इति योऽर्थः कृतो भाष्ये, स चिन्त्य एव। व्यासपुत्रः शुक एवात्र सूत्रे लक्षित इति वृत्तिकारः। आख्यायिकातात्पर्यं तु न स्फुटमवगम्यते।

२. न काचिदाख्यायिकाऽत्र।

३. तुल० न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥ (मनु०)।

४. परमात्मसंगीति मुद्रितपुराणपाठः।

दोषदर्शनादुभयोः[1] ॥२८॥

उभयोः प्रकृतितत्कार्ययोः परिणामित्वदुःखात्मकत्वादि-दोषदर्शनादेव रागशान्तिर्भवति मुनिवदेवेत्यर्थः। सौभरेर्हि संगदोषदर्शनादेव संगे वैराग्यं श्रूयते—

दुःखं यदेवैकशरीरजन्म तथार्द्धसंख्यं[2] तदिदं प्रसूतम्।
परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत्॥ इति
(विष्णु० ४।२।४९) ॥२८॥

रागादिदोषोपहतस्योपदेशग्रहणेऽप्यनधिकारमाह—

न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत्॥९॥

उपदेशरूपं यज्ज्ञानवृक्षस्य बीजं तस्याङ्कुरोऽपि रागादिमलिनचित्ते नोत्पद्यते, अजवत्; यथाजनाम्नि नृपे भार्याशोकमलिनचित्ते वसिष्ठेनोक्तस्याप्युपदेशबीजस्य नाङ्कुर उत्पन्न इत्यर्थ ॥२९॥

किं बहुना—

नाभासमात्रमपि मलिनदर्पणवत्[3] ॥३०॥

आपातज्ञानमपि मलिनचेतस्युपदेशान्न जायते विषयान्तरसञ्चारादिभिः प्रतिबन्धात्। यथा मलैः प्रतिबन्धान्मलिनदर्पणेऽर्थो न प्रतिबिम्बति तद्वदित्यर्थः[4] ॥३०॥

यदि वा कथञ्चिज् ज्ञानं जायते तथाप्युपदेशानुरूपं न भवेदित्याह—

न तज्जस्यापि तद्रूपता पङ्कजवत्[5] ॥३१॥

तस्मादुपदेशाज्जातस्यापि ज्ञानस्योपदेशानुरूपता न भवति सामग्र्येणानवबोधात्, पङ्कजवत्; यथा बीजस्योत्तमत्वेऽपि पङ्कदोषाद् बीजानुरूपता पङ्कजस्य न भवति तद्वदित्यर्थः। पङ्कस्थानीयं शिष्यचित्तम् ॥३१॥

ननु ब्रह्मलोकादिष्वैश्वर्येणैव पुरुषार्थतासिद्ध्या किमर्थमेतावता प्रयासेन मोक्षाय ज्ञाननिष्पादनम्; तत्राह—

---

१. उभयोरित्यस्य प्रकृति-तत्कार्ययोरित्यर्थ इति भिक्षुः। कथमयमर्थो लब्ध इति न ज्ञायते। उभयोरात्मनो विषयस्य चेत्यर्थ इति वृत्तिः। अयमर्थोऽपि न प्राकरणिकः। अस्पष्टार्थकमिदं सूत्रम्।

२. शतार्धसंख्यमिमि मद्रितपुराणपाठः।

३. नात्र काचिदाख्यायिकोक्ता।

४. एतदनन्तरं क्वचिदधिकं पठ्यते—तदुक्तं याज्ञवल्क्येन—मलिनो हि यथाऽदर्शो रूपालोकस्य न क्षमः। तथा विकलकरण आत्मा ज्ञानस्य न क्षमः (या० स्मृ० ३।१४१) इति। अविपक्वकरण इति मुद्रितस्मृतिपाठः।

५. नात्र काचिदाख्यायिका।

न भूतियोगेऽपि कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत्[1] ।।३२।।

ऐश्वर्ययोगेऽपि कृतकृत्यता कृतार्थता नास्ति क्षयातिशयदुःखैरनुगमात् । उपास्यसिद्धिवत्, यथोपास्यानां ब्रह्मादीनां सिद्धियोगेऽपि न कृतकृत्यता, तेषामपि योगनिद्रादौ योगाभ्यासश्रवणात्, तथैव तदुपासनया प्राप्ततदैश्वयस्यापीत्यर्थः । उपास्यसिद्धिवदिति वीप्साऽध्यायसमाप्तौ ।।३२।।

अध्यायत्रितयोक्तस्य विवेकस्यान्तरङ्गकम् ।
आख्यायिकाभिः सम्प्रोक्तमत्राध्याये समासतः ।।

इति विज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये आख्यायिकाध्यायश्चतुर्थः ।

●

१. विभूतिर्न नियमेन कैवल्याधिगमे सहायिका भवतीति विज्ञेयम् । योगाभ्यासेन नित्यं विभूतिरुत्पद्यते—इति नात्र विप्रतिपत्तिः । स्वाभाविकी सेति वदन्ति योगज्ञाः, तथापि विभूतिः प्रायेणोपसर्गरूपा एव कैवल्यप्राप्तौ इति प्रसिद्धमेव । किंच स्वविभूतिदर्शनमकृत्वाऽपि योगिनः कैवल्यं भवतीति पूर्वाचार्याः । अतएव 'कैवल्यं भवति ईश्वरस्यानीश्वरस्य वा' इत्युक्तं व्यासभाष्ये (३।५५) । मुक्तौ विभूतेरैश्वर्यस्य अधिगमोऽवश्यंभावीति मतं शैवसंप्रदायविशेषः आतिष्ठते, तदेवात्र समीक्षितमिति प्रतिभाति ।

# पञ्चमोऽध्यायः

स्वशास्त्रसिद्धान्तः पर्याप्तः । इतः परं स्वशास्त्रे परेषां पूर्वपक्षानपाकर्तुं पञ्चमाध्याय आरभ्यते । तत्रादावादिसूत्रेऽथशब्देन (१।१ सू०) यन्मङ्गलं कृतं तद् व्यर्थमित्याक्षेपं समाधत्ते—

मङ्गलाचरणं[1] शिष्टाचारात् फलदर्शनाच् श्रुतितश्चेति[2] ॥१॥

मङ्गलाचरणं यत् कृतं तस्यैतैः प्रमाणैः कर्तव्यतासिद्धिरित्यर्थः । इतिशब्दो हेत्वन्तराकाङ्क्षानिरासार्थः ॥१॥

ईश्वरासिद्धेरिति यदुक्तं (१।९२ सू०) तन्नोपपद्यते कर्मफलदातृतया तत्सिद्धेरिति ये पूर्वपक्षिणस्तान्निराकरोति—

नेश्वराधिष्ठिते[3] फलनिष्पत्तिः कर्मणा तत्सिद्धेः[4] ॥२॥

ईश्वराधिष्ठिते कारणे कर्मफलरूपपरिणामस्य निष्पत्तिर्न युक्ता । आवश्यकेन कर्मणैव फलनिष्पत्तिसम्भवादित्यर्थः ॥२॥

ईश्वरस्य फलदातृत्वं न घटतेऽपीत्याह सूत्रैः—

स्वोपकारादधिष्ठानं[5] लोकवत्[6] ॥३॥

---

१. मङ्गलाचरणं नाम वाक्यरचनाविशेषः । नायं विषयो दार्शनिकविचार्यविषयेषु अन्यतमः, अपितु ग्रन्थलेखककर्तव्येषु अन्यतमः । अतः सूत्रस्यास्य संपातायातता सिद्धैव । सूत्रमिदमर्वाक्कालिकमपि । सूत्रस्थमितिकरणमपि निष्प्रयोजनमेव । वाक्यमिदमाहृतं कस्माच्चिद् ग्रन्थादिति स्पष्टं प्रतीयते ।

२. मङ्गलाचरण-विषयको विचारः कृतो नैयायिकैः । प्राचां नैयायिकानां मते मङ्गलाचरणस्य फलं निर्विघ्नसमाप्तिः; नवीनानां मते तु विघ्नध्वंसः । सूत्रमिदमर्वाक्कालिकमिति न संशयलेशोऽपि ।

३. ईश्वर एव कारणम्, जीवः तस्य कर्म वा न कारणं फलप्राप्तौ—इत्यस्ति मतम् (द्र० न्यायसू० ४।१।१९ व्याख्यानानि) । नकुलीशपाशुपतानां मतमत्र दर्शनीयम्—'कर्मादिनिरपेक्षस्तु स्वेच्छाचारी यतो ह्ययम्' इति ।

४. द्र० कर्मैव कारणं नान्यत् फलप्राप्तौ इति केचित् (बृहदा० १।४।१० शां० भा०); ईश्वरनिरपेक्षं कर्म फलप्राप्तौ हेतुरिति मीमांसकाः ।

५. उद्धृतमिदं योगवार्तिके (१।२५) । उपकार इष्टार्थसिद्धिः (५।६ भा०) ।

६. तुल० २।२।४० ब्रह्मसूत्रीय-शारीरकभाष्यस्य द्वितीयं व्याख्यानं (साधिष्ठानो हि लोके····अनीश्वरत्वं प्रसज्येत) ।

ईश्वराधिष्ठातृत्वे स्वोपकारार्थमेव लोकवदधिष्ठानं स्यादित्यर्थः ॥३॥

भवत्वीश्वरस्याप्युपकारः, का क्षतिरित्याशङ्कयाह—

[1]लौकिकेश्वरवदितरथा ॥४॥

ईश्वरस्याप्युपकारस्वीकारे लौकिकेश्वरवदेव सोऽपि संसारी स्यात्, अपूर्णकामतया दुःखादिप्रसङ्गादित्यर्थः ॥४॥

तथैव भवत्वित्याशङ्कयाह—

[2]पारिभाषिको वा ॥५॥

संसारसत्त्वेऽपि चेदीश्वरस्तर्हि सर्गाद्युत्पन्नपुरुषे परिभाषामात्रमस्माकमिव भवतामपि स्यात्। संसारित्वाप्रतिहतेच्छत्वयोर्विरोधान्नित्यैश्वर्यानुपपत्तेरित्यर्थः ॥५॥

ईश्वरस्याधिष्ठातृत्वे [3]बाधकान्तरमाह—

न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥६॥

किञ्च रागं विना नाधिष्ठातृत्वं सिद्ध्यति प्रवृत्तौ रागस्य प्रतिनियतकारणत्वादित्यर्थः। उपकार इष्टार्थसिद्धिः। रागस्तूत्कटेच्छेति न पौनरुक्त्यम् ॥६॥

नन्वेवमस्तु रागोऽपीश्वरे, तत्राह—

तद्योगेऽपि न नित्यमुक्तः ॥७॥

रागयोगेऽपि स्वीक्रियमाणे स नित्यमुक्तो न स्यात्, ततश्च ते सिद्धान्तहानिरित्यर्थः। किञ्च प्रकृतिं प्रत्यैश्वर्य्यं प्रकृतिपरिणामभूतेच्छादिना न सम्भवति, अन्योऽन्याश्रयात्। नित्येच्छादिकं च प्रकृतौ न युक्तं श्रुतिस्मृतिसिद्धसाम्यावस्थानुपपत्तेः। अतः प्रकारद्वयमवशिष्यते, तद्यथा—ऐश्वर्यं किं प्रधानशक्तित्वेनास्मद-

---

१. लौकिकेश्वरः = लोकविदितोऽनाप्तकामः प्रबलशक्तियुतो जनः, यथा राजा भूस्वामी वा। एवंविधे ऽर्थे ईश्वरशब्दप्रयोगो दृश्यत एव। सामर्थ्यवत्त्वमेव ईश्वरत्वम् इति शबरवचनतो विज्ञायते—'भवति च गार्हपत्यस्यापि स्वस्मिन् कार्ये ईश्वरत्वम्' (३।२।४)।

२. द्र० 'आधुनिकसंकेतः परिभाषा, तया चार्थबोधकं पदं पारिभाषिकम्' (शक्तिवाद, पृ० ३)।

३. 'अधिष्ठातृरूप ईश्वरः' इत्यस्ति मतम्; तच्च शारीरकभाष्ये समालोचितम् (द्र० २।२।३७-४२)। ईश्वरः प्रधानादीनि अधिष्ठाय प्रवर्तते, इदं सांख्यमतम् अनुपपन्नमिति शंकरो दर्शयति (शारीरक० २।२।३९)। सांख्यसूत्रस्यास्मिन् प्रकरणे तु अधिष्ठातृत्वमतस्य प्रतिषेध एव दृश्यते—इति विचारकै दर्शनीयम्।

भिमतानामिच्छादीनां साक्षादेव चेतनसम्बन्धात् । किं वाऽयस्कान्तमणिवत् सन्निधिसत्तामात्रेण प्रेरकत्वादिति ॥७॥

तत्राद्यं पक्षं दूषयति—

प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥८॥

प्रधानशक्तेरिच्छादेः पुरुषे योगात् पुरुषस्यापि धर्मसङ्गापत्तिः । तथा च "स यत् तत्र पश्यत्यनन्वागस्तेन भवत्यसङ्गो ह्ययं पुरुषः[1] (बृहदाः ४।३।१६) इत्यादिश्रुतिविरोध इत्यर्थः ॥८॥

अन्त्ये त्वाह—

सत्तामात्राच्चेत् सर्वैश्वर्यम् ॥९॥

अयस्कान्तवत् सन्निधिसत्तामात्रेण चेच्चेतनैश्वर्यं तर्हि सर्वेषामेव तत्तत्सर्गेषु भोक्तॄणां पुंसामविशेषेणैश्वर्यमस्मदभिप्रेतमेव सिद्धम्, अखिलभोक्तृसंयोगादेव प्रधानेन महदादिसर्जनादिति । ततश्चैक एवेश्वर इति भवत्सिद्धान्तहानिरित्यर्थः ॥९॥

स्यादेतत्—ईश्वरसाधकप्रमाणविरोधेनैतेऽसत्तर्का एव । अन्यथैवंविधासत्तर्कसहस्रैः प्रधानमपि बाधितुं शक्यत इति; तत्राह—

प्रमाणाभावान्न तत्सिद्धिः ॥१०॥

तत्सिद्धिर्नित्येश्वरे तावत् प्रत्यक्षं नास्तीत्यनुमानशब्दावेव प्रमाणे वक्तव्ये, ते च न सम्भवत इत्यर्थः ॥१०॥

असम्भवमेव प्रतिपादयति सूत्राभ्याम्—

सम्बन्धाभावान्नानुमानम्[2] ॥११॥

सम्बन्धो[3] व्याप्तिः । अभावोऽसिद्धिः । तथा च महदादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानेष्वप्रयोजकत्वेन व्याप्यत्वासिद्ध्या नेश्वरेऽनुमानमित्यर्थः ॥११॥

---

१. तत्र किञ्चित् पश्यतीति श्रुतिपाठः ।

२. [तस्येश्वरस्य] अनुमानगम्यत्वे कुलालादिदृष्टान्तेनैव परिच्छिन्नज्ञानशक्तित्वं स्यात्' (वि० प्र० सं० पृ० २०९); अनुमानानामीश्वरासाधकत्वस्य पूर्वसूत्रे दर्शितत्वात् (पृ० २१९)। ईश्वरविषयकानुमानेषु केचन दोषाः विवरणप्रमेयसंग्रहे प्रदर्शिताः (पृ० २११) ।

३. अविनाभावः, अनौपाधिकः संबन्ध इत्यर्थः । संबन्धविशेषो व्याप्तिः' इति केचन न्यायविदः । यथोक्तम्—'संबन्धविशेषो व्याप्तिरविनाभाव इति च व्यपदिश्यते' (न्यायदीपिका, १९ पृ०) । व्याप्तिरूपेऽर्थे संबन्धशब्दो न्यायभाष्ये प्रयुक्तः (२।१।५१); द्र० 'संबन्धो व्याप्ति रिष्टात्र लिङ्गधर्मस्य लिङ्गिना (श्लोकवा० अनुमान० ४) ।

नापि शब्द इत्याह—

श्रुतिरपि प्रधानकार्यत्वस्य ॥१२॥

प्रपञ्चे प्रधानकार्यत्वस्यैव श्रुतिरस्ति न चेतनकारणत्वे । यथा—

अजामेकां लोहितशुक्लकृष्णां

बह्वीः प्रजाः सृजमानां सरूपाः । (श्वेताश्व० ४।५) ।

तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत (बृहदा०१।४।७) इत्यादिरित्यर्थः ।

या च 'तदैक्षत बहु स्यामि'त्यादिश्चेतनकारणताश्रुतिः (छान्दोग्य० ६।२।३) सा सर्गादावुत्पन्नस्य महत्तत्त्वोपाधिकस्य महापुरुषस्य जन्यज्ञानपरा । किं वा बहुभवनानुरोधात् प्रधान एव कूलं पिपतिषतीतिवद् गौणी[1], अन्यथा 'साक्षी चेता केवलो निर्गुणश्च (श्वेताश्व० ६।११) इ'त्यादि श्रुत्युक्तापरिणामित्वस्य पुरुषेऽनुपपत्तेरिति ।

अयं चेश्वरप्रतिषेध ऐश्वर्ये वैराग्यार्थमीश्वरज्ञानं विनापि मोक्षप्रतिपादनार्थं च प्रौढ़िवादमात्रमिति प्रागेव व्याख्यातम् ( १।९२ सूत्रभाष्यं द्र० ); अन्यथा जीवव्यावृत्तस्येश्वरनित्यत्वादेर्गौणत्वकल्पनागौरवम् । औपाधिकानां नित्यज्ञानेच्छादीनां महदादिपरिणामानां चाङ्गीकारेण कौटस्थ्याद्युपपत्तेरित्यादिकं ब्रह्ममीमांसायां द्रष्टव्यमिति (विज्ञानामृतभाष्य १।१।४-६) ॥१२॥

नाविद्यातो बन्ध इति (१।२०) यत् सिद्धान्तितं प्रथमपादे तत्र परमतं विस्तरतः प्रघट्टकेन दूषयति—

नाविद्याशक्तियोगो[2] निःसङ्गस्य[3] ॥१३॥

परे प्राहुः—प्रधानं नास्ति किन्तु ज्ञाननाश्यानाद्यविद्या शक्तिश्चेतने[4] तिष्ठति, तत एव चेतनस्य बन्धस्तन्नाशे च मोक्ष इति । तत्रेदमुच्यते—निःसङ्गतया

---

१. तुल० 'यथा प्रत्यासन्नपतनतां नद्याः कूलस्यालक्ष्य कूलं पिपतिषतीति अचेतनेऽपि कूले चेतनवदुपचारो दृष्टः....(शारीरक०१।१।६ ) ।

२. तुल० स्वप्रकाशात्मनि अविद्याया अपि अनुपपत्तेः (सिद्धान्तबिन्दु, अनुच्छेद ७३); 'अविद्ययाऽपि च संबन्धो न तस्या घटते' (शिवदृष्टि २।२३ उत्पलवृत्ति) ।

३. ५।१३-१९ सूत्राणि व्यासतात्पर्यनिर्णये उद्धृतानि (पृ० १०-११) ।

४. अविद्यां शक्तिरूपेण केचन स्वीकुर्वन्ति (द्र० वि० प्र० संग्रह, पृ० १६) ।

चेतनस्याविद्याशक्तियोगः साक्षान्न सम्भवतीति । अविद्या ह्यन्यस्मिंस्तदाकारता[१], सा च विकारविशेषोऽधिकारहेतुसंयोगरूपं सङ्गं विना न सम्भवतीत्यर्थः ॥१३॥

नन्वविद्यावशादेवाविद्यायोगो वक्तव्यः । तथा चापारमार्थिकत्वान्न तया संग इति; तत्राह—

तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम्[२] ॥१४॥

अविद्यायोगादविद्यासिद्धौ चान्योऽन्याश्रयत्वम्, आत्माश्रयत्वम्, अनवस्था वेति शेषः ॥१४॥

ननु बीजाङ्कुरवदनवस्था न दोषायेत्याशङ्क्याह—

न बीजाङ्कुरवत्[३] सादिसंसारश्रुतेः[४] ॥१५॥

बीजाङ्कुरवदप्यनवस्था न सम्भवति पुरुषाणां संसारस्याविद्याद्यखिलानर्थरूपस्य सादित्वश्रुतेः, प्रलयसुषुप्त्यादावभावश्रवणादित्यर्थः । "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" (बृहदा० २।४।१२) इत्यादिश्रुतिभिर्हि प्रलयादौ बुद्धिवृत्त्यभावेन तदौपाधिकाविद्याद्यखिलसंसारशून्यं चिन्मात्रत्वं पुरुषाणां सिद्धमिति । तस्मादविद्याप्याविद्यकीति वाङ्मात्रम् ॥१५॥

नन्वस्माकमविद्या पारिभाषिकी न तु योगोक्तानात्मन्यात्मबुद्ध्यादिरूपा, तथा च भवतां प्रधानवदेवास्माकमपि तस्या अखण्डानादितया पुरुषनिष्ठत्वेऽपि नाऽसंगताहानिरित्याशङ्कायां परिकल्पितमविद्याशब्दार्थं विकल्प्य दूषयति—

---

१. द्र० 'तमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते (शारीरकाध्यासभाष्य); सर्वेषु अध्यासलक्षणेषु 'अन्यस्य अन्यधर्मविभासता' नियमेन वर्तत इति प्रसिद्धमेव ।

२. कस्याः शङ्कायाः समाधानमत्र दीयत इति न स्पष्टमवगम्यते । संसारस्य सादित्वं न सांख्यीया दृष्टिः; न खलु अविद्यादीनामभावः प्रलये भवति तत्त्वतः । व्यक्तविषयाभावे चित्तादीनां तमःप्रधानो रोधो भवति स्वतः प्रलयकाले । पुनः सृष्टौ निरुद्धानां चित्तेन्द्रियादीनामभिव्यक्तिः संस्कारानुसारेण भवत्येव ।

३. अहंकाराद्यध्यासः बीजाङ्कुरवदनादिरिति अद्वैतिनः । "तस्मात् पूर्वपूर्वाध्यासमूल एवायम् उत्तरोत्तरोऽहङ्काराद्यध्यासः बीजाङ्कुवद् अनादिः" (सिद्धान्तबिन्दु, अनु० ९४) ।

४. सूत्रे (१४) अन्योन्याश्रयत्वमेवोक्तम् । भाष्यकारेण त्वात्माश्रयत्व-अनवस्थादोषयोरपि उल्लेखःकृतः । व्याख्यानस्यास्य स्वारस्यं चिन्त्यम् । वृत्तौ अन्योन्याश्रयरूपदोष एवोक्तः । अस्यान्योन्याश्रयदोषस्य समाधानं ५।१५ सूत्रे विहितमिति वृत्तितो विज्ञायते ।

विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः ॥ १६ ॥

यदि विद्यान्यत्वमेवाविद्याशब्दार्थस्तर्हि तस्य ज्ञाननाश्यतया ब्रह्मण आत्मनोऽपि बाधो नाशः प्रसज्यते विद्याभिन्नत्वादित्यर्थः ॥१६॥

अबाधे नैष्फल्यम् ॥ १७ ॥

यदि त्वविद्यारूपमपि विद्यया न बाध्येत तर्हि विद्यावैफल्यम्, अविद्यानिवर्त्तकत्वाभावादित्यर्थः ॥ १७ ॥

पक्षान्तरं दूषयति—

विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥

यदि पुनर्विद्यया चेतनं बाध्यत्वमेवाविद्यात्वमुच्यते तथा सति जगतः प्रकृतिमहदाद्यखिलप्रपञ्चस्याप्येवमविद्यात्वं स्यात्। अथात आदेशो नेति नेति (बृहदा० २।३।६), अस्थूलमनणु····(बृहदा० ३।८।८) इत्यादिश्रुतिभिर्मिथ्याज्ञानस्येव प्रकृत्यादेरप्यात्मनि बाधितत्वादित्यर्थः। तथा चाखिलप्रपञ्चस्यैवविद्यात्वे सत्येकस्य ज्ञानेनाविद्यानाशादन्यैरपि प्रपञ्चो न दृश्येतेति भावः। विद्यानाश्यत्वं चाविद्यात्वं वक्तुं न शक्यते, विद्यानाश्यग्रहासम्भवादात्माश्रयादिति ॥ १८ ॥

तद्रूपत्वे सादित्वम् ॥ १९ ॥

भवतु वा यथाकथञ्चिद्विद्याबाध्यत्वमेवाविद्यात्वम्, तथापि तादृशवस्तुनः सादित्वमेव पुरुषेषु, न त्वनादित्वं सम्भवति। विज्ञानघन एवेत्याद्युक्तश्रुतिभिः (बृहदा० १।४।१२) प्रलयादौ पुरुषस्य चिन्मात्रत्वसिद्धेरित्यर्थः।

अस्मन्मते च प्रलये पुरुषस्यासंसारित्वेऽपि स्वतन्त्रनित्यप्रधानसंयोगात् पुनर्बन्ध उपपादितस्तथा प्रधानसंयोगेऽपि प्राग्भवीयाविवेक एव वासनादृष्टादिद्वारा निमित्तमित्यप्युक्तम्। तस्माद्योगदर्शनोक्तादन्या नास्त्यविद्या (द्र० योगसू० २।५), सा च बुद्धिधर्म एव न पुरुषधर्म इति सिद्धम्[1] ॥ १९ ॥

अत्रैवाध्याये कर्मनिमित्ता प्रधानप्रवृत्तिरिति यदुक्तं तत्र परपूर्वपक्षं समाधत्ते प्रघट्टकेन—

न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥ २० ॥

अप्रत्यक्षतया[2] धर्मापलापो न सम्भवति प्रकृतिकार्येषु वैचित्र्यान्यथानुपपत्त्या तदनुमानादित्यर्थः ॥ २० ॥

---

१. अविद्या खलु विपर्ययज्ञानवासना इति व्यासभाष्य उक्तम् (२।२४)। वासना खलु संस्कारविशेष एव, संस्कारश्च बुद्धिधर्मरूप एव। अपरिणामिनः पुरुषस्य न धर्मो भवितुमर्हति।

२. धर्मः (अधर्मश्च) अप्रत्यक्ष एवेति मीमांसका अन्ये च।

प्रमाणान्तरमप्याह—

श्रुतिलिङ्गादिभिस्तत्सिद्धिः[1] ॥ २१ ॥

पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन ( बृहदा० ३।२।१३ ) इत्यादिश्रुतेः स्वर्गकामोऽश्वमेधेन यजेत ( तु० आश्व० श्रौ० सू० १०।६।१ ) इति विध्यादिरूपाल्लिङ्गाद्योगिप्रत्यक्षादिभिश्च तत्सिद्धिरित्यर्थः ॥२१॥

प्रत्यक्षाभावाद्धर्मासिद्धिरिति परस्य हेतुमाभासी करोति—

न नियमः प्रमाणान्तरावकाशात्[2] ॥२२॥

प्रत्यक्षाभावाद्वस्त्वभाव इति नियमो नास्ति प्रमाणान्तरेणापि वस्तूनां विषयीकरणादित्यर्थः ॥२२॥

धर्मवदधर्ममपि साधयति—

उभयत्राप्येवम्[3] ॥२३॥

धर्मवदधर्मेऽप्येवं प्रमाणानीत्यर्थः ॥२३॥

अर्थात् सिद्धिश्चेत् समानमुभयोः[4] ॥२४॥

ननु विध्यन्यथाऽनुपपत्तिरूपयाऽर्थापत्त्या धर्मसिद्धिः, सा च नास्त्यधर्मं इति कथं श्रौतलिङ्गातिदेशोऽधर्म इति चेन्न—यतः समानमुभयोर्धर्माधर्मयोलिङ्गमस्ति 'परदारान्न गच्छेदि'ति निषेधविध्यादेरेवाधर्मलिङ्गत्वादित्यर्थः ॥२४॥

ननु धर्मादिकं चेत् स्वीकृतं तर्हि पुरुषाणां धर्मादिमत्त्वेन परिणामाद्यापत्तिरित्याशङ्कां परिहरति—

---

१. लिङ्गम् अनुमानमिति वृत्तिः। वृत्तिमतमेव समीचीनमिति प्रतिभाति । सांख्यदृष्टचा धर्मस्य लौकिकप्रत्यक्षागम्यत्वेऽपि योगिप्रत्यक्षगम्यत्वमस्त्येव । अतएव धर्मसत्तायां लिङ्गानि ( = अनुमापकहेतवः ) सन्त्येव ।

२. यथा अदृष्टं कारणं भवति तथा अन्येषां देशादीनामपि कारणत्व मस्तीत्यर्थः सूत्रस्येति वृत्तिकारः । अर्थोऽयमप्राकरणिकः । भाष्यमतमपि न सर्वथा प्रकरणबललभ्यम् । अस्पष्टार्थकमिदं सूत्रम् ।

३. उभयपदेन किं गृह्यत इति न सुष्ठु विज्ञायते । धर्माधर्मौ गृह्येते इति भिक्षुः, वृत्तिदर्शितोऽर्थोऽपि न सूत्राक्षरतः, नवा प्रकरणतः लभ्यते ।

४. धर्माधर्मयोः प्रतिपादिका श्रुतिरस्ति, तौ नार्थापत्तिगम्यौ इति भाष्यदर्शितः सूत्रार्थः । अदृष्टशब्दो यथा दुःखकारणरूपेऽर्थे शक्तः तथा सुखकारणरूपेऽर्थेऽपि—इति सूत्रतात्पर्यमिति वृत्तिः । इमे व्याख्याने काल्पनिके एवेति निश्चप्रचम् ।

अन्तःकरणधर्मत्वं धर्मादीनाम्[1] ॥२५॥

आदिशब्देन वैशेषिकशास्त्रोक्ताः सर्व आत्मविशेषगुणा गृह्यन्ते। न चैव प्रलयेऽन्त करणाभावाद्धर्मादिकं क्व तिष्ठत्विति वाच्यम्, आकाशवदन्तःकरणस्यात्यन्तविनाशाभावात्। अन्तःकरणं हि कार्यकारणोभयरूपमिति प्रागेव व्याख्यातम्। अतः कारणावस्थे प्रकृत्यंशविशेषेऽन्तःकरणे धर्माधर्मसंस्कारादिकं तिष्ठतीति ॥२५॥

स्यादेतत्—प्रकृतिकार्यवैचित्र्याच्छ्रुत्यादेश्च धर्मादिसिद्धिरिति यदुक्तम्, तदयुक्तम्। त्रिगुणात्मकप्रकृतेस्तत्कार्याणां च भवतां श्रुत्यैव बाधात्—साक्षी चेता केवलो निर्गुणश्च (श्वेताश्व० ६।११); अथात आदेशो नेति नेति (बृहदा० २।३।६); अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ( कठ० १।३।१५ ) इत्यादिना। न निरोधो न चोत्पत्तिः ( माण्डूक्यकारिका २।३२ ); वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ( छान्दोग्य० ६।१।४ ) इत्यादिना चेति। तदेतत् परिहरति—

गुणादीनां च नात्यन्तबाधः ॥२६॥

गुणानां सत्त्वादीनां तद्धर्माणां च सुखादीनां तत्कार्याणामपि महदादीनां स्वरूपतो नास्ति बाधः, किन्तु संसर्गत एव चेतने बाधोऽयस्यौष्ण्यबाधवत्। तथा कालत एवावस्थादिभिर्बाधो गुणाद्यखिलपरिणामिन इत्यर्थः ॥२६॥

कुतः पुनः स्वरूपत एव बाधो न भवति स्वप्नमनोरथादिपदार्थवदित्याकाङ्क्षायामाह—

पञ्चावयवयोगात् सुखसंवित्तिः[2] ॥२७॥

अत्र विशिष्य पक्षीकरणाय विवादविषयैकदेशस्य सुखमात्रस्य ग्रहणं सर्वविषयोपलक्षकम्। सुखादिसंवित्तिरितिपाठस्तु समीचीनः।

---

१. धर्मादिपदार्थाः वैशेषिकसंमता आत्मविशेषगुणा इति भिक्षुः। आत्मविशेषगुणप्रतिपादकेषु वचनेषु न धर्मशब्दस्यादौ उल्लेखः क्रियते नैयायिकैर्वैशेषिकैर्वा, अतः धर्मादीनामिति शब्देन बुद्धिरूपाणां धर्मादीनामेव ग्रहणम् (द्र०सांख्यका० २३) इष्टमिति विज्ञेयम्। बुद्धिरूप-गणनाप्रसंगे धर्मशब्दस्यैवादौ उल्लेखः क्रियत आचार्यैः। धर्मादीनामष्टानाम् अन्तःकरणधर्मत्वमिष्टमेव।

२. अस्मन्मते 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्' ॥ इति गीतोक्ताः ( १८।१४ ) पञ्च अवयवा एव ग्राह्याः। पञ्चावयवयोगेन भाष्यप्रदर्शितेन अनुमितिर्भवति; न पुनः संवित्तिरिति। पञ्चावयवपदेन मन एव ग्राह्यमिति महादेवः ( पञ्चेन्द्रियाण्यवयवा इव यस्य )। अर्थोऽयं काल्पनिक एव।

पञ्चावयवाश्च न्यायस्य प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि, तेषां योगान्मेलनात् सुखाद्यखिलपदार्थसिद्धिरित्यर्थः । प्रयोगश्चायम्—सुखं सत्, अर्थक्रियाकारित्वात्, यद्यदर्थक्रियाकारि तत् तत् सत्, यथा चेतनः, पुलकादिरूपार्थक्रियाकारि च सुखम्, तस्मात् सदिति । चेतनानां चाविकारित्वेऽपि विषयप्रकाश एवार्थक्रियेति । नास्तिकं प्रति च व्यतिरेक्यनुमानं कर्तव्यम्, तत्र च शशशृङ्गादिर्दृष्टान्त इति ॥२७॥

प्रत्यक्षातिरिक्तं प्रमाणमेव न भवति व्याप्यत्वाद्यसिद्धेरिति चार्वाकः पुनः शङ्कते—

न सकृद्ग्रहणात् सम्बन्धसिद्धिः[1] ॥२८॥

सकृत् सहचारग्रहणात् सम्बन्धो व्याप्तिर्न सिध्यति, भूयस्त्वं चाननुगतम् । अतो व्याप्तिग्रहासम्भवान्नानुमानेनार्थसिद्धिरित्यर्थः ॥२८ ॥

समाधत्ते—

नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः[2] ॥२९॥

धर्मसाहित्यं धर्मतायां साहित्यम्, सहचार इति यावत् । तथा चोभयोः साध्यसाधनयोरेकतरस्य साधनमात्रस्य वा नियतोऽव्यभिचरितो यः सहचारः स व्याप्तिरित्यर्थः । उभयोरिति समव्याप्तिपक्षे प्रोक्तम्[3] । नियमश्चानुकूलतर्केण ग्राह्य इति न व्याप्तिग्रहासम्भव इति भावः ॥२९॥

---

१. ५।२७ सूत्रे न्यायशास्त्रीया अवयवा एव गृहीता इत्यतः व्याप्तिस्वरूपमपि विचार्यमिति मत्वैव ५।२८ सूत्रे व्याप्ति-विषय आरब्धः । ५।२८ सूत्रे व्याप्त्यर्थे संबन्धशब्दः; ५।२९ सूत्रे तु व्याप्तिशब्द एव प्रयुक्त इति दर्शनीयम् । वस्तुतः नेदं स्थलं व्याप्तिविचारयोग्यमिति ।

२. उभयोरित्यस्य तात्पर्यं न प्रकरणतो विज्ञायते यद्यपि पदस्यास्य साध्यसाधनयोरित्येवार्थेन भवितव्यमेव । यस्मान् मूलग्रन्थात् सूत्रमिदम् आहृतं तस्मिन् ग्रन्थे एतस्मात् सूत्रात् प्राक् साध्यसाधनयो निर्देश आसीदेवेति विज्ञायते । उभयोः-समव्याप्तिकयोरित्यर्थ वृत्तिः ।

३. 'अविनाभावो व्याप्तिः, सा च द्वेधा, समव्याप्तिरसमव्याप्तिश्च । समनियतयो द्वयोर्मध्ये एकेनापरस्य व्याप्तिः समव्याप्तिः, यथा पृथिवीत्वगन्धयोः । या चासमनियतमोर्द्वयोर्मध्ये एकेनापरस्य व्याप्तिः साऽसमव्याप्तिः, यथाऽग्निना धूमस्य (सर्वदर्शनसंग्रह-दर्शनाङ्कुरटीका, पृ० १२) । अत्र "समासमाविनाभावौ एकत्र स्तो यदा तदा । समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः"

व्याप्तिर्वक्ष्यमाणशक्तयादिरूपं पदार्थान्तरं न भवतीत्याह—

न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥३०॥

नियतधर्मसाहित्यातिरिक्ता व्याप्तिर्न भवति व्याप्तित्वाश्रयस्य वस्तुनोऽपि कल्पनाप्रसङ्गात्। अस्माभिस्तु सिद्धवस्तुन एव व्याप्तित्वमात्रं क्लृप्तमित्यर्थः ॥३०॥

परमतमाह—

निजशक्त्युद्भवमित्याचार्याः[1] ॥३१॥

अपरे त्वाचार्या व्याप्यस्य स्वशक्तिजन्यं शक्तिविशेषरूपं तत्त्वान्तरमेव व्याप्तिरित्याहुः। निजशक्तिमात्रं तु यावद्द्रव्यस्थायितया न व्याप्तिः, देशान्तरगतस्य धूमस्यापि वह्न्यव्याप्यत्वात। देशान्तरगमनेन च सा शक्तिर्नाश्यत इति नोक्तलक्षणेऽतिव्याप्तिः। स्वमते तूत्पत्तिकालावच्छिन्नत्वेन धूमो विशेषणीय इति भावः ॥३१॥

आधेयशक्तियोग[2] इति पञ्चशिखः[3] ॥३२॥

बुद्धयादिषु प्रकृत्यादिव्याप्यताव्यवहारादाधारताशक्तिमत्त्वं व्यापकताऽधेयताशक्तिमत्त्वं च व्याप्यत्वमिति पञ्चशिख इत्यर्थः ॥३२॥

नन्वाधेयशक्तिः किमर्थं कल्प्यते व्याप्यस्य वस्तुनः स्वरूपशक्तिरेव व्याप्तिरस्तु; तत्राह—

---

इति व्याप्तिपरकः श्लोको द्रष्टव्यः। ( प्रयोजकः = साध्यस्य अनुमापकः )। श्लोकस्यास्यार्थः तार्किकरक्षातः तत्त्वचिन्तामणि-व्याप्तिवादीय-माथुरीटीकातश्च ज्ञेयः। दिङ्नागकृतोऽयं श्लोक इत्याधुनिकाः।

१. सूत्रं स्वमतं प्रकटयतीति वृत्तिकारः। इतियोगेऽपि कथं द्वितीयैकवचनस्योद्भवशब्दस्य प्रयोग इति चिन्त्यमेव। कोऽयमाचार्य इति न विज्ञायते। साध्यसाधनयो र्निजा या शक्तिः तदुद्भवं साहित्यम् (यथा वह्निसाहित्यं धूमे) इति तात्पर्यं वृत्तिमते। निजशक्त्युद्भवं तत्त्वान्तरमेव व्याप्तिरित्यर्थो भाष्यमते।

२. आधेयशक्तियोगे—इति च्छेदो वृत्तिमते। आधेयशक्त्या योगे संबन्धे सति साहित्यं व्याप्तिरित्यर्थः; आधेयशक्तिभवं साहित्यं व्याप्तिरिति पञ्चशिखस्य मतम्।

३. पञ्चशिखविरचिते षष्टितन्त्रशास्त्रे पुष्कलाऽनुमानचर्चासीदिति विज्ञायते। उक्तं च जयमङ्गलायाम्—षष्टितन्त्रे व्याख्यातं पूर्ववत् शेषवत् सामान्यतोदृष्टमिति···(५ का०)। अतः पञ्चशिखेन व्याप्ति-स्वरूपं व्याख्यातमिति निश्चप्रचम्। सूत्रमिदं पञ्चशिखमतप्रदर्शकमिति स्वीकार्यमेव।

न [1]स्वरूपशक्तिर्नियमः पुनर्वादप्रसक्तेः[2] ॥३३॥

स्वरूपशक्तिस्तु नियमो व्याप्तिर्न भवति पौनरुक्त्यप्रसङ्गात्। घटः कलश इतिवद् बुद्धिर्व्याप्येत्यत्राप्यर्थाभेदेनेत्यर्थः। स्वरूपमिति वक्तव्ये शक्तिपदोपादानं व्याप्ते र्व्याप्यधर्मतोपपादनाय ॥३३॥

पौनरुक्त्यं स्वयमेव विवृणोति—

विशेषणानर्थक्यप्रसक्तेः[3] ॥३४॥

पूर्वसूत्र एव व्याख्यातप्रायमिदम् ॥३४॥

दूषणान्तरमाह—

पल्लवादिष्वनुपपत्तेश्च[4] ॥३५॥

पल्लवादिषु वृक्षादिव्याप्यताऽस्ति स्वरूपशक्तिमात्रन्तु तस्य लक्षणं न सम्भवति। छिन्नपल्लवेऽपि स्वरूपशक्तेरनपायेन तदानीमपि व्याप्यतापत्तेरित्यर्थः। आधेयशक्तिस्तु छेदकाले विनष्टेति न तदानीं व्याप्तिरिति भावः ॥३५॥

ननु किं पञ्चशिखेन निजशक्त्युद्भवो व्याप्तिरेव नोच्यते; तर्हि धूमस्य वह्न्याधेयत्वाभावाद्वह्न्यव्याप्यतापत्तिरिति; तत्राह—

आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥३६॥

आधेयशक्तेर्व्याप्तिसिद्धौ निजशक्त्युद्भवोऽपि व्याप्तित्वेन सिद्ध एव समानन्यायाद् युक्तिसाम्यादित्यर्थः। अननुगमस्तु नानार्थशब्दवन्न दोषाय। एवं स्वमतेऽपि नानाविधसहचारा एव व्याप्तयो बोध्याः। नचैवमप्यनुमितिहेतुत्वे व्याप्तीनामननुगमः स्यादिति वाच्यम्; तृणारणिमण्यादिवत् कार्यगतवैजात्याद्युपपत्तेरिति।

---

१. शक्तिर्द्विधा सहज (=निज)-शक्तिराधेयशक्तिश्च। स्वाश्रय-समवायिकारणजन्या सहजशक्तिः, यथा वह्नेर्दाहिकाशक्तिः। आधेयशक्तिस्तु स्वाश्रयभावहेत्वतिरिक्तपदार्थजन्या, यथा प्रोक्षणादिजन्या व्रीह्यादिनिष्ठा शक्तिः। तत्तदर्थनिरूपिता तत्तत्पदनिष्ठा संकेतव्यङ्ग्या सहजशक्तिरनित्या। आधेयशक्तिसहजशक्तिविषये द्र० भाट्टचिन्तामणि, पृ० ३३-३४।

२. २।३१ सूत्रीयव्याप्तिलक्षणानाश्रयणे (निजशक्तेर्व्याप्तित्वाभावे) या युक्तिः साऽत्रोच्यते पञ्चशिखमतावलम्बिना—इति वृत्तिकृन्मतम्।

३. २।३१ सूत्रीय-व्याप्तिलक्षणमनभ्युपगच्छता पञ्चशिखमतावलम्बिनैव पुनरिदमुच्यते—इति वृतिकृन्मतम्।

४. पञ्चशिखमतावलम्बी पुनः निजशक्ते र्व्याप्तित्वाभावे युक्त्यन्तरं कथयतीति वृत्तिकृन्मतम्।

पञ्चावयवयोगाद् गुणादिसिद्धिरिति[1] यदुक्तं तदुपपादनाय व्याप्तिनिर्वचनेनानुमानप्रामाण्ये बाधकमपास्तम् ॥३६॥

इदानीं पञ्चावयवरूपशब्दस्य ज्ञानजनकत्वोपपत्तये शब्दशक्त्यादिनिर्वचनेन तदनुपपत्तिरूपं शब्दप्रामाण्ये परेषां बाधकमपास्यते—

वाच्यवाचकभावः सम्बन्धः शब्दार्थयोः ॥३७॥

अर्थे वाच्यताख्या शक्तिः, शब्दे वाचकताख्या शक्तिरस्ति; सैव तयोः सम्बन्धोऽनुयोगितावत् । तज्ज्ञानाच्छब्देनार्थोपस्थितिरित्यर्थः ॥३७॥

शक्तिग्राहकाण्याह—

त्रिभिः[2] सम्बन्धसिद्धिः ॥३८॥

आप्तोपदेशो वृद्धव्यवहारः प्रसिद्धपदसामानाधिकरण्यम्—इत्येतैस्त्रिभिरुक्तसम्बन्धो गृह्यत इत्यर्थः ॥३८॥

न कार्ये नियम उभयथा दर्शनात्[3] ॥३९॥

स च शक्तिग्रहः कार्य एव भवतीति नियमो नास्ति लोके कार्यवदकार्येऽपि वृद्धव्यवहारादिदर्शनादित्यर्थः । यथा हि 'गामानयेत्यादिकार्यपरवाक्याद् वृद्धस्य गवानयनादिव्यवहारो दृश्यते, एवमेव 'पुत्रस्ते जातः' इत्यादिसिद्धपरवाक्यादपि पुलकादिव्यवहारो दृश्यत इति[4] । सिद्धार्थशब्दप्रामाण्यसिद्धौ च विवेके वेदान्तप्रामाण्यं सिद्धमित्याशयः ॥३९॥

---

१. पञ्चावयवयोगात् सुखसंवित्तिरिति सूत्रं द्र० (५।२७) । सुखादिसंवित्तिरिति पाठान्तरमप्यस्य भाष्ये दर्शितम् ।

२. त्रिभिरिति पदेन कथमाप्तोपदेशादयः त्रय उपाया एव गृहीता इति न सुष्ठु विज्ञायते । बहवः संबन्धग्रहोपाया इति पूर्वाचार्याः—'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च । वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' ॥इति॥ अस्पष्टार्थमिदं सूत्रम् ।

३. शक्तिग्रहः कार्येऽर्थे एव इति मीमांसकाः । अकार्येऽपि नैयायिका वेदान्तिनश्च । कार्यान्विस्वार्थे एव शब्दशक्तिरिति मतस्योपपत्तिः खण्डनं च विस्तरेण विवरणप्रमेयसंग्रहे ४ सूत्र-द्वितीयवर्णकव्याख्यायाम् न्यायमञ्जर्यां च कृतम् ( भाग १, पृ० २६६-२७० ) । तुल० तत्र लोके वेदे च कार्यपराणामिव सिद्धार्थानामपि प्रामाण्यम् (वेदान्तपरिभाषा, आगमपरि०) ।

४. द्र० कार्यबोधे यथा चेष्टा लिङ्गं हर्षादयस्तथा । सिद्धबोधेऽर्थवत्तैव शास्त्रत्वं हितशासनात् ॥इति

ननु भवतु लोके सिद्धे शक्तिग्रहोऽर्थप्रत्ययादिदर्शनात्, वेदे तु कथं भविष्यत्यकार्यबोधनवैयर्थ्यादिति; तत्राह—

लोके व्युत्पन्नस्य वेदार्थप्रतीतिः ।।४०।।

लोके शब्दशक्तिव्युत्पन्नस्य पुरुषस्य तदनुसारेणैव वेदार्थप्रतीतिः । न हि लोके शक्तिर्भिन्ना वेदे च भिन्ना—'य एव लौकिकास्त एव वैदिकाः' इति [1]न्यायात् । अतो लोके सिद्धार्थपरत्वसिद्धौ वेदेऽपि तत् सिध्यतीत्यर्थः ।।४०।।

अत्र शङ्कते—

न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्यातीन्द्रियत्वात् ।।४१।।

ननु त्रिभिः ( द्र० ५।३८ ) आप्तोपदेशादिभिर्वेदशब्देन शक्तिग्रहः सम्भवति, वेदस्यापौरुषेयत्वेन तदर्थेष्वाप्तोपदेशासंभवात् । तथा वेदार्थस्यातीन्द्रियतया तत्र वृद्धव्यवहारस्य प्रसिद्धपदसामानाधिकरण्यस्य च ग्रहीतुमशक्यत्वादित्यर्थः ।।४१।।

तत्रातीन्द्रियार्थत्वमादौ निराकरोति—

न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात्[2] ।।४२।।

यदुक्तं तन्न । यतो देवतोद्देश्यकद्रव्यत्यागादिरूपस्य यज्ञदानादेः स्वरूपत एव धर्मत्वं वेदविहितत्वम्, वैशिष्ट्यात् प्रकृष्टफलकत्वात् । यज्ञादिकं चेच्छादिरूपत्वान् नातीन्द्रियम्[3] । न तु यज्ञादिविषयकापूर्वस्य धर्मत्वं येन वेदविहितस्यातीन्द्रियता स्यादित्यर्थः ।

ननु तथापि देवताद्यतीन्द्रियार्थघटितत्वमस्तीति चेन्न, अतीन्द्रियेष्वपि पदार्थतावच्छेदकेन सामान्यरूपेण प्रतीतेर्वक्ष्यमाणत्वादिति ।।४२।।

---

१. य एव लौकिकाःशब्दास्त एव वैदिकास्त एवैषामर्था इति शबरः ( १ । ३ । ३० भा० ) । 'न समन्वयात्' इति प्रतिशाख्य (वाज० प्रा०)-व्याख्यानावसरे उवट आह—य एव वैदिकास्त एव लौकिकास्त एव तेषामर्थाः । अनन्तदेवोऽपि–य एव वैदिकास्त एव लौकिकास्त एव चामीषामर्था इत्याहात्र ।

२. देशकालाद्यपेक्षयैव यागादीनां धर्मत्वं (धर्महेतुत्वम्) इति सूत्रतात्पर्यमिति वृत्तिः । वृत्तिमतमेव समीचीनमिति प्रतिभाति, मीमांसादिषु तथैव स्वीकारात्। द्र०यस्मिन् देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेषु अधर्मो भवति' ( शारीरक० ३।१। २५ ) । द्र० शाबरभाष्यम् ( १।१।४ ) अपि ।

३. वाक्यमिदं क्वचिन्न पठ्यते ।

यच्चोक्तमपौरुषेयत्वेनाप्तोपदेशाभाव इति; तदपि निराकरोति—

निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते[1] ।।४३।।

अपौरुषेयत्वेऽपि वेदानां स्वाभाविकी याऽर्थेषु शक्तिरस्ति सैवाऽप्तैर्वृद्धपरम्पराभिर्व्युत्पत्त्यास्य 'शब्दस्यायमर्थः' इत्येवंरूपया व्यवच्छिद्यते शिष्येभ्योऽर्थान्तराद् व्यावर्त्योपदिश्यते, न त्वाधुनिकशब्दवत् स्वयं संकेत्यते येन पौरुषेयत्वापेक्षा स्यादित्यर्थः ।।४३।।

ननु तथाप्यतीन्द्रियदेवताफलादिषु कथं शक्तिग्रहो वैदिकपदानां स्यात्; तत्राह—

योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः[2] ।। ४४ ।।

[3]प्रत्यक्षाप्रत्यक्षेषु पदार्थेषु सामान्यधर्मपुरस्कारेण तत्सिद्धिः शक्तिग्रहो भवति, साधारण्येन पदानां प्रतीतिजनकत्वस्यानुभवसिद्धत्वात् । विशेषस्त्वतोन्द्रियोऽपूर्व एव वाक्यार्थो न च तस्य ग्रहणं प्रागपेक्ष्यत इत्यर्थः ।। ४४ ।।

शब्दप्रामाण्यप्रसंगेनैव शब्दगतं विशेषमवधारयति—

न नित्यत्वं वेदानां कार्यत्वश्रुतेः ।।४५।।

'स तपोऽतप्यत तस्मात् त्रयो वेदा अजायन्तेत्यादि[4] श्रुतेर्वेदानां न नित्यत्वमित्यर्थः । वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि[5] ।।४५।।

तर्हि किं पौरुषेया वेदाः; नेत्याह—

न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात् ।।४३।।

---

१. वैदिकशब्दार्थ विधारणं व्युत्पत्तिसापेक्षमिति सूत्रतात्पर्यं वृत्तिमते । वैदिककर्मणां फलं तु अर्थाविधारणं विनापि भवितुमर्हति—इति वृत्तिकारो वक्ति ।

२. प्रसिद्धेषु लौकिकपदार्थ-विषयकः, अप्रसिद्धेषु वैदिक-पदार्थ-विषयकश्च बोधः वृद्धपरम्पराहेतुक इति सूत्रतात्पर्य वृत्तिमते ।

३. तुल० भवति च सामान्यप्रत्ययः अदृष्टपूर्वायामपि गोव्यक्तौ (शाबरभाष्य १।३।३३)

४. तुल० शतपथ ब्रा० १३।५।८।३; ६।१।१।८ इति च । अनिरुद्धेनेदं वाक्यमुद्धृतं ततश्च भिक्षुणापि ।

५. द्र० 'अस्माकन्तु मते वेदो न नित्यः, उत्पत्तिमत्त्वात्····सर्गाद्यकाले परमेश्वरः पूर्वसिद्धवेदानुपूर्वी-समानानुपूर्वीकं वेदं विरचितवान् न तु तद् विजातीयमिति' (वेदान्तपरिभाषा, परि० ४) । सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वसर्गानुसारेण वेदान् विरचयन्···(भामती ९।१।३) ।

ईश्वरप्रतिषेधादिति शेषः । सुगमम् ।।४६।।

अपरः कर्त्ता भवत्वित्याकाङ्क्षायामाह—

मुक्तामुक्तयोरयोग्यत्वात् ।।४७।।

जीवन्मुक्तधुरीणो विष्णुर्विशुद्धसत्त्वतया निरतिशयसर्वज्ञोऽपि वीतरागत्वात् सहस्रशाखवेदनिर्माणायोग्यः । अमुक्तस्त्वसर्वज्ञत्वादेवायोग्य इत्यर्थः ।।४७।।

नन्वेवमपौरुषेयत्वान्नित्यत्वमेवागतम्; तत्राह—

नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ।।४८।।

स्पष्टम् ।।४८।।

नन्वङ्कुरादिष्वपि कार्यत्वेन घटादिवत् पौरुषेयत्वमनुमेयम्; तत्राह—

तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः[1] ।।४९।।

यत् पौरुषेयं तच्छरीरजन्यमिति[2] व्याप्तिर्लोके दृष्टा तस्या बाधादिरेवं सति स्यादित्यर्थः ।।४९।।

नन्वादिपुरुषोच्चरितत्वाद्वेदा अपि पौरुषेया एवेत्याह—

यस्मिन्नदृष्टेऽपि[3] कृतबुद्धिरुपजायते तत्पौरुषेयम् ।।५०।।

दृष्ट इवादृष्टेपि यस्मिन् वस्तुनि कृतबुद्धिर्बुद्धिपूर्वकत्वबुद्धिर्जायते तदेव पौरुषेयमिति व्यवह्रियत इत्यर्थः ।

एतदुक्तं भवति—न पुरुषोच्चरिततामात्रेण पौरुषेयत्वं श्वासप्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयत्वव्यवहाराभावात्[4], किन्तु बुद्धिपूर्वकत्वेन; वेदास्तु

---

१. तेषाम् = अङ्कुरादीनाम्, तद्योगे = कर्तृत्वयोगे । कार्यत्वमनुमेयमित्युच्यते चेत् तर्हि दृष्टबाधादिदोषाः स्युरित्यर्थः। दृष्टस्य अकर्तृत्वस्य बाधः, अदृष्टस्य सकर्तृकत्वस्य कल्पना च स्याताम् इति सूत्रतात्पर्यं वृत्तिमते ।

२. कर्तृत्व—शरीरजन्यत्वसंबन्धविषये द्र० न्या० वा० तात्पर्यटीका ४।१।२१; न्यायमञ्जरी भाग १; पृ० १७५-१७७; तत्त्वचिन्तामणि ( ईश्वरानुमान प्रक० ); प्रशस्तपाद द्रव्यप्रक० सेतु, पृ० २९४-२९५; न्यायकुसुमाञ्जलि ५।२ ।

३. यस्मिन् कृतबुद्धिः—यद्विशेष्यिका कृतिजन्यत्वप्रकारिका बुद्धि रित्यर्थो वृत्तिमते ।

४. द्र० बृहदा० २।४।१० ( अरे अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो···· )। 'निःश्वसितमिव निःश्वसितम् । यथा अप्रयत्नेनैव पुरुषनिःश्वासो भवति····नियतरचनावतो वेदस्याभिव्यक्तिः पुरुषनिःश्वासवन्नच पुरुषबुद्धिप्रयत्नपूर्वकः' ( शा० भा० ); द्र० गिरिटीका ( बुद्धिपूर्वप्रणीतत्वाभावेन···· )।

निःश्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयम्भुवः सकाशात् स्वयं भवन्ति; अतो न ते पौरुषेयाः । तथा च श्रुतिः—तस्यैतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः ( बृहदा० २।४।१०; ४।५।११ ) इत्यादिरिति ।।५०।।

नन्वेवं यथार्थवाक्यार्थज्ञानपूर्वकत्वाच्छुकवाक्यस्येव वेदानामपि प्रामाण्यं न स्यात्; तत्राह—

निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्[1] ।।५१।।

वेदानां निजा स्वाभाविकी या यथार्थज्ञानजननशक्तिस्तस्या मन्त्रायुर्वेदादावभिव्यक्तेरुपलम्भादखिलवेदानामेव स्वत एव प्रामाण्यं सिद्धयति, न वक्तृयथार्थज्ञानमूलकत्वादिनेत्यर्थः[2] । तथा च न्यायसूत्रम्—मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमिति ( २।१।६७ ) ।।५१।।

गुणादीनाञ्च नात्यन्तबाधः (५।२६) इति प्रतिज्ञायां न्यायेन सुखादिसिद्धेरित्येको हेतुरुपन्यस्तः प्रपञ्चितश्च[3] । साम्प्रतं तस्यामेव हेत्वन्तरमाह—

नासतः[4] ख्यानं नृश्रृङ्गवत्[5] ।।५२।।

आस्तां तावत् पञ्चावयवेन सुखादिसिद्धिः । ज्ञानमात्रादपि तत्सिद्धिः । अत्यन्तासत्त्वे सुखादीनां ज्ञानमेव नोपपद्यते नरश्रृङ्गादीनामभानादित्यर्थः । तथा च ब्रह्मसूत्रम्—नाभाव उपलब्धेरिति (२।२।२८) । शुक्तिरजतस्वप्नमनोरथादौ च मनःपरिणामरूप एवार्थः प्रतीयते नात्यन्तासन्निति वक्ष्यति ।।५२।।

---

१. इदं स्वतः प्रामाण्यं वेदस्य, न तु वेदशब्द-जन्यार्थज्ञानस्येति ज्ञेयम् । प्रमाणरूपस्य वेदस्यास्ति स्वतःप्रमाण्यम् प्रमाणान्तरानपेक्षणात् ।

२. द्र० उपस्कार ६।१।१–'तत् प्रामाण्यं च वक्तृ-यथार्थवाक्यार्थ-ज्ञानलक्षणगुणपूर्वकत्वादुपपद्यते' ।

३. केषुचित् संस्करणेषु 'गुणादीनां····प्रपञ्चितश्च' इत्यंशः ५१ तम सूत्रभाष्यान्तर्गतत्वेन मुद्रितः । अस्मन्मते तु अंशोऽयं ५२ तम सूत्रपातनिकारूप एव ।

४. तदुक्तं सांख्यसूत्रे—नासतःख्यातिः नृश्रृङ्गवत्, नानिर्वचनीयस्य तदभावात्, नान्यथाख्यातिः स्ववचोव्याघातादिति (मञ्जूषा पृ० २२९ सभापतिसंस्क०) ।

५. असत्-ख्यातिवादनिराकरणपरमिदं सूत्रमिति वृत्तिः । असत्-प्रकाशनसमर्थं ज्ञानमसद् रजतं प्रकाशयति ( शुक्तौ )—इत्यसतः ख्यातिरेव भवतीति शून्यवादिनः । ये पुनः 'शुक्तिरजतसम्बन्धः असन्' इत्याहुः, तेऽपि असत्-ख्यातिवादिन इति केचिदाहु· ।

नन्वेवं गुणादिरत्यन्तं सन्नेव भवतु तथा च नात्यन्तबाधः (५।२६), इत्यन्तपद-वैयर्थ्यमिति; तत्राह—

न सतो बाधदर्शनात्[1] ॥५३॥

अत्यन्तसतोऽपि गुणादेर्भानं न युक्तम्, विनाशादिकाले बाधदर्शनात् । चैतन्ये भासमानस्य जगतश्चैतन्य एव बाधदर्शनाच्च । अथात आदेशो नेति नेति (बृहदा० २।३।६), नेह नानास्ति किञ्चन (बृहदा० ४।४।१९), यत्र देवा न देवा माता न मातेत्यादि[2] श्रुतिभिर्न्यायैश्चेत्यर्थः ॥५३॥

नन्वेवमपि सदसद्भ्यां भिन्नमेव जगद्भवतु, तथाप्यत्यन्तबाधप्रतिषेधानुपपत्ति-रिति; तत्राह—

नानिर्वचनीयस्य[3] तदभावात्[4] ॥५४॥

---

१. अख्यातिवादिमत-निराकरणमस्मिन् सूत्रे इति वृत्तिः । शुक्तौ यद्रजतमिति ज्ञानं (भ्रम-पदवाच्यम्) तत्र ज्ञानद्वयम्—ग्रहणात्मकं स्मरणात्मकं च । इदमो ज्ञानं ग्रहणात्मकम्, तच्च सामान्यज्ञानम् रजतज्ञानं स्मरणात्मकम्; तच्च विशेषज्ञानम्। भ्रमस्थले सामान्यज्ञानेन सह विशेषज्ञानस्य भेदज्ञानं न भवति, ज्ञानद्वयाभेद एव वर्तते । नात्र विशिष्टज्ञानं किमपि । नात्र भेदः ख्यातो भवतीति अख्यातिवादोऽयमुच्यते ।

२. ब्रह्मोप० (२) इत्यत्र पठ्यते—यत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता····। बृहदारण्यके च—अत्र पिता ऽ पिता भवति माता ऽ माता लोका अलोका देवा अदेवा वेदा अवेदा ···(४।३।२२) ।

३. अनिर्वचनीयख्यातेः सांख्यैरनङ्गीकारात् ख्यात्यन्तराणां च निरस्तत्वात् (वि० प्र० संग्रह, पृ० ६३) । एतेनेदं प्रतीयते यद् इदं सूत्रम् एतत्प्रकरण-स्थानि सूत्रान्तराणि च भारतीतीर्थविद्यारण्येन विज्ञातानि ।

४. भ्रमः विशिष्टज्ञानमेव । अज्ञानोत्पन्नं रजतं प्रातिभासिकमित्युच्यते । नेदं रजतं कालत्रयेऽस्ति; अतः न सत्; रजतो भातीत्यत्र न संशयः; अत इदं न असत्, किन्तु 'मिथ्या' इति । एतत्सूविषये नागेश आह—''एवमध्यासोऽपि अनिर्वाच्य एव । तदुक्तं तैः [वाचस्पतिभिः] एव × × स चायमध्यासो-ऽनिर्वचनीयः सर्वेषामेव संमतः इति । 'नानिर्वचनीयस्य ख्यातिः' इति सांख्य-सूत्रोक्तं तत्खण्डनं तु सदसद्विलक्षणमुत्पद्यतेऽनिर्वचनीयमिति बाह्यैकदेशिमत-सिद्धस्य न तूक्तानिर्वचनीयवादस्य । इदमेवानिर्वचनीयत्वं सदसत्ख्यातिशब्देन तेनोक्तमिति बोध्यम्'' (लघुमञ्जूषा, पृ० २४५ सभापतिसंस्क०) ।

सत्त्वेनासत्त्वेन चानिर्वचनीयम्[1], तादृशस्यापि भानं न घटते[2] तदभावात्, सदसद्भिन्नवस्त्वप्रसिद्धेरित्यर्थः । दृष्टानुसारेणैव कल्पनाया औचित्यादिति भावः ॥५४॥

नन्वेवं किमन्यथाख्यातिरेवेष्टा; नेत्याह—

नाऽन्यथाख्यातिः[3] स्ववचोव्याघातात्[4] ॥५५॥

अन्यद्वस्त्वन्यरूपेण भासत इत्यपि न युक्तं स्ववचोव्याघातात् । अन्यत्रान्यरूपस्य नृशृङ्गतुल्यत्वमन्यथा शब्देनोच्यतेऽन्यथा च तस्य भानमुच्यत इति स्ववच एव व्याहतम् । असतो भानासम्भवस्यान्यथाख्यातिवादिभिरपि वचनादित्यर्थः । पुरोवर्त्तिन्यसत्त्वेऽन्यत्र तत्सत्ताया भानाप्रयोजकत्वमिति भावः ।

न च सर्वत्रासतो भाने सामग्री न सम्भवति सन्निकर्षाद्यभावादित्यतः क्वचित् सत्तामात्रमपेक्ष्यत इति वाच्यम्, अनादिवासनाधाराया एव भ्रमहेतुत्वसम्भवादिति ॥५५॥

नात्यन्तबाध (५।२६) इति पूर्वोक्तं विवृण्वानः स्वसिद्धान्तमुपसंहरति—

सदसत्ख्याति[5] र्बाधाबाधात्[6] ॥५६॥

---

१. 'न सत् नासन् नापि सदसत् परस्परविरोधाद् इत्यनिर्वाच्यमेवारोपणीयं मरीचितोयम् आस्थेयम् (अध्यास-भाष्यभामती, पृ० २३); 'नहि ब्रह्मवादिनो नीलाद्याकारां वृत्तिमभ्युपगच्छन्ति किन्तु अनिर्वचनीयं नीलादीति(भामती २।२।२८)

२. द्र० अविद्या नाम काचिद् अनिर्वचनीयभावरूपा नास्तीतिवादिनः पक्ष····(वि० प्र० संग्रह, पृ० ४५)

३. भाट्टमीमांसकानां नैयायिकानां च मतमिदम् । भ्रमः विशिष्टज्ञानमेव, तच्च अयथार्थम्, यद्यपि विशेष्यस्य विशेषणस्य च ज्ञानं यथार्थमेव । ज्ञानलक्षणासन्निकर्षणबलेन रजतस्य अलौकिक-प्रत्यक्षं भवति शुक्तौ । 'इदम्'–पदवाच्यं विशेष्यम्, रजतत्वं विशेषणम् ।

४. भिक्षुणा सिद्धान्तितं यद् योगशास्त्रे अन्यथाख्यातिवादोऽभ्युपगम्यते, न तु सांख्यशास्त्रे—'अत्र च शास्त्रे अन्यथाख्यातिः सिद्धान्तो न तु सांख्यवद् अविवेकमात्रम्' (योगवा० १।८), अस्मिंश्च दर्शने सांख्यानामिव अविवेको नाविद्याशब्दार्थः, किन्तु वैशेषिकादिवत् विशिष्टज्ञानमेवेति सूत्रभाष्याभ्यामवगन्तव्यम्' (योगवा० २।५) ।

५. शुक्तौ रजतज्ञाने सतोऽसतश्च ज्ञानं भवति । इदमंशे सतः ख्यातिर्भवति, रजतांशे असतः ख्यातिर्भवति (रजतं तत्र नास्ति) ।

६. उद्धृतमिदं मञ्जूषायाम् (पृ० २२) योगवार्त्तिके (३।१३) च । द्र० 'सदसद्बाधाबाधाभ्यामितिसांख्यसूत्र-विरोधश्चेत' (योगवा० २।२९) ।

सदसत्ख्यातिरेव सर्वेषां गुणादीनाम्, कुतो बाधाबाधात्, तत्र स्वरूपेणाबाधः सर्ववस्तूनां नित्यत्वात्, संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्येऽस्ति, यथा पटादिषु लौहित्यादेस्तद्वत् । तथाऽवस्थाभिरपि बाधोऽखिलपरिणामिनां कालादिष्वित्यर्थः ।

बाधश्च प्रतिपन्नधर्मिणि निषेधबुद्धिविषयत्वम् । असत्त्वं त्वभावः सोऽप्यधिकरणस्वरूप इति । न च सदसत्त्वयोर्विरोध इति वाच्यम्, प्रकारभेदेनाविरोधात् । यथाहि लौहित्यं बिम्बरूपेण सत् स्फटिकगत-प्रतिबिम्बरूपेण चासदिति दृष्टम् । यथा वा रजतं वणिग्वीथीस्थरूपेण सच्छुक्तचध्यस्तरूपेण चासत्; तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्यादावध्यस्तरूपेण चासदिति । तदुक्तम्—

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥

इति । एवमेवावस्थाभेदेनापि सदसत्त्वमविरुद्धम् । यथाहि वृक्षादिः प्ररूढाद्यवस्थाभिः सन्नप्यङ्कुराद्यवस्थाभिरसन् भवति, तथैव प्रकृत्यादिकं सदसदात्मकमिति । [1]तदुक्तम्—

अव्यक्तं कारणं यत् तन्नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः ॥ (विष्णु० १।२।९)

[2]इति । एतच्चास्माभिर्ब्रह्ममीमांसाभाष्ये[3] योगवार्त्तिके च (२।१२) प्रपञ्चितमिति दिक् ॥५६॥

अयं विचारः पर्याप्तः; इदानीं शब्दविचारः प्रसङ्गागत आगन्तुकतयाऽन्ते प्रस्तूयते—

**प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः[4] शब्दः ॥५७॥**

---

१. नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च । कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ॥ (भाग० ११।२२।४२) इति । एतत्सूत्रोक्तं च प्रपञ्चस्य सदसत्त्वं स्मर्यते—इत्यधिकः पाठः क्वचिद् दृश्यते ।

२. श्लोकोऽयं बहुषु पुराणेषु दृश्यते—वायु० ४।१८-१९ ब्रह्माण्ड० १।३।८-९ ।

३. नाभाव उपलब्धेः (ब्रह्मसू० २।२।२८), भावे चोपलब्धेः (२।१।१५), सत्त्वाच्चावरस्य (२।१।१७), असद्व्यपदेशादिति चेन्न (२।१।१८), वैधर्म्याच्च न स्वप्नादिवत् (२।२।२९), सन्ध्ये सृष्टिराह हि (३।२।१) इतीमानि सूत्राणि सभाष्याण्यालोच्यानि ।

४. स्फोटवादस्य खण्डनं बहुत्र दृश्यते । द्र० औत्पत्तिकस्येति····(मीमांसा १।१।५) सूत्रीयं भाष्यं वार्त्तिकं च; न्यायमञ्जरी (भाग १ पृ० ३४४-३५५);

प्रत्येकवर्णेभ्योऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकपदं स्फोट इति [1]योगैरभ्युगभ्यते, कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव; स च शब्दविशेषः पदाख्योऽर्थस्फुटीकरणात् स्फोट[2] इत्युच्यते ।

स शब्दोऽप्रामाणिकः, कुतः प्रतीत्यतीतिभ्याम् । स शब्द किं प्रतीयते न वा ? आद्ये येन वर्णसमुदायेनानुपूर्वीविशेषविशिष्टेन सोऽभिव्यज्यते तस्यैवार्थप्रत्यायकत्वमस्तु, किमन्तर्गडुना तेन । अन्त्ये त्वज्ञातस्फोटस्य नास्त्यर्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पनेत्यर्थः ॥५७॥

पूर्वं वेदानां नित्यत्वं प्रतिषिद्धमिदानीं वर्णनित्यत्वमपि प्रतिषेधति—

न शब्दनित्यत्वं [3]कार्यताप्रतीतेः ॥५८॥

स एवायं गकार इत्यादिप्रत्यभिज्ञाबलाद्वर्णनित्यत्वं न युक्तम्, उत्पन्नो गकार इत्यादिप्रत्ययेनानित्यत्वसिद्धेरित्यर्थः । प्रत्यभिज्ञा च तज्जातीयताविषयिणी, अन्यथा घटादेरपि प्रत्यभिज्ञया[4] नित्यतापत्तेरिति ॥५८॥

---

शारीरकभाष्यं १।३।२८ (वर्णवादिनो लघीयसी कल्पना, स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च); न्यायकन्दली(पृ० ६५०-६५७)। बौद्धैरपि स्फोटस्य काल्पनिकत्वमेव प्रतिपाद्यते—'ध्वनिभ्यो भिन्नमस्तीति श्रद्धेयमतिवह्विदम्' (प्रमाणवार्त्तिक ३।२५८) ।

१. योगसंमतस्फोटाभ्युपगमविषये ३।१७ योगसूत्रव्याख्यानानि द्रष्टव्यानि, विशेषतश्च भाष्यविवरणम् ।

२. द्र० 'वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतीतिः स स्फोटः वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोट इति' (सर्वदर्शनसंग्रह, पृ० ३००) । 'स्फुट्यते व्यज्यते वर्णैरिति स्फोटः पदादिबुद्धिप्रमाणकः, एकरूपाया बुद्धेरनेकवर्णावलम्बनत्वासंभवादिति भावः' (केन-पदभाष्य १।४ गिरिटीका)।

३. 'अनित्यः शब्दः कार्यत्वात्' इति मतं नैयायिकानामन्येषां च । 'संयोगाद् विभागाच्च् शब्दाच्च शब्दनिष्पत्तिः' (वैशेषिकसू० २।२।३१) इति सूत्रे शब्दस्य अनित्यतैव प्रतिपादिता ।

४. द्र० उत्पन्नः को विनष्टः क इतिबुद्धेरनित्यता । सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते । (भाषापरिच्छेद १६७); 'ननु वर्णा नित्याः, स एवायं गकार इति प्रत्यभिज्ञाबलात्....सोऽयं गकार इति प्रत्यभिज्ञायाः सेयं दीपज्वालेतिवत् साजात्यालम्बनात् (तर्कदीपिकाटीका, पृ० ५४) ।

शङ्कते—

पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव [1]घटस्य ॥५९॥

ननु पूर्वसिद्धसत्ताकस्यैव शब्दस्य ध्वन्यादिभिर्याऽभिव्यक्तिस्तन्मात्रमुत्पत्तिप्रतीतेर्विषयः। अभिव्यक्तौ दृष्टान्तो दीपेनेव घटस्येति ॥५५॥

परिहरति—

सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥६०॥

अभिव्यक्तिर्यद्यनागतावस्थात्यागेन वर्तमानावस्थालाभ इत्युच्यते तदा सत्कार्यसिद्धान्तः। तादृशानित्यत्वं च सर्वकार्याणामेवेति सिद्धसाधनमित्यर्थः। यदि च वर्त्तमानतया सत एव ज्ञानमात्ररूपिण्यभिव्यक्तिरुच्यते, तदा घटादीनामपि नित्यतापत्तिः। कारणव्यापारेण ज्ञानस्यैवोत्पत्तिप्रतीतिविषयत्वौचित्यादिति भावः ॥६०॥

आत्माऽद्वैते पूर्वानुक्तमपि बाधकमुपन्यसनीयमित्येतदर्थमात्माऽद्वैतनिरासः पुनरारभ्यते—

नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ॥६१॥

यद्यप्यात्मनामन्योऽन्यं भेदवाक्यवदभेदवाक्यान्यपि सन्ति तथापि नाद्वैतं नात्यन्तमभेदः। 'अजादि'वाक्यस्थैः ( श्वेताश्व० ४।५ ) प्रकृतित्यागात्यागादिलिङ्गैर्भेदस्यैव सिद्धेरित्यर्थः। न ह्यत्यन्ताभेदे तानि लिङ्गान्युपपद्यन्ते।

अभेदवाक्यानि तु साम्यादिश्रुत्यैकवाक्यतया[2] वैधर्म्यादिलक्षणाभेदपरतयोपपद्यन्ते। अभिमानादिनिवृत्त्यन्यथानुपपत्त्यापि तत्परत्वावधारणाच्चेति ॥६१॥

आत्मनामभेदे लिङ्गं बाधकमुक्तम्। आत्मैवेदं सर्वम् (छान्दोग्य० ७।२५।२),

---

१. मतमिदं मीमांसकानाम्। शब्दो नित्यः, न उत्पद्यते, अभिव्यञ्जके उपस्थितेऽस्याभिव्यक्ति र्भवति। मतमिदं दर्शितं न्यायभाष्यकृता—आकाशगुणः शब्दो विभुर्नित्याऽभिव्यक्तिधर्मक इत्येके (२।२।१२) द्र० न्या० वा० "नित्यः शब्द इति अविनश्यदाधारैकद्रव्याकाशगुणत्वात्। यदविनश्यदाधारैकद्रव्यमाकाशगुणश्च तन्नित्यं दृष्टम्, यथाकाशमहत्त्वम्, तथा शब्दस्तस्मान् नित्य इति। सोऽयं नित्यः सन् अभिव्यक्तिधर्मा, तस्याभिव्यञ्जकाः संयोगविभागनादाः" इति। शब्दनित्यताधिकरणे मतस्यास्य विस्तरेण प्रतिपादन द्रष्टव्यम् (पू० मी० १।१।६-२३)। न्या० सू० २।२।१३-३९ इत्यत्र शब्दानित्यत्वं साधितम्।

२. द्र० मुण्डकश्रुतिः ३।१।३ 'निरञ्जनः परमं साम्यमुपैति' इति (परमं प्रकृष्टं निरतिशयं साम्यं समतामद्वयलक्षणम्—भाष्य)।

ब्रह्मैवेदं सर्वमिति, (नृसिंहतापनी २।१७) श्रुत्याऽत्मनोऽनात्मभिरद्वैते तु प्रत्यक्षमपि बाधकमस्तीत्याह—

नाऽनात्मनापि प्रत्यक्षबाधात् ॥६२॥

अनात्मनापि भोग्यप्रपञ्चेनात्मनो नाद्वैतं प्रत्यक्षेणापि बाधात् । आत्मनः सर्वभोग्याभेदे घटपटयोरप्यभेदः स्यात्, घटादेः पटाद्यभिन्नात्माभेदात् । स च भेदग्राहकप्रत्यक्षबाधित इत्यर्थः ॥६२॥

नोभाभ्यां तेनैव[1] ॥६३॥

उभाभ्यां समुच्चिताभ्यामप्यात्मानात्मभ्यां नात्यन्ताभेदस्तेनैव हेतुद्वयेनेत्यर्थः ॥६३॥

नन्वेवमात्मैवेदम् छान्दोग्य० ७।२५।२) इत्यादिश्रुतीनां का गतिरिति; तत्राह—

अन्यपरत्वमविवेकानां तत्र[2] ॥६४॥

अविवेकानामविवेकिपुरुषान् प्रति तत्राद्वैतेऽन्यपरत्वमुपासनार्थकानुवाद । इत्यर्थः[3]। लोके हि शरीरशरीरिणोर्भोग्यभोक्त्रोश्चाविवेकेनाभेदो व्यवह्रियतेऽहं गौरो ममात्मा भद्रसेन इत्यादिः । अतस्तमेव व्यवहारमनूद्य तानेव प्रति तथोपासनं श्रुतिर्विदधाति सत्त्वशुद्ध्याद्यर्थमिति । अत एव परमार्थदशायामुपास्यानामात्मत्वं प्रतिषेधति श्रुतिः—

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ (केनोप० १।५)

इत्यादिनेति ॥६४॥

एकात्मवादिनां जगदुपादानकारणमपि न सम्भवतीत्याह—

नात्माऽविद्या नोभयं जगदुपादानकारणं[4] निःसङ्गत्वात् ॥६५॥

---

१. तेनैव = हेतुद्वयेनेति भिक्षुः (लिङ्गं प्रत्यक्षं च हेतुद्वयम्) । तेन = अबाधितप्रत्ययेनेति वृत्तिः । अस्पष्टार्थमिदं सूत्रम् ।

२. अन्यपरत्वम् = सामान्यपरत्व मिति वृत्तिः । विवेकिनस्तु अद्वैतश्रुतीनामुपासनादिपरत्वमवधारयन्तीति वृत्तेस्तात्पर्यम् ।

३. तत्त्वमस्यादिवाक्यानामुपासनापरत्वं केचन मीमांसका वैष्णवाश्च अभ्युपगच्छन्ति । तदिदं न साधु इति सुरेश्वरो दर्शितवान्; द० मानसोल्लास ३।२४–२५ ।

४. विवरणप्रमेयसंग्रहे ( पृ० २०७-८ ) इमे त्रयः पक्षा उपन्यस्ताः ); 'एवं तर्हि आत्मा माया चेत्युभयमुपादानमस्तु·······( वि० प्र० सं० पृ० २०७); 'अत्र संक्षेपशारीरकानुसारिणः केचिदाहुः—शुद्धमेवोपादानम्' (सि० लेश०; अ० १); 'विवरणानुसारिणस्तु सर्वज्ञत्वादिविशिष्टं मायाशबल-

केवल आत्मा, आत्माश्रिता वाऽविद्या, समुच्चितं वा कपालद्वयवदुभयं न जगदुपादानं सम्भवति, आत्मनोऽसङ्गत्वात्; संगाख्यो हि यः संयोगविशेषस्तेनैव द्रव्याणां विकारो भवति। अतोऽसङ्गत्वात् केवलस्यात्मनोऽद्वितीयस्य नोपादानत्वं नाविद्याद्वारापि संभवति, असङ्गत्वेनाविद्यायोगस्य प्रागेव निरस्तत्वात्। प्रत्येकोपादानत्ववदेवोभयोपादानत्वमप्यसङ्गत्वादेवासंभवतीत्यर्थः।

यदि चाविद्या द्रव्यरूपा पुरुषाश्रिता गगने वायुवदिष्यते तदात्माद्वैतहानिः; तथा प्रकृतिरेव सेति सिद्धसाधनं च। तादृशं चाविभागेनाद्वैतमस्माकमपीष्टमेव। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म' (छान्दोग्य० ६।२।१) इत्या[1] दि-श्रुत्यापि चाविभागरूपमेवाद्वैतं प्रतिपाद्यते। 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदिति (बृहदा० ४।२०३) श्रुत्यन्तरात्।

तथा चोक्तम्—

आसीज् ज्ञानमयोऽप्यर्थ एकमेवाविकल्पितम्।
तयोरेकतरो ह्यर्थः प्रकृतिश्चोभयात्मिका॥
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते।
इति। अविकल्पितमविभक्तम्।

तस्माद्वेदान्तानामखण्डात्माद्वैतं नार्थः, तथाप्याधुनिका वेदान्तिनोऽत्रत्य-पूर्व-पक्षजातमेव ब्रह्ममीमांसासिद्धान्ततया कल्पयन्ति। तत् तु ब्रह्मसूत्रानुक्तत्वेन प्रत्युत तद्विरोधेन चास्माभिस्तत्रैव निराकृतमिति। अत्र च ब्रह्ममीमांसासिद्धान्तो न दूष्यते, अपितु वेदान्तेष्वापाततः सम्भावितोऽर्थ एव निराक्रियत इति स्मर्तव्यम्। एवमुत्तरसूत्रेष्वपि ॥६५॥

प्रकाशस्वरूप आत्मेति स्वयं सिद्धान्तितम् (१।१४५)। तत्र 'सत्यं' 'विज्ञानमा-

---

मीश्वररूपमेव ब्रह्म उपादानम्' (सि० लेश०, अ० १); वस्तुतस्तु निर्गुणस्य ब्रह्मण उपादानकारणत्वं गौणमेव, यथाह गिरिः—'सर्वस्य प्रपञ्चस्य कारणमव्यक्तम्। तस्य परमात्मपरतन्त्रत्वात् परमात्मन उपचारेण कारणत्व-मुच्यते....पारतन्त्र्यं च पृथक्सत्त्वे प्रमाणाभावात्, आत्मसत्तयैव सत्तावत्त्वाच्च' इति (कठ० १।३।११ टीका)।

१. छान्दोग्ये ब्रह्मपदं नास्ति। एकमेवाद्वितीयं ब्रह्मासोदिति गोपालोत्तर-तापिन्याम् (९) पठ्यते।

नन्दं ब्रह्म' (बृहदा० ३।९।२८) इति श्रुतेरानन्दोऽप्यात्मनः [1]स्वरूपमिति पूर्वपक्षं निराकरोति—

नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात्[2] ॥६६॥

एकधर्मिण आनन्दचैतन्योभयरूपत्वं न भवति दुःखज्ञानकाले सुखाननुभवेन सुखज्ञानयोर्भेदादित्यर्थः। न च ज्ञानविशेषः सुखमिति वक्तुं शक्यते, आत्मस्वरूपज्ञानस्याखण्डत्वात्। अत एव चैतन्यानुभवकाले सुखस्यावरणमपि वक्तुं न शक्यते। अखण्डत्वेनानन्दावरणे दुःखं जानामीत्यनुभवानुपपत्तेः। न ह्यात्मनोंऽशभेदोऽस्ति येनानन्दांशावरणेऽपि चैतन्यांशो भायादिति।

न च श्रुतिबलेनैतेऽसत्तर्का इति वाच्यम्-'नानन्दं न निरानन्दमि'-त्यादिश्रुत्या (महोपनिषद् ५।९८) 'अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकमि'त्यादिस्मृत्या चानन्दाभावस्यापि प्रतिपादितत्वेन तर्कस्यैवात्रादर्तव्यत्वादिति ॥६६॥

नन्वेवमानन्दरूपताश्रुतेः का गतिस्तत्राह—

दुःखनिवृत्तेर्गौणः[3] ॥६७॥

दुःखनिवृत्त्याऽऽत्मनि श्रौत आनन्दशब्दो (महोपनिषद् ५।९८) गौण इत्यर्थः[4]।

---

१. 'तस्माद् विज्ञानस्वभाव आनन्दो ब्रह्मेति स्वरूपलक्षणस्य श्रौतत्वात्' (वि० प्र० सं०, पृ० २१७); ब्रह्मणः आनन्दरूपतायाः प्रतिपादनं बृहदारण्यकभाष्ये (३।९।२८) सुष्ठु कृतम्। उक्तमत्र—'तस्माद् विज्ञानमानन्दमितिः स्वरूपान्वाख्यानपरैव श्रुति र्नात्मानन्दसंवेद्यत्वार्था' इति। गिरिराह—'अनतिशयानन्दं चिदेकतानं वस्तु सिद्धम्' इति। बृहदा० ३।९।२८ व्याख्याने शंकर आह—'विज्ञप्तिर्विज्ञानं तच्चानन्दं न विषयविज्ञानवद् दुःखानुविद्धं किन्तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसम्' इति। द्र० 'एतेन यदाधुनिका वेदान्तिब्रुवा आहुः—आत्मा सुखस्वरूपः·····' (योगवा० २।९)।

२. द्र० 'न पुनश्चितिरेव सुखस्वरूपिणी, चिन्मात्रत्वश्रुतिस्मृतिसूत्रविरोधादेरुक्तत्वात्' (योगवा० २।४२)। योगसूत्रभोजवृत्तौ (४।३४) ब्रह्मण आनन्दरूपतायाः खण्डनं द्रष्टव्यम्।

३. सुखानन्दशब्दयोः दुःखाभावरूपो लाक्षणिकोऽर्थो बह्वाचार्यसंमतः—द्र० 'दृष्टश्च दुःखाभावेऽपि सुखशब्द-प्रयोगो बहुधा लोके इति' (न्यायवा० १।१।२२); 'तस्मान्नित्यानन्दप्रतिपादिका श्रुतिरात्यन्तिके दुःखवियोगे भाक्तेति युक्तमिति भावः' (न्या० वा० ता० टी०)।

४. भिक्षुरन्यत्रापि मतमिदं प्रतिपादितवान्—'कैवल्यस्य च सुखत्वम् आत्यन्तिकदुःखनिवृत्तिरूपतयोक्तम्' (योगवा० ३।१८), 'विदेहकैवल्ये तु सुखवाक्यानि

तदुक्तम्—'सुखं दुःखसुखात्यये' इति। न निरानन्दमिति श्रुतिस्त्वौपाधिकानन्दपरा सत्यसंकल्पत्वादिश्रुतिवदिति। यत् तु निरुपाधिप्रियत्वेनात्मनः सुखरूपत्वानुमानं कश्चिदाह[1]; तन्न, दुःखाभावरूपतयापि प्रेमोपपत्तेः। सुखत्वादिवदात्मत्वस्यापि प्रेमप्रयोजकत्वाच्च, अन्यथा परसुखेऽपि प्रेमापत्तेरिति ॥६७॥

गौणप्रयोगे बीजमाह—

विमुक्तिप्रशंसा मन्दानाम् ॥६८॥

मन्दानज्ञान् प्रति दुःखनिवृत्तिरूपामात्मस्वरूपमुक्तिं सुखत्वेन श्रुतिः स्तौति प्ररोचनार्थमित्यर्थः ॥६८॥

अन्तःकरणोपपत्तेः पूर्वोक्ताया आञ्जस्येनोपपत्तये [2]मनोवैभवपूर्वपक्षमपाकरोति—

न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा[3] ॥६९॥

मनसोऽन्तःकरणसामान्यस्य न विभुत्वम्, करणत्वात्, वास्यादिवत्। वाशब्दो व्यवस्थितविकल्पे। इन्द्रियत्वादप्यन्तःकरणविशेषस्य तृतीयस्य न विभुत्वमित्यर्थः। देहव्यापिज्ञानादिकं तु मध्यमपरिमाणेनैवोपपद्यत इति ॥६९॥

अत्राप्रयोजकत्वशङ्कायामनुकूलतर्कमाह—

सक्रियत्वाद् गतिश्रुतेः ॥७०॥

आत्मनो लोकान्तरगमनश्रवणेन तदुपाधिभूतस्यान्तःकरणस्य सक्रियत्वसिद्धेर्न विभुत्वं सम्भवतीत्यर्थः ॥७०॥

---

दुःखनिवृत्त्या गौणानीति (योगवा० २।४२), 'यत्तु आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् इत्येवंविधवाक्यजातं तद् दुःखनिवृत्त्याख्यसुखपरमेव····(योगवा० २।१६)

१. द्र० 'ये तु केचिदाधुनिका दुःखविरुद्धत्वमेवात्मनः सुखत्वमाहुः तन्मतं तु न दूष्यते परमप्रियत्वेनात्मनः दुःखविरुद्धत्वस्यास्माभिरपि अङ्गीकारात्' (आह च तन्मात्रमिति ब्र० सू० विज्ञानामृतभाष्ये); 'आत्मा परानन्दः परप्रेमास्पदं यतः' (पञ्चदशी १।८) 'आनन्दरूपता चास्याः परप्रेमास्पदत्वतः' (देवीभागवत ७।३२।१७)।

२. तुल० 'किं चात्रस्थस्यैव सर्वगतानां करणानां वृत्तिलाभो भवति आहोस्वित् शरीरस्थस्य संकुचितानि करणानि····संकोचमुपगच्छन्ति····। उच्यते—सर्वात्मकानि तावत् करणानि' (बृहदा० ४।४।३ शा० भा०)।

३. क्वचित् सूत्रे वास्यादिवच् चक्षुरादिवच्चेति अधिकपाठो दृश्यते।

कार्यत्वोपपत्तये मनसो निरवयवत्वमपि निराकरोति—

न निर्भागत्वं तद्योगाद् घटवत्[1] ॥७१॥

तच्छब्दः पूर्वसूत्रस्थेन्द्रियं परामृशति । मनसो न निरवयवत्वम्, अनेकेन्द्रियेष्वेकदा योगात् । किन्तु घटवन्मध्यमपरिमाणं सावयवमित्यर्थः । कारणावस्थं चान्तःकरणमण्वेवेति बोध्यम्[2] ॥७१॥

मनःकालादीनां नित्यत्वं प्रतिषेधति—

प्रकृतिपुरुषयोरन्यत्[3] सर्वमनित्यम्[4] ॥७२॥

सुगमम् । कारणावस्थं चान्तःकरणाकाशादिकं प्रकृतिरेवोच्यते, न तु मन आदिकं व्यवसायाद्यसाधारणधर्माभावात् ॥७२॥

ननु—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ (श्वेताश्व० ४।१०)

इत्यादिश्रुतिभिः पुम्प्रकृत्योरपि सावयवत्वादनित्यत्वमिति; तत्राह—

न भागलाभो भागिनो निर्भागत्वश्रुतेः[5] ॥७३॥

---

१. मनसः कारणवत्त्वमत्र प्रतिपादितमिति वृत्तितो ज्ञायते । तद्योगादित्यस्य इन्द्रिययोगादित्यर्थः क्लिष्ट एव ।

२. कारणावस्थमन्तःकरणं (मनः) अणु भवति—इति मते अणुशब्दः सूक्ष्मार्थक एव, न तु क्षुद्रतमपरिमाणार्थक इति विज्ञेयम् ।

३. तुल० ब्रह्ममायाभ्यां व्यतिरिक्तस्य कार्यत्वेन मूलकारणत्वायोगात् (वि० प्र० सं०, पृ० २०६) ।

४. अत्यल्पमिदमुक्तम् । वस्तुतस्तु प्रकृतिपुरुषयो रन्यत् सर्वम् हेतुमत्, अव्यापि, सक्रियम्, आश्रितम्, सावयवम्, अनेकम्, स्वकारणसत्ताज्ञापकं च इति सांख्यकारिकातः (का० १०) ज्ञायते ।

५ भागिनो जगत्कारणस्य प्रधानस्य न कारणम्, श्रुत्यास्य निष्कारणत्वस्य प्रतिपादनादिति वृत्तिदर्शितं सूत्रतात्पर्यम् । भाष्यवृत्तिदर्शितः सूत्रार्थः समीचीनो नवेति विचार्यम् । भागः = अवयव इति भिक्षुः । एवं सति पुरुषः कथं भागी स्यात् ? अव्यक्तं प्रधानमपि निरवयवमित्युच्यते । भागः कारणमिति वृत्तिः । एवं सति भागिशब्दस्यार्थः 'कार्यम्' (कारणवत्) एव । प्रधानं न भागि (= सकारणकं) भवति—इति सांख्यीया दृष्टिः । 'भागाः कारणानि यस्य

भागिनः पुरुषस्य प्रधानस्य चावयवो न युज्यते निरवयवत्वश्रुतेः ।

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् (श्वेताश्व० ६।१९)

इत्यादिनेत्यर्थः । उक्तश्रुतिश्चाकाशजलयोरिव पिता-पुत्रचेतनयोरिव चाविभागमात्रेणांशांशिभावं बोधयतीति ॥७३॥

दुःखनिवृत्तिर्मोक्ष इत्युक्तम् (द्र० १।१ सूत्रम्); तदवधारणाय तत्र मोक्षे परेषां मतानि निराकरोति—

[1]नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात्[2] ॥७४॥

आत्मन्यानन्दरूपोऽभिव्यक्तिरूपश्च धर्मो नास्ति; स्वरूपं च नित्यमेवेति न साधनसाध्यम् । अतो नानन्दाभिव्यक्तमोक्ष इत्यर्थः ॥७४॥

न विशेषगुणोच्छित्तिस्तद्वत्[3] ॥७५॥

अशेषविशेषगुणोच्छेदोऽपि न मुक्तिस्तद्वद् निर्धर्मत्वादेवेत्यर्थः । ननु तर्हि दुःखनिवृत्तिरेव कथं मोक्ष उक्तो दुःखाभावस्यापि धर्मत्वादिति चेन्न, अस्माभिर्भोग्यतासम्बन्धेनैव दुःखाभावस्य पुरुषार्थतावचनादिति ॥७५॥

---

कार्यत्वेन सन्ति तस्य प्रधानस्य' इत्येवंरूपेण भागिशब्दं व्याचष्टे महादेवः । भाष्यमते प्रधानपुरुषौ लक्ष्येते सूत्रे, वृत्तिमते प्रधानमेव । सूत्रमिदमीषद् अस्पष्टार्थकमेव ।

१. मोक्षे सुखस्याभिव्यक्तिर्भवतीति मतं बहूभिराचार्यैः प्रतिपादितम् । द्र० 'नित्यसंवेद्यमानेन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः' (न्यायसार, आगमपरिच्छेद); 'सुखमात्यन्तिकं यत् स्याद् बुद्धिग्राह्यमतीन्द्रियम् । तं वै मोक्षं विजानीयात्' इति । 'नित्यं सुखमात्मनो महत्त्ववद् मोक्षे व्यज्यते तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते' (न्यायभा० १।१।२२); दुःखसाधनशरीरनाशे नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति भाट्टं मतम्.... ( किरणावली, भाग १, प्रकाशटीका ); नित्यानन्दस्यानुभूतिर्मुक्ति रिति कुमारिलस्य मतमिति मानमेयोदये (प्रमेय० २६) उक्तम् ।

२. आनन्दाभिव्यक्तिरूपमतस्य खण्डनमपि बहुत्र दृश्यते । द्र० बृहदा० ४।४।६ शां० भा० ( येऽप्याचक्षते मोक्षे.... ); ।

३. आत्मविशेषगुणोच्छेदो मुक्तिरिति वैशेषिकाः ( द्र० उपस्कार १।१।४ ); बुद्धि-सुख-दुःखेच्छाद्वेष प्रयत्न-धर्म-अधर्म-संस्कारा आत्मविशेष गुणाः ।

न विशेषगतिर्निष्क्रियस्य[1] ॥७६॥

ब्रह्मलोकगतिरपि न मोक्षः;[2] आत्मनो निष्क्रियत्वेन गत्यभावात् । लिङ्गशरीराभ्युपगमे च न मोक्षो घटत इत्यर्थः ॥७६॥

नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात्[3] ॥७७॥

क्षणिकज्ञानमेवात्मा तस्य विषयाकारता बन्धस्तद्वासनाख्योपरागस्य नाशो मोक्ष इति यन्नास्तिकमतं तदपि न, क्षणिकत्वादिदोषेण मोक्षस्यापुरुषार्थत्वादित्यर्थः ॥७७॥

नास्तिकस्यैव मुक्त्यन्तरं दूषयति—

न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥७८॥

ज्ञानरूपस्यात्मनः सामग्र्येणैवोच्छित्तिरपि न मोक्षः, आत्मनाशस्य लोके पुरुषार्थत्वादर्शनादिभ्य इत्यथः ॥७८॥

एवं शून्यमपि ॥७९॥

ज्ञाने ज्ञेयात्मकाखिलप्रपञ्चनाशोऽप्येवमात्मनाशेनापुरुषार्थत्वान्न मोक्ष इत्यर्थः ॥७९॥

संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥८०॥

प्रकृष्टदेशधनाङ्गनादिस्वाम्यमपि न मोक्षः, यतः 'संयोगाश्च वियोगान्ता मरणान्तं च जोवनम्'[4] इति श्रूयत इत्यर्थः । तथा च विनाशित्वात् स्वाम्यं न मुक्तिरिति ॥८०॥

न भागियोगो भागस्य ॥८१॥

---

१. गतिविशेषो मोक्ष इति मतं दर्शितं विद्यारण्येन—'अलोकाकाशे सततोर्ध्वगमनं मोक्षः' इति ( वि० प्र० स०, पृ० २०१ ) ।

२. द्र० मोक्षस्य नैव किञ्चित् स्यादन्यत्र गमनं क्वचित् (श्वेताश्व० १।११ धृतं ब्रह्मपुराणवाक्यम् ) ।

३. तुल० प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतसः (२।१५ तत्त्ववैशारद्यामुद्धृतं बौद्धाचार्यवाक्यम् ); विज्ञानस्य च निरोधः ( दीर्घनिकाय १।२२३; विञ्ञानस्य निरोधो, पालि ) ।

४. वाक्यमिदं स्त्रीपर्वणि (२।३), अश्वमेधपर्वणि (४४।१९), सेतुखण्डे (४५।४१), नारदीये (१।६१।१।३७), गारुडे (१।११५।६०) अन्यत्र चोपलभ्यते । क्वचित् संयोगा विप्रयोगान्ता इति पाठो दृश्यत आकरग्रन्थेषु । अन्यदपि पाठान्तरं दृश्यते ।

भागस्यांशस्य जीवस्य[1] भागिन्यंशिनि परमात्मनि लयो न मोक्षः, संयोगा हि वियोगान्ता इत्युक्तहेतोः; ईश्वरानभ्युपगमाच्च; तथा स्वलयस्यापुरुषार्थत्वाच्चेत्यर्थः ॥८१॥

नाऽणिमादियोगोऽप्यवश्यंभावित्वात् तदुच्छित्ते रितरयोगवत्[2] ।।८२॥

अणिमाद्यैश्वर्यसम्बन्धोऽपि न मुक्तिः । ऐश्वर्यान्तरसम्बन्धवदेव तस्याप्युच्छेदनियमादित्यर्थः ॥८२॥

नेन्द्रादिपदयोगोऽपि तद्वत्[3] ॥८३॥

इन्द्राद्यैश्वर्यलाभोऽपि न मुक्तिरितरैश्वर्यवत् क्षयिष्णुत्वादित्यर्थः ॥८३॥

इन्द्रियाणामाहङ्कारिकत्वं (२।२०)यदुक्तं तत्र परविप्रतिपत्तिं निराकरोति—

न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः[4] ॥८४॥

सुगमा योजना । पूर्वं (२।१०) चैतद् व्याख्यातम् ॥८४॥

शक्त्यादिकमपि तत्त्वमस्तीत्याशयेन परेषां पदार्थप्रतिनियमं तन्मात्रज्ञानान्मुक्तिं च निराकरोति—

न [5]षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥८५॥

---

१. जीवः परमात्मांशभूत एवेति वैष्णवमतं प्रसिद्धमेव । भास्करोऽपि तथैवाह— के पुनरमी क्षेत्रज्ञा नाम ? परमात्मनोंऽशाः (द्र० गीता २।१३ टीका) ।

२. 'न भूतियोगेऽपि·····' इति (४।३२) सूत्रेण सहास्य पौनरुक्त्यमेव ।

३. मुक्तिः स्वर्गतो भिन्नेति मतं श्लोकवार्त्तिके प्रतिपादितम् (संबन्धाक्षेपपरिहार १००-११०); शास्त्रदीपिकायामपि (तर्कपादे) विचारोऽयमास्ते ।

४. भौतिकमिन्द्रियमिति नैयायिकाः । 'भौतिकं चक्षुः कुड्यादिभिः प्रतीघातदर्शनात् घटादिवत्' इति न्यायवार्त्तिककारः (३।१।३९) । 'भौतिकानि चेन्द्रियाणि आयुर्वेदे वर्ण्यन्ते·····' (सुश्रुत, शारीर अ० १) ।

५. 'अभावोऽपि सप्तमः पदार्थो वैशेषिकनये' इति मतं सूत्रकृता नाभ्युपगतमिति प्रतीयते । अभावस्य पदार्थत्वम् उदयनेन किरणावल्यां स्पष्टं प्रत्यपादि । लीलावतीकारोऽपि मतमिद मास्थितवान् । किमर्थं सूत्रे सप्तपदार्थनियम इति नोक्तमिति न ज्ञायते । किमभावो न सर्ववैशेषिकाचार्यसंमतः, आहोस्वित् सूत्रकारः षट्पदार्थवाद्येव वैशेषिकशास्त्रमिति अभ्युपगतवान् । सप्तपदार्थमतोदयात् प्राक् सूत्र मिदं रचितमित्यपि कथयितुं शक्यते-परन्तु कथनमिदं साहसमात्रमेव ।

द्रव्यगुणकर्मसामान्यविशेषसमवाया एव पदार्था इति यद्वैशेषिकाणां नियमो यश्च तज्ज्ञानान्मोक्ष इत्यभ्युपगमः, सोऽप्रामाणिकः; शक्त्याद्यतिरेकात्, पृथिव्यादिनवद्रव्येभ्यः प्रकृतेरतिरेकाच्चेत्यर्थः। गन्धादिमत्त्वेनैव हि पृथिव्यादिव्यवहारो गन्धादिश्च साम्यावस्थायां नास्ति। अतः पृथिवीत्वादिजातिरपि घटत्वादिवत् कार्यमात्रवृत्तिरिति। तदुक्तम्—

नाहो न रात्रिर्न नभो न भूमिर्नासीत् तमो ज्योतिरभून्न चान्यत्।
शब्दादिबुद्ध्याद्युपलभ्यमेकं[1] प्राधानिकं ब्रह्म पुमांस्तदासीत्॥
(विष्णु० १।२।२३) इति ॥८५॥

षोडशादिष्वप्येवम् ॥८६॥

न्यायपाशुपतादिमतेषु षोडशादिष्वपि न नियमो न वा तन्मात्रज्ञानान्मुक्तिः, उक्तरूपेण पदार्थाधिक्यादित्यर्थः। अस्मन्मते तु नित्यं पदार्थद्वयमेव। नित्यानित्यसाधारणास्तु पदार्थाः पञ्चविंशतिरेवेति नियमः। पञ्चविंशतिद्रव्येष्वेव गुणकर्मसामान्यशक्त्यादीनामन्तर्भाव इति ॥८६॥

पञ्चभूतानां पूर्वोक्तकार्यत्वोपपत्त्यर्थं वैशेषिकाद्यभ्युपगतं पार्थिवाद्यणुनित्यत्वमपाकरोति—

[2]नाणुनित्यता [3]तत्कार्यत्वश्रुतेः ॥८७॥

पृथिव्याद्यणूनां नित्यता नास्ति तेषामणूनामपि कार्यत्वश्रुतेरित्यर्थः। यद्यप्य-

---

१. श्रोत्रादिबुद्ध्यानुपलभ्यमेकम् इति मुद्रितपुराणपाठः।

२. अत्रेदं ज्ञातव्यं यद् अत्र सूत्रे अणुपदेन परमाणुरेव गृह्यते, तस्यैव नित्यतास्वीकारात्। यद्यपि द्व्यणुके अणुपदं बहुलं प्रयुज्यते तथापि क्वचिद् अणु-शब्दः परमाणावपि प्रयुक्तः। ['त्रिभिरणुभिरुत्पन्नः त्रसरेणुरित्युच्यते' इत्यस्मिन् वाक्ये अणुभिः = द्व्यणुकैः इति] उक्तमात्मतत्त्वदीधितौ—'निरवयवस्याणोः परमाणुशब्दार्थत्वात्' इति। 'अण्ववयवस्य अणुतरत्व-प्रसंगात्—इति न्यायभाष्यवाक्ये (४।२।२२) अणुः परमाणुं लक्ष्यति।

३. परमाणो नित्यत्वं (उत्पत्तिध्वंसाभावः) न्यायवैशेषिकसंमतम्। अत एव परमाणुरकार्य इत्युच्यते (न्यायसू० ४।२।२०)। न च परमसूक्ष्माणां भूतानाम् (=परमाणूनाम्) उत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते, नित्यानि एतानि (न्यायभा० ४।१।२८)। अद्रव्यत्वेन नित्यत्वमुक्तम् (वैशेषिक २।१।६१), द्रव्यत्वनित्यत्वे वायुना व्याख्याते (२।१७६)।

स्माभिः सा श्रुतिर्न दृश्यते काललुप्तत्वादिना तथाप्याचार्यवाक्यान्मनुस्मरणच्चानुमेया। यथा मनुः—

[1]अण्व्यो मात्रा विनाशिन्यो दशार्धानां च याः स्मृताः।
ताभिः सार्द्धमिदं सर्वं सम्भवत्यनुपूर्वशः ॥ (१।२७)

इति। दशार्द्धानां पृथिव्यादिपञ्चभूतानाम्। न चात्र वाक्येऽणुशब्देन द्व्यणुकाद्येव ग्राह्यमिति वाच्यम्, सङ्कोचे प्रमाणाभावादिति; अत्राणुशब्दो भूतपरमाणुपर एव। वैशेषिकाद्यभिमतं च तस्य नित्यत्वमनेन सूत्रेण निराक्रियते, न त्वणुपरिमाणद्रव्यसामान्यस्य नित्यत्वं रजोगुणस्य चाञ्चल्यानुरोधेनाणुत्वसिद्धेः। मध्यमपरिमाणत्वे नित्यत्वस्य विभुत्वे च क्रियाया अनुपपत्तेरिति ॥८७॥

ननु निरवयवस्य[2] परमाणोः कथं कार्यत्वं घटते; तत्राह—

[3]न निर्भागत्वं कार्यत्वात् ॥८८॥

श्रुतिसिद्धकार्यत्वान्यथानुपपत्त्या पृथिव्याद्यणूनां न निरवयवत्वमित्यर्थः। अत एव तन्मात्राख्यसूक्ष्मद्रव्याण्येव पार्थिवाद्यणूनामवयवा इति पातञ्जलभाष्ये व्यासदेवैः[4] प्रतिपादितम्। पृथिवीपरमाणुर्जलपरमाणुरित्यादिव्यवहारस्तु पृथिव्यादीनामपकर्षकाष्ठाभिप्रायेणैव। अतः प्रकृतिपर्यन्तमणुत्वेऽपि न क्षतिरिति।

यद्यपि तन्मात्रेष्वपि गन्धाद्यस्ति तथापि तस्याप्रत्यक्षतया न पृथिवीत्वादि-

---

१. वस्तुतस्तु नेदं वाक्यं वैशेषिकाभिमता मणूना मनित्यतां दर्शयति! पञ्चतन्मात्राणामनित्यता खल्वनेन मनुवचनेन प्रतिपाद्यते। अण्वी = स्त्रीप्रत्ययान्तोऽणुशब्दः। अतः 'अण्व्यो मात्राः' इति शब्दो न वैशेषिकोक्त-परमाणून् लक्षयति। तन्मात्राणि च न वैशेषिकसंमताः परमाणव इति विवेच्यम्।

२. परमाणोर्निरवयवत्वं न्यायवैशेषिक-दृष्टया। द्र० न्यायसू० ४।२।१६-१७, ४।२।२२,२५; निरवयवत्वं च परमाणोः (न्यायभा० ४।२।१६); अभेद्यः परमाणुः (न्यायवा० ४।२।१७) इति।

३. परमाणोः सावयवत्व-प्रतिपादिका युक्तयः न्यायसूत्रे दर्शिताः (४।२।२३-२४)। 'परमाणवः सावयवा मूर्तिमत्त्वात् संस्थानवत्त्वाच्च' इति मतं न्यायवार्त्तिके प्रपञ्चितम्। न्याय० ४।२।२४ सूत्रे भागपदमवयववाचि—इति दर्शितम् (सर्वतोभागा अवयवाः)।

४. द्र० पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रम्… (१।४५ भाष्यम्); अथ किमेषां सूक्ष्मरूपम्? तन्मात्रम् भूतकारणम्। तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्मा…इत्येवं सर्वतन्मात्राणि इत्येतत् तृतीयम् (३।४४ भाष्यम्)।

नियामकत्वम्; व्यक्तगन्धादेरेव पृथिवीत्वादिसिद्धेः। अतो न तन्मात्राणि पृथिव्यादयः। तेषु च सूक्ष्मभूतव्यवहारो भूतसाक्षात्कारणत्वादिनैवेत्यपि बोध्यम् ॥८८॥

प्रकृतिपुरुषसाक्षात्कारो न सम्भवति रूपस्य द्रव्यसाक्षात्कारहेतुत्वादिति नास्तिकाक्षेपं निराकरोति—

न रूपनिबन्धनात्[1] प्रत्यक्षनियमः ॥८९॥

रूपादेव निमित्तात् प्रत्यक्षतेति नियमो नास्ति, धर्मादिनापि साक्षात्कारसम्भवादित्यर्थः। व्यञ्जकानियमस्याञ्जनादौ दृष्टत्वेनादोषत्वात्। अतो बहिर्द्रव्यलौकिकप्रत्यक्षं प्रत्येवोद्भूतरूपं व्यञ्जकमिति भावः ॥८९॥

नन्वेवं किमणुपरिमाणं वस्त्वस्ति न वेत्याकाङ्क्षायां परिमाणनिर्णयं करोति—

न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥९०॥

अणु महद्दीर्घं ह्रस्वमिति परिमाणचातुर्विध्यं नास्ति। द्वैविध्यं तु वर्त्तत एव। द्वाभ्यां तद्योगात्—द्वाभ्यामेवाणुमहत्परिमाणाभ्यां चातुर्विध्यसम्भवादित्यर्थः। महत्परिमाणस्यावान्तरभेदावेव हि ह्रस्वदीर्घौ, अन्यथा वक्रादिरूपैः परिमाणानन्त्यप्रसङ्गादिति।

तत्रास्मन्नयेऽणुपरिमाणमाकाशस्य कारणं गुणविशेषं वर्जयित्वा भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यम्। अन्यत्र यथायोग्यं मध्यमादिपरममहत्त्वान्तपरिमाणानि; तानि च महत्त्वस्यैवावान्तरभेदा इति ॥९०॥

पुरुषैकत्वं सामान्येनेति कण्ठत एवोक्तम् (१।१५४)। प्रकृतेरेकत्वं सामान्येनेत्यर्थादुक्तम्, तदर्थं सामान्येषु नास्तिकविप्रतिपत्तिं निराकरोति—

[2]अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य[3] ॥९१॥

---

१. प्रत्यक्षं प्रति उद्भूतरूपस्य हेतुता न्यायवैशेषिकशास्त्रेऽभ्युपगता। द्र० अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः (न्यायसू० ३।१।३८)। रूपविशेषः = उद्भूतत्वधर्मविशिष्टं रूपम् ( भाष्यं वार्तिकं च द्र० )। 'तच्च व्याख्यातम्—अनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति' ( न्यायभा० ३।१।४० )।

२. सामान्यस्य अनित्यत्वेऽपि जातिविषयिणी प्रत्यभिज्ञा भवितुमर्हत्येव। अतः प्रत्यभिज्ञाबलेन न जातेर्नित्यत्वमास्थेयम् इत्यर्थो वृत्तिमते।

३. समानानां भावः स्वाभाविकोऽनागन्तुको बहूनां धर्मः सामान्यम् (किरणावली) इति सामान्यशब्द-व्युत्पत्तिः। नित्यमेकमनेकवृत्ति सामान्यम् ( प्रशस्तपादभाष्य )।

व्यक्तीनामनित्यत्वेऽपि स एवायं घट इति स्थिरतायोगेन यत् प्रत्यभिज्ञानं तत् सामान्यस्य; सामान्यविषयकमेव तत् प्रत्यभिज्ञानमित्यर्थः ॥९१॥

तस्मान्न सामान्यापलापो युक्त इत्याह—

न तदपलापस्तस्मात् ॥९२॥

सुगमम् ॥९२॥

नन्वतद्व्यावृत्तिरूपेणाभावेनैव प्रत्यभिज्ञोपपादनीया, सैव च सामान्यशब्दार्थोऽस्तु; तत्राह—

नान्यनिवृत्तिरूपत्वं भावप्रतीतेः[1] ॥९३॥

स एवायमिति भावप्रत्ययानिवृत्तिरूपत्वं न सामान्यस्येत्यर्थः, अन्यथा हि नायं घट इत्येव प्रतीयेत । किञ्चान्यव्यावृत्तिशब्दस्याघटव्यावृत्तिरित्यर्थो वाच्यः । तत्राघटत्वं घटसामान्यभिन्नत्वमिति सामान्याभ्युपगम एवापतित इति ॥९३॥

ननु सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यति; तत्राह—

न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः[2] ॥९४॥

भूयोऽवयवादिसामान्यादतिरिक्तं न सादृश्यमस्ति, प्रत्यक्षत एव सामान्यरूपतयोपलम्भादित्यर्थः ॥९४॥

ननु स्वाभाविकी शक्तिरेव सादृश्यमस्तु, न तु तत् सामान्यमित्याशङ्कामपाकरोति—

निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात् [3]तदुपलब्धेः ॥९५॥

वस्तुनः स्वाभाविकशक्तिविशेषोत्पादोऽपि न सादृश्यम्, शक्त्युपलब्धितः सादृश्योपलब्धेर्विलक्षणत्वात् । शक्तिज्ञानं हि नान्यधर्मिज्ञानसापेक्षम्; सादृश्यज्ञानं पुनः प्रतियोगिज्ञानमपेक्षतेऽभावज्ञानवदिति ज्ञानयोर्वैलक्षण्यमित्यर्थः ।

---

१. अतद्व्यावृत्तिरूपं सामान्यमिति बौद्धाः, अगोव्यावृत्तिरूपं गोत्वमिति ।

२. सादृश्यमतिरिक्तः पदार्थ इति प्रभाकरः । प्रकरणपञ्चिकायाम् (पृ० २६८) अस्य मतस्य समर्थनाय युक्तयः प्रयुक्ताः । सामान्यास्वीकारे सादृश्यप्रतीतिरेव सादृश्यवादिनां न सिध्यतीति वृत्तिकृतस्तात्पर्यं स्पष्टमेव । तत्त्वचिन्तामणौ (उपमानप्रमाणप्रक०) सादृश्यस्य पदार्थान्तरत्वखण्डनं द्रष्टव्यम् ।

३. तत्तत्-पदार्थनिष्ठशक्तिरेव (सामान्यनामधेया) सादृश्यज्ञानस्य विषय इति वृत्तितात्पर्यम् । शक्तिरियं व्यक्तेरात्मभूता । अतएव सादृश्यं न तत्त्वान्तरम् । न वा सादृश्येन सामान्यस्यापलापः कर्तुं शक्यते ।

किञ्च धर्मिणः शक्तिसामान्यं न सादृश्यं बाल्यावस्थायामपि युवसादृश्यापत्तेः, किन्तु युवादिकालीनः शक्तिविशेषो युवादिसादृश्यमिति वक्तव्यम्; तथा च प्रतिव्यक्त्यनन्तशक्तिकल्पनापेक्षया सर्वव्यक्तिसाधारणैकसामान्यकल्पनैव युक्तेति ॥९५॥

ननु तथापि घटादिसंज्ञकत्वमेव घटादिव्यक्तीनां सादृश्यमस्तु; तत्राह—

न संज्ञासंज्ञिसम्बन्धोऽपि[1] ॥९६॥

यथोक्तः संज्ञासंज्ञिनोः सम्बन्धोऽपि न सादृश्यं वैशिष्टयात् तदुपलब्धेरेवेत्यर्थः । संज्ञासंज्ञिभावमजानतोऽपि सादृश्यज्ञानादिति ॥९६॥

अपिच—

न [2]सम्बन्धनित्यतोभयानित्यत्वात् ॥९७॥

संज्ञासंज्ञिनोरनित्यत्वात् तत्सम्बन्धस्यापि न नित्यता । अतः कथं तेनातीतवस्तुसादृश्यं वर्तमानवस्तुनि स्यादित्यर्थ. ॥९७॥

ननु सम्बन्ध्यनित्यत्वेऽपि सम्बन्धो नित्यः स्यात्, किमत्र बाधकम् ; तत्राह—

नातः सम्बन्धो [3]धर्मिग्राहकमानबाधात् ॥९८॥

कादाचित्कविभागे सत्येव सम्बन्धः सिध्यति । अन्यथा वक्ष्यमाणरीत्या स्वरूपेणैवोपपत्तौ सम्बन्धकल्पनानवकाशात् । स च कादाचित्को विभागो न सम्बन्धनित्यत्वे सम्भवति । अतः सम्बन्धग्राहकप्रमाणेनैव बाधान्न नित्यः सम्बन्ध इत्यर्थः ॥९८॥

---

१. वाच्यवाचकभावरूपसंबन्धज्ञानं प्रति सादृश्यज्ञानं हेतुरिति मतमत्र निरस्यते—इति वृत्तिकारः ।

२. सादृश्यविषयकप्रकरणीयमिदं सूत्रमिति भिक्षुः । नित्यःशब्दार्थ-संबन्ध इति मतमनेन सूत्रेण निरस्यते—इति वृत्तितः प्रतीयते । उभयेतिपदेन शब्दार्थौ गृह्येते वृत्तिमते । भाष्यमते संज्ञासंज्ञिनौ ।

३. नाजः संबन्ध इति वृत्तिसंमतः पाठः । केषुचित् भाष्यसंस्करणेष्वपि अयमेव पाठो दृश्यते । वस्तुतः भाष्यमते 'नातः संबन्धः' इत्येव पाठः । 'अतः धर्मिग्राहकमानबाधात् न संबन्धो नित्य' इति सूत्रशब्दानामन्वयो भाष्यमते । अजसंबन्धो न्यायादिषु अभ्युपगतः; तस्यापाकरणमत्र कृतमिति वृत्तिकृन्मतम् । संबन्धः (=संयोगः) न नित्यो भवितुमर्हति, यतो येन प्रमाणेन घटादीनामनित्यत्वं गृह्यते तेनैव (=प्रत्यक्षेणैव) घटादिसंयोगानामनित्यत्वमपि ज्ञायते ।

नन्वेवं नित्ययोर्गुणगुणिनोर्नित्यः समवायो नोपपद्येत; तत्राह—

न [1]समवायोऽस्ति [2]प्रमाणाभावात् ॥९९॥

सुगमम् ॥९९॥

ननु वैशिष्टचप्रत्यक्षं विशिष्टबुद्धचन्यथानुपपत्तिश्च प्रमाणम्; तत्राह—

उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥१००॥

उभयत्रापि वैशिष्टचप्रत्यक्षे तदनुमाने च स्वरूपेणैवान्यथासिद्धेर्न तदुभयं समवाये प्रमाणमित्यर्थः। अयं भावः—यथा समवायवैशिष्टचबुद्धिः समवायस्वरूपेणैवेष्यतेऽनवस्थाभयादिति, तत्र प्रत्यक्षानुमाने अन्यथासिद्धे। एवं गुणगुणिप्रभृतीनां विशिष्टबुद्धिरपि गुणादिस्वरूपेणैवेष्यताम्। अतस्तत्रापि प्रत्यक्षानुमाने अन्यथासिद्धे इति।

नन्वेवं संयोगोऽपि न सिध्यति भूतलादौ घटादिप्रत्ययस्यापि स्वरूपेणैवान्यथासिद्धेरिति चेन्न; वियोगकालेऽपि भूतलघटयोः स्वरूपतादवस्थ्येन विशिष्टबुद्धिप्रसङ्गात्। समवायस्थले च समवेतस्य कदापि स्वाश्रयवियोगो नास्तीति नायं दोषः।

कश्चित्[3] तु तादात्म्यसम्बन्धेनात्र समवायस्यान्यथासिद्धिमाह, तन्न; शब्दमात्रभेदात्। तादात्म्यं ह्यत्र नात्यन्तं वक्तव्यम्। गुणवियोगेऽपि गुणिसत्त्वात्; वैशिष्ट्या-

---

१. द्र० न हि सांख्यानां बौद्धानां वा राद्धान्तेऽस्ति संबन्धः समवायो नाम, नापि तदाश्रयो द्रव्यम् (न्या० वा० ता० टी, पृ० १९५)। समवायस्य खण्डनमपि बहुत्र दृश्यते—द्र० शारीरक० २।२।१२-१३; न खलु समवायस्य किमपि लक्षणं प्रमाणं वास्ति इति प्रत्यक्तत्त्वप्रदीपिकायामुपपादितम्। भट्टपादः, अद्वैतिनश्च समवायं नाभ्युपगच्छन्ति।

२. समवायविषय इदं ज्ञातव्यं यदयं संबन्धो ऽनाश्रितः संबन्धिद्वये। उक्तं हि 'स्वतन्त्रः समवायिनां समवायः' (न्यायवा० १।१।५)। स्वरूपसंबन्धेनायं तिष्ठति; द्र० अत्रत्य-तात्पर्यपरिशुद्धिसंबद्धा प्रकाशटीका। स्वात्मवृत्तिः समवाय इति प्रशस्तपादः। समवायसंबन्धिविनाशे सति समवायज्ञानसमग्री नष्टा भवति, न पुनः समवायो नष्टो भवति तस्य नित्यत्वात् स्वतन्त्रत्वाच्च। उक्तं च प्रशस्तदेवेन—'संबन्ध्यनित्यत्वेऽपि न संयोगवदनित्यत्वं भाववद् अकारणत्वात्' इति।

३. इदमनिरुद्धमतम् ( उभयत्रापि तादात्म्येनैव उपपत्तेः—वृत्तिः )। मतमिदं भाट्टानाम् अद्वैतवेदान्तिनां च। अयुतसिद्धौ द्वौ पदार्थौ न परस्परभिन्नौ।

प्रत्ययाच्च; किन्तु भेदाभेदबुद्धिनियामकः सम्बन्धविशेष एवागत्या वक्तव्या। तथाच तस्य समवाय इति वा तादात्म्यमिति वा नाममात्रं भिन्नम्। सम्बन्धिद्वयातिरिक्तः सम्बन्धस्तु सिद्ध एवेति। यदि च तादात्म्यं स्वरूपमेवोच्यते तदास्माभिरपि तदेवोक्तमिति शब्दमात्रभेद इति ॥१००॥

प्रकृतेः क्षोभात् प्रकृतिपुरुषसंयोगस्तस्मात् सृष्टिरिति सिद्धान्तः। तत्रायं नास्तिकानामाक्षेपः—नास्ति क्षोभाख्या कस्यापि क्रिया, सर्वं वस्तु क्षणिकं यत्रोत्पद्यत तत्रैव विनश्यतीत्यतो न देशान्तरसंयोगोन्नेया क्रिया सिध्यतीति; तत्राह—

**नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवापरोक्षप्रतीतेः ॥१००॥**

न देशान्तरसंयोगादिना क्रियाया अनुमेयत्वमेव[1], यतो नेदिष्ठस्य निकटस्थस्य द्रष्टुः क्रियाक्रियावतोः प्रत्यक्षेणापि प्रतीतिरस्ति वृक्षश्चलतीत्यादिरित्यर्थः ॥१०१॥

तृतीयाध्याये शरीरस्य पाञ्चभौतिकत्वादिरूपैर्मतभेदा एवोक्ताः (३।१७-१९); न तु विशेषोऽवधृतः। तेष्वत्र[2] परपक्षं प्रतिषेधति—

**न पाञ्चभौतिकं शरीरं[3] बहूनामुपादानायोगात्[4] ॥१०२॥**

बहूनां भिन्नजातीयानां चोपादानत्वं घटपटादिस्थले न[5] दृष्टमिति सजातीयमे-

---

१. द्र० क्रिया नामेयमत्यन्तापरदृष्टाऽशक्या पिण्डीभूता निदर्शयितुम्····सासावनुमानगम्या (महाभाष्य १।३।१); देशान्तरप्राप्तिलक्षणेन कार्येणाऽबाधितेन क्रियाख्यं कारणमनुमीयते इत्यर्थः (प्रदीप)। कर्म (=क्रिया) न प्रत्यक्षयोग्यं प्रत्युत संयोगविभागादिना अनुमेयमेवेति प्राभाकराः। द्र० 'केचित्तु क्रिया न प्रत्यक्षा किन्तु विभागोत्तरसंयोगानुमानगम्या' (भाट्टचिन्तामणि, पृ० १७)।

२. अत्रापरपक्षम् (पाठा०)

३. शरीरस्य पाञ्चभौतिकत्वं प्रसिद्धमेव। द्र० ''शरीरं तावत् पञ्चभूतसंघातरूपम्, 'पञ्चभूतात्मके तात शरीरे पञ्चतां गते' इत्यादिशास्त्रात्'' (वि० प्र० संग्रह, पृ० १८३); 'तत्र शरीरं नाम····पञ्चमहाभूतविकारसमुदायात्मकम्' (चरक, शारीर० ६४); पञ्चभूतात्मके देहे (सुश्रुत सूत्रस्थान ४६।५२६)।

४. बहुद्रव्योपादानकं वस्तु न भवितुमर्हति—इति वैशेषिक-दृष्टचा इदमुच्यते। द्र० 'तस्य [ शरीरस्य ] पाञ्चभौतिकत्वप्रसिद्धिर्भूतपञ्चकजन्यत्व-प्रयुक्तैव, न तु तदुपादेयत्वप्रयुक्ता····पञ्चभिर्मिलित्वा द्रव्यारम्भस्यासंभवाच्च' (प्रशस्तपादभाष्यसूक्ति, पृ० २००)। वैशेषिकस्येदं मतं खण्डितम् वि० प्र० संग्रहे (पृ० १८३)।

५. एकस्य शरीरस्य अनेकानि भूतानि नोपादानानि भवितुमर्हन्ति—इति नैयायिकाः।

वोपादानम् । इतरच्च भूतचतुष्ठयमुपष्टम्भकमित्याशयेन पाञ्चभौतिकव्यवहारः । एकोपादानकत्वेऽपि पृथिव्येवोपादानं सर्वशरीरस्येति वक्ष्यति (५।११२) ॥१०२॥

स्थूलमेव शरीरमिति केचित्; तन्निराकरोति—

न स्थूलमिति नियम आतिवाहिकस्यापि[1] विद्यमानत्वात् ॥१०३॥

इन्द्रियाश्रयत्वं शरीरत्वम्—

यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट् ।

तस्माच्छरीरमित्याहुस्तस्य मूर्ति मनीषिणः ।

(मनु १।१७) इति मनुवाक्यात् । एतादृशं च शरीरं स्थूलं प्रत्यक्षमेवेति न नियमः । कुतः, आतिवाहिकस्याप्रत्यक्षतया सूक्ष्मस्य भौतिकस्य शरीरान्तरस्यापि सत्त्वादित्यर्थः ।

लोकाल्लोकान्तरं लिङ्गदेहमतिवाहयतीत्यातिवाहिकम् । भूताश्रयतां विना चित्रादिवद् गमनाभावस्य प्रागेवोक्तत्वात् । इदं च सूत्रं तस्यैव स्पष्टीकरणमात्राथम् । लिङ्गस्य च शरीरत्वं भोगाश्रयतया पुरुषप्रतिबिम्बाश्रयतया वेति बोध्यम् ।

आतिवाहिकशरीरे च प्रमाणम्—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः(कठ० १।६।१७);

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः (वनपर्व २९७।१७) ।

इति श्रुतिस्मृती । न हि लिङ्गशरीरस्य सकलशरीरव्यापिनः स्वतोऽङ्गुष्ठमात्रत्वं सम्भवति । अत आधारस्याङ्गुष्ठमात्रमर्थात् सिध्यति । यथा दीपस्य सर्वगृहव्यापित्वेऽपि कलिकाकारत्वं तैलवर्त्यादिसूक्ष्मांशस्य दशोपरि सम्पिण्डितस्य पार्थिवभागस्य कलिकाकारतया, तथैव लिङ्गदेहस्य देहव्यापित्वेऽप्यङ्गुष्ठपरिमाणत्वम् आश्रय-सूक्ष्मभूतस्याङ्गुष्ठपरिमाणत्वेनानुमेयमिति ॥१०३॥

---

१. आतिवाहिकशरीरं प्रसिद्धमेव । द्र० एवमातिवाहिकं सूक्ष्मशरीरमिन्द्रियाणां धारण-प्रापणसमर्थं नित्यं बाह्येन अपायिना परिवेष्टचते परित्यज्यते च (युक्तिदी० ३९ का०); तत्क्षणादेव गृह्णाति शरीरम् आतिवाहिकम् (प्रायश्चित्तविवेकोद्धृतं विष्णुधर्मोत्तरवचनम्; मरणात् पश्चादिदं गृह्यते); स्थूलशरीरत्यागानन्तरं दैवादिशरीरग्रहणात् प्राग् यत् शरीरं ध्रियते मृतेन जीवेन—तदेवातिवाहिकम् । मरणोत्तरं गृह्यमाणस्यातिवाहिकशरीरस्य विषये द्र० चरकः (शारीर २।२८; ३१–३३); मरणोत्तरम् आतिवाहिकशरीरमुसद्यते, तेन सह संबद्धं भूत्वा जीवमनः स्वर्गनरकगमनानन्तरं पुनः शरीराभ्यन्तरे प्रविष्टं भवतीति प्रशस्तपादोऽप्याह । आतिवाहिकविषये विशेषतः द्र० अग्निपु० ३६९, स्कन्दकुमारिका अ० ५०; गरुडपु० २।१८, २०; च ।

गोलकेभ्योऽतिरिक्तानीन्द्रियाणि प्रागुक्तानि; तदुपपादनायेन्द्रियाणामप्राप्त-प्रकाशकत्वं निराकरोति—

नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा[1] ॥१०४॥

स्वासम्बद्धार्थानीन्द्रियाणि न प्रकाशयन्ति; अप्राप्तेः प्रदीपादीनामप्राप्तप्रकाशकत्वादर्शनात्। अप्राप्तप्रकाशकत्वे व्यवहितादिसर्ववस्तुप्रकाशकत्वप्रसङ्गाच्चेत्यर्थः। अतो दूरस्थसूर्यादिसम्बन्धार्थं गोलकातिरिक्तमिन्द्रियमिति भावः।

करणानां चार्थप्रकाशकत्वं पुरुषेऽर्थसमर्पणद्वारैव; स्वतो जडत्वात् दर्पणस्य मुखप्रकाशकत्ववत्; अथवार्थप्रतिबिम्बोद्[2]ग्रहणमेवाऽर्थप्रकाशकत्वमिति ॥१०४॥

नन्वेवं चक्षुषस्तैजसत्वमेव युक्तम्, तेजस एव किरणरूपेणाशु दूरापसर्पणदर्शनादिति शङ्कां निराकरोति—

न तेजोऽपसर्पणात् तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः[3] ॥१०५॥

तेजसोऽपसर्पणं दृष्टमिति कृत्वा तैजसं चक्षुर्न वाच्यम्; कुतः, अतैजसत्वेऽपि प्राणवदेव वृत्तिभेदेनापसर्पणोपपत्तेरित्यर्थः। यथा हि प्राणः शरीरं सन्त्यज्यैव नासाग्राद् बहिः कियद्दूरं प्राणनाख्यवृत्त्यापसरति, एवमेवातैजसद्रव्यमपि चक्षुर्देहमसन्त्यज्यापि वृत्त्याख्यपरिणामविशेषेण झटित्येव दूरस्थं सूर्यादिकं प्रत्यपसरेदिति ॥१०५॥

---

१. द्र० नचाप्राप्यकारित्वमिन्द्रियाणाम्··· (न्यायभा० ३।१।३२)। सन्निकर्षं विना प्रत्यक्षं भवतीति मतस्य प्रतिपादनं न्यायसूत्रे (३।१।४५) दृश्यते। बौद्धमतेऽपि चक्षुः-श्रोत्र-घ्राणानि अप्राप्यकारीणि—इति जयन्तेनोक्तम् (न्यायमञ्जरी; भाग २, पृ० ५०); द्र० 'सांख्यादीन् वा विनिर्जित्य प्राप्तिपक्षोऽत्र दूष्यताम्। केचित्तयोः [= चक्षुः-श्रोत्रयोः] शरीराच्च बहिर्वृत्ति प्रचक्षते ॥ (श्लोकवा० प्रत्यक्ष० ४३-४४; न्यायरत्नाकरटीका चापि द्र०)।

२ द्र० बुद्धेर्विषयाकारवृत्तीनां पुरुषे यानि प्रतिबिम्बानि तान्येव पुरुषस्य वृत्तयः ···· (योगवा० १।४); सा चार्थाकारता बुद्धौ परिणामरूपा···पुरुषे च प्रतिबिम्बरूपा···(योगवा० १।४)।

३. जैनदर्शने चक्षुषस्तैजसत्वं न स्वीकृतम्। एतन्मते चक्षुषः प्राप्यकारितापि नास्ति (द्र० प्रमाणनयतत्त्वालङ्कारः, रत्नाकरावतारिकाटीका च- पृ० ५१ तः)। कथं न चक्षुषः प्राप्यकारित्वं जैनमत—इत्यत्रोक्तम्—'चक्षुर्गत्वा नार्थेनाभिसंबध्यते इन्द्रियत्वात् स्पर्शनादीन्द्रियवत्—इत्यनुमानाच्चास्याप्राप्यकारित्वसिद्धिः (प्रमेयकमलमार्तण्ड; परि० २ पृ० ६२)।

नन्वेवम्भूतवृत्तौ किं प्रमाणम्; तत्राह—

प्राप्तार्थप्रकाशलिङ्गाद् वृत्तिसिद्धिः[1] ॥१०६॥

सुगमम् ॥१०६॥

देहमपरित्यज्यापि गमनोपपत्तये वृत्तेः स्वरूपं दर्शयति—

[2]भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति[3] ॥१०७॥

सम्बन्धार्थं सर्पतीति हेतोश्चक्षुरादेर्भागो विस्फुलिङ्गवद्विभक्तांशो रूपादिवद् गुणश्च न वृत्तिः, किंतु तदेकदेशभूता भागगुणाभ्यां भिन्ना वृत्तिः। विभागे हि सति तद्द्वारा चक्षुषः सूर्यादि-सम्बन्धो न घटते, गुणत्वे च सर्पणाख्य-क्रियानुपपत्ते-रित्यर्थः।

एतेन बुद्धिवृत्तिरपि प्रदीपशिखावद् द्रव्यरूप[4] एव परिणामः स्वच्छतयार्थाकारतोद्ग्राही निर्मलवस्त्रवदिति सिद्धम् ॥१०७॥

नन्वेवं वृत्तीनां द्रव्यत्वे कथमिच्छादिरूपबुद्धिगुणेषु वृत्तिव्यवहारस्तत्राह—

न द्रव्यनियमस्तद्योगात्[5] ॥१०८॥

वृत्तिर्द्रव्यमेवेति नियमो नास्ति, कुतः, तद्योगात्। तत्र वृत्तौ योगार्थसत्त्वात्। वृत्तिर्वर्तनजीवन इति हि यौगिकोऽयं शब्दः। जीवनं च स्वस्थितिहेतुर्व्यापारः। जीव बलप्राणधारणयोरित्यनुशासनात्,[6] वैश्यवृत्तिः शूद्रवृत्तिरित्यादिव्यवहाराच्च।

---

१. 'कार्यलिङ्गकानुमानबलेनैव सिध्यति यद् इन्द्रियाणां वृत्तिरस्ति' इत्यर्थकमिदं सूत्रम्।

२. उद्धृतमिदं योगवार्त्तिके (१।४; २।१५)।

३. वृत्तिर्नभागः = विभक्तांशः, न वा गुणः (रूपादिवत्), किन्तु इन्द्रियैकदेशभूता —इति भाष्यमतम्। वृत्ति र्नभागरूपा, न वा गुणान्तरम्, किन्तु सा आहंकारिकीति वृत्तिमतम्।

४. वृत्तिः प्रभावद् द्रव्यरूपमेवेति प्रागेवोक्तम् (योगवा० १।७); चित्तस्य वृत्तयो दीपस्य शिखा इव द्रव्यरूपा भङ्गुरा अवस्थापरिणामाः (योगवा० १।४)।

५. तद्योगात् = योगार्थसत्त्वादिति भिक्षुः। वृत्तिर्द्रव्यं न वेति प्रश्ने वृत्तिशब्दो यौगिको न वेति विचारो दार्शनिकविचारप्रसंगे अप्रासंगिक एव। उभयोः स्वरूपं विचार्यैव वृत्तिर्द्रव्यं न वेति मतं स्थिरीकरणीयम्। क्रिया द्रव्ये इव पदार्थान्तरेऽपि स्थातुमर्हति—इति सूत्रस्य तात्पर्यम् वृत्तिमते। अस्पष्टार्थकमिदं सूत्रमिति प्रतीयते।

६. जीव प्राणधारणे इति सायणः (धातुवृत्ति १।३६७), क्षीरस्वामी च (१। ३७५)।

तत्र यथा द्रव्यरूपया वृत्त्या बुद्धिर्जीवति तथेच्छादिभिरपीति तेऽपि वृत्तयः, सर्वनिरोधेनैव चित्तमरणादित्यर्थः ॥१०८॥

इन्द्रियाणां भौतिकत्वस्यापि श्रवणात् कदाचिल्लोकविशेषभेदेन श्रुतिव्यवस्था शङ्क्येत; तत्राह—

न देशभेदेऽप्यन्योपादानताऽस्मदादिवन्नियमः ॥१०९॥

न ब्रह्मलोकादिदेशभेदतोऽपीन्द्रियाणामहङ्कारातिरिक्तोपादानकत्वम्, किन्त्वस्मदादीनां भूर्लोकस्थानामिव सर्वेषामेवाहङ्कारित्वनियमः, देशभेदेनैकस्यैव लिङ्गशरीरस्य सञ्चारमात्रश्रवणादित्यर्थः ॥१०९॥

नन्वेवं भौतिकत्वश्रुतिः कथमुपपद्यताम्; तत्राह—

निमित्तव्यपदेशात् तद्व्यपदेशः[१] ॥११०॥

निमित्तेऽपि प्राधान्यविवक्षयोपादानत्वव्यपदेशो भवति—यथेन्धनादग्निरिति। अतो भूतोपादानत्वव्यपदेश इत्यर्थः।

तेज आदिभूतोपष्टम्भेनैव हि तदनुगताहङ्काराच्चक्षुरादीन्द्रियाणि सम्भवन्ति, यथा पार्थिवोपष्टम्भेन तदनुगतात् तेजसोऽग्निर्भवतीति। अन्नमयं हि सोम्य मनः (छान्दोग्य० ६।५।४) इत्यादिश्रुतिस्तदुक्तयुक्तिश्चात्र प्रमाणम् ॥११०॥

स्थूलशरीरगतं विशेषं प्रसङ्गादवधारयति—

ऊष्मजाण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकं[२] चेति न नियमः ॥१११॥

---

१. भूतानि इन्द्रियाणां निमित्तानि—इति सांख्यीया दृष्टिः। रूपरागात् तथा चक्षुः ( शान्ति० २१३।१६ ) इति वचनेन विज्ञायते यच् चक्षुषोऽभिव्यक्तिनिमित्तं रूपरागः। अतः रूपमपि निमित्तविशेष इति कथयितुं शक्यते। वस्तुतः तान्मात्रिकक्रियासम्पर्काद् अस्मितात इन्द्रियाभिव्यक्तिर्भवतीत्यस्ति तन्मात्राणां निमित्तता इन्द्रियाभिव्यक्तौ। तन्मात्रे भूतशब्दो बहुलं प्रयुज्यते। इन्द्रियाणां भूतजन्यत्वं नैयायिकसंमतमिति प्रसिद्ध मेव (न्यायसू० १।१।१२ भाष्य)।

२. जलज-स्थावर-कृमि-पक्षि-पशु-मानुष-भेदतः षड्विधा योनिरिति कर्मविपाकसंहितामतं प्रसिद्धमेव। अण्डज स्वेदज-उदभिज्ज-जरायुजरूपाः चत्वारो भेदा बह्वाचार्यसंमताः (द्र० अनुभूतिप्रकाश १।५६; शिवगीता ८।२; चरक शारीर ३।२३; प्रपञ्चसार अ० १)। उद्भिज्जे संशोकजस्य = स्वेदजस्यान्तर्भावः ब्रह्मसूत्रे कृतः (३।१।२१)। उद्भिज्जः = भूम्युदकोद्भेदः (शारीरकभा०)। ज्ञानवृत्तितारतम्यदृशा चतुर्णां क्रमस्तु 'उद्भिज्ज-स्वदेज-अण्डज-जरायुजरूप एव' ( द्र० दक्षिणामूर्तिस्तोत्रटीका सुरेश्वरकृता )।

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति—अण्डजं जीवजमुद्भिज्जमिति (छान्दोग्य० ६।३।१) श्रुतावण्डजादिरूपं शरीरत्रैविध्यं प्रायिकाभिप्रायेणोक्तम्, न तु नियमः, यत ऊष्मजादि षड्विधमेव शरीरं भवतीत्यर्थः ।

तत्रोष्मजा दन्दशूकादयः । अण्डजाः पक्षिसर्पादयः । जरायुजा मनुष्यादयः । अण्डजाः पक्षिसर्पादयः । जरायुजा मनुष्यादयः । उद्भिज्जा[1] वृक्षादयः सङ्कल्पजाः सनकादयः । सांसिद्धिका मन्त्रतपआदिसिद्धिजाः—यथा रक्तबीजशरीरोत्पन्नशरीरादय इति ।।१११।।

शरीरस्यैकमात्रभूतोपादानकत्वं पूर्वोक्तमनेनैव प्रसङ्गेन विशिष्याह—

सर्वेषु पृथिव्युपादानमसाधारण्यात्[2] तद्व्यपदेशः पूर्ववत् ।।११२।।

सर्वेषु शरीरेषु पृथिव्येवोपादानम् । असाधारण्यात्, आधिक्यादिभिरुत्कर्षात् । अत्रापि शरीरे पञ्चचतुरादिभौतिकत्वव्यपदेशः पूर्ववत् (द्र० ५।१०२) । इन्द्रियाणां भौतिकत्ववदुपष्टम्भकत्वमात्रेणेत्यर्थः ।।११२।।

ननु प्राणस्य शरीरे प्राधान्यात् प्राण एव देहारम्भकोऽस्तु, तत्राह—

न देहारम्भकस्य[3] प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ।।११३।।

प्राणो न देहारम्भकः । इन्द्रियं विना प्राणानवस्थानेनान्वयव्यतिरेकाभ्यामिन्द्रियाणां शक्तिविशेषादेव प्राणसिद्धेः प्राणोत्पत्तेरित्यर्थः ।

अयं भावः—करणवृत्तिरूपः प्राणः करणवियोगे न तिष्ठति । अतो मृतदेहे करणाभावेन प्राणाभावान्न प्राणो देहारम्भक इति ।।११३।।

नन्वेवं प्राणस्य देहाकारणत्वे प्राणं विनापि देह उत्पद्येत; तत्राह—

---

१. केचन उद्भिज्जं शरीरं न स्वीकुर्वन्ति; द्र० 'उद्भिज्जं शरीरं तु न भवत्येव ....अतस्त्रिविध मेव शरीरम्' इति ( प्रकरणपञ्चिका, पृ० ३३०-३३१ ) । अपरे तु यद्यपि उद्भिज्जाः शरीरिणस्तथापि चेष्टावत्त्वमिन्द्रियत्वं च नोद्भिदां स्फुटतरमतो न शरीरव्यवहार इत्याहुः (द्र० उपस्कार ४।२।५) ।

२. तुल० यत् पुनरपार्थिवमयोनिजं शरीरं केवलधर्माधिपत्यनिबन्धनं कैश्चिदभ्युपगम्यते तत् सर्वशरीराणां पार्थिवत्वाव्यभिचाराद् नानुमातुं शक्यते (प्रकरणपञ्चिका, पृ० ३३२) ।

३. रसादयः शरीरारम्भका इति आयुर्वेदविदः(चरक, शारीर ६।४ गता चक्रपाणिटीका) ।

[1]भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गात् ॥११५॥

भोक्तुः प्राणिनोऽधिष्ठानाद् व्यापारादेव भोगायतनस्य शरीरस्य[2] निर्माणं भवति । अन्यथा प्राणव्यापाराभावे शुक्रशोणितयोः पूतिभावप्रसङ्गात्, मृतदेहवदित्यर्थः । तथा च रससञ्चारादिव्यापारविशेषैः प्राणो देहस्य निमित्तकारणं धारकत्वादिति भावः ॥११४॥

ननु प्राणस्यैवाधिष्ठानत्वं सम्भवति व्यापारवत्त्वात्, न प्राणिनः कूटस्थत्वात् । निर्व्यापारस्याधिष्ठाने प्रयोजनाभावाच्चेति; तत्राह—

भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥११५॥

देहनिर्माणे व्यापाररूपमधिष्ठानं स्वामिनश्चेतनस्यैकान्तात् साक्षान्नास्ति किन्तु प्राणरूपभृत्यद्वारा, यथा राज्ञः पुरनिर्माणे इत्यर्थः । तथा च प्राणस्याधिष्ठातृत्वं [3]साक्षात्, पुरुषस्याधिष्ठातृत्वं प्राणसंयोगमात्रेणेति सिद्धम् । कुलालादीनां घटादिनिर्माणेष्वप्येवम् । विशेषस्त्वयं तत्र चेतनस्य बुद्ध्यादेश्चाप्युपयोगोऽस्ति बुद्धिपूर्वकसृष्टित्वादिति ।

यद्यपि प्राणाधिष्ठानादेव[4] देहनिर्माणं तथापि प्राणद्वारा प्राणिसंयोगोऽप्यपेक्ष्यते, पुरुषार्थमेव प्राणेन देहनिर्माणादित्याशयेन भोक्तुरधिष्ठानादित्युक्तम् ॥११५॥

विमुक्तमोक्षार्थं प्रधानस्येत्युक्तं प्राक् (२।१) । तत्र कथमात्मा नित्यमुक्तो बन्धदर्शनादिति परेषामाक्षेपे नित्यमुक्तिमुपपादयितुमाह—

समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥११६॥

---

१. द्र० शुक्रशोणितं गर्भाशयस्थं····तं चेतनावस्थितं ( सुश्रुत, शारीर ५।३ ); चेतनया हेतुभूतया × × × अवस्थितम् (डल्हण टीका) ।

२. तुल० शरीरं नाम चेतनाधिष्ठानभूतम् (चरक, शारीर ६।४) ।

३. द्र० 'प्राणश्च विधारयितव्यं च' ( प्रश्न० ४।८ ); 'तान् वरिष्ठः प्राण उवाच····अहमेवैतत् पञ्चधात्मानं प्रविभज्य एतद् बाणमवष्टभ्य विधारयामीति' (प्रश्न० २।३) ।

४. द्र० प्राणाद्या वृत्तयः पञ्च करणानां च वृत्तिभिः । प्रेर्यमाणः शरीराणां कुर्वते यास्तु धारणम् ॥ (वायुपु० २।४२); 'वृत्तिरन्तः समस्तानां करणानां प्रदीपवत् । अप्रकाशा क्रियारूपा जीवनं कायधारिका ॥ (युक्तिदी० धृत श्लोक) । प्राणेन देहनिर्माणं कथं भवतीति विस्तरेण अश्वमेधपर्वणि वर्णितम् (अ० १९-२४) ।

समाधिरसम्प्रज्ञातावस्था। सुषुप्तिश्चात्र समग्रसुषुप्तिः। मोक्षश्च विदेहकैवल्यम्। आस्ववस्थासु पुरुषाणां ब्रह्मरूपता बुद्धिवृत्तिविलयतस्तदौपाधिकपरिच्छेदविगमेन स्वस्वरूपपूर्णतयाऽवस्थानम्; यथा घटध्वंसे घटाकाशस्य पूर्णतेत्यर्थः। तदेतदुक्तम्—तन्निवृत्तावुपशान्तोपरागः स्वस्थ इति (२।२४)।

तथा च ब्रह्मत्वमेव पुरुषाणां स्वभावो नैमित्तिकत्वाभावात् स्फटिकस्य शौक्ल्यमिव। बुद्धिवृत्तिसम्बन्धकाले तु परिच्छिन्नचिद्रूपत्वेनाभिव्यक्तया परिच्छेदाभिमानः। तथा वृत्तिप्रतिबिम्बवशाद् दुःखादिमालिन्यमिव च भवतीति तत् सर्वमौपाधिकमेव। उपाध्याख्यनिमित्तान्वयव्यतिरेकानुविधानात् स्फटिकलौहित्यवदिति भावः। तथा च योगसूत्रम्—वृत्तिसारूप्यमितरत्रेति (१।४)।

अस्मच्छास्त्रे च ब्रह्मशब्द औपाधिकपरिच्छेदमालिन्यादिरहितपरिपूर्णचेतनसामान्यवाची, न तु ब्रह्ममीमांसायामिवैश्वर्योपलक्षितपुरुषमात्रवाचीति [1]विवेक्तव्यम्।

अत्रैते श्लोकाः शिष्यव्युत्पत्त्यर्थमुच्यन्ते—

चिदाकाशेऽनभिव्यक्ते नानाकारैरितस्ततः।
धीरटन्ती सह व्यक्तेरटन्तीं दर्शयेच्चितिम्[2]॥
वस्तुतस्तु सदा पूर्णमेकरूपं च चिन्नभः।
वृत्तिशून्यप्रदेषु दृश्याभावान्न पश्यति॥
चक्षुषो रूपवत् पुंसो दृश्या वृत्तिर्हि नेतरत्।
समाध्यादौ च सा नास्तीत्यतः पूर्णः पुमांस्तदा॥११६॥

तर्हि कः सुषुप्तिसमाधिभ्यां मोक्षस्य विशेषस्तत्राह—

द्वयोः सबीजमन्यत्र तद्धतिः[3]॥११७॥

द्वयोः समाधिसुषुप्त्योः सबीजं बन्धबीजसहितं ब्रह्मत्वमन्यत्र मोक्षे बीजस्याभाव

---

१. तुल० ब्रह्ममीमांसायां त्वयं विशेषो यत् परमात्मविवेकशेषत्वम्। सांख्यशास्त्रे तु सामान्यात्मविवेकशेषत्वम् इति दिक् (सांख्यसार; परि० २)।

२. सह व्यक्त्या चिदटन्तीं प्रदर्शयेत्—इति पाठान्तरम्।

३. १।११६ सूत्रे ब्रह्मरूपतेति स्त्रीलिङ्गशब्दः; इह पुनः सबीजमिति विशेषणपदम्; अतो भिक्षुणा ब्रह्मत्वेतिशब्दः विशेष्यरूपेण स्थापितः। तदिदं भिक्षुव्याख्यानस्य काल्पनिकत्वं सूचयति। बीजः संस्कार इति वृत्तिः। द्वयोः सबीजम् इति कथनेनैव तृतीयावस्थायां (मोक्षावस्थायां) बन्धबीजं नास्ति—इति सिध्यत्येव, अतः 'अन्यत्र तद्धति'रिति कथन मनावश्यकम्। वस्तुतस्तु सूत्रमिदमस्पष्टार्थकम्।

इति विशेष इत्यर्थः। ननु चेत् समाध्यादौ बन्धबीजमस्ति तर्हि तेनैव परिच्छेदात् कथं ब्रह्मत्वमिति चेन्न, बन्धबीजस्य कर्मादिस्तदानीमुपाधावेवावस्थानात्, न तु चेतनेषु; पुरुषे च तेषामप्रतिबिम्बनादिति। जाग्रदाद्यवस्थायां तु बुद्धिवृत्तिप्रतिबिम्बवशादौपाधिको बन्ध इत्यसकृदावेदितम्।

ननु पातञ्जले तद्भाष्ये चासंप्रज्ञातयोगो निर्बीज[1]उक्तः। अत्र कथं सबीज उच्यत इति चेन्न; असम्प्रज्ञाते क्रमेण बीजक्षयो भवतीत्याशयेनैव तत्र निर्बीजत्ववचनात्, अन्यथा सर्वासामेवासम्प्रज्ञातव्यक्तीनां निर्बीजत्वे व्युत्थानानुपपत्तेरिति ॥११७॥

ननु समाधिसुषुप्ती दृष्टे स्तः, मोक्षे तु किं प्रमाणमिति नास्तिकाक्षेपं परिहरति—

द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु[2] द्वौ ॥११८॥

समाधिसुषुप्तिदृष्टान्तेन मोक्षस्यापि दृष्टत्वादनुमितत्वान्न तु द्वौ सुषुप्तिसमाधौ एव, किन्तु मोक्षोऽप्यस्तीत्यर्थः। अनुमानं चेत्थम्—सुषुप्त्यादौ यो ब्रह्मभावस्तत्त्यागश्चित्तगताद्रागादिदोषवशादेव भवति[3]। स चेद्दोषो ज्ञानेन नाशितस्तर्हि सुषुप्त्यादिसदृशस्यैवावस्था स्थिरा भवति, सैव मोक्ष इति ।।११८॥

ननु वासनाख्यबीजसत्त्वेऽपि वैराग्यादिना वासनाकौण्ठ्यादर्थाकारा वृत्तिः समाधौ मा भवतु, सुषुप्ते तु वासनाप्राबल्यादर्थज्ञानं भविष्यत्येवेति न सुषुप्तौ ब्रह्मरूपता युक्तेति; तत्राह—

---

१. असंप्रज्ञातसमाधिव्याख्यायां व्यास आह—विरामप्रत्ययो निर्वस्तुक आलम्बनी क्रियते, स चार्थशून्यः' इति (१।१८)। प्रज्ञाकृतसंस्काराणाम् अपि असंप्रज्ञाते अभावात् समाधिरयं निर्बीज एव (द्र० १।५१ भाष्य)।

२. इदं सूत्रमपि अस्पष्टार्थकम्। भिक्षुणा योऽर्थ उक्तः, तस्मिन् विवक्षिते सति 'द्वयोरिव त्रयस्यापि दृष्टत्वात्' इत्येव कथनं समीचीनं स्यात्। एकस्मिन् सूत्रे एव 'न तु द्वौ' इति कथनस्य किमपि प्रयोजनं नावगम्यते। 'मोक्षरूपावस्था अस्ति दृष्टत्वात्' इत्येवंरूपस्य मतस्यात्र प्रतिपादने किं प्रयोजनमिति न ज्ञायते। त्रयस्य = तृतीयस्य।

३. सुषुप्त्यवस्था तमःप्रधाना चित्तावस्था। तस्यां ब्रह्मभावस्य लेशोऽपि वस्तुतो नास्ति। यदि लेशोऽपि भवेत् तर्हि तन्निरोधे कथं यत्नः क्रियते योगिभिः। सुषुप्त्यवस्थायां चित्तं तमोऽभिभूतं सत् संमूढं तिष्ठति, निरायासजनितं सुखमस्पष्टरूपेण विज्ञायते तत्र। सुषुप्त्यवस्था ब्रह्मभावस्यात्यन्तविरोधिनीति ज्ञेयम्।

**वासनया न स्वार्थ-ख्यापनं[1] दोषयोगेऽपि, न निमित्तस्य प्रधानबाधकत्वम्[2] ॥११३॥**

यथा वैराग्ये तथा निद्रादोषयोगेऽपि सति वासनया न स्वार्थख्यापनं स्वविषयस्मारणं भवति। यतो न निमित्तस्य गुणीभूतस्य संस्कारस्य बलवत्तरनिद्रादोषबाधकत्वं सम्भवतीत्यर्थः। बलवत्तर एव हि दोषो वासनां दुर्बलां स्वकार्यकुण्ठां करोतीति भावः ॥११९॥

संस्कारलेशतो जीवन्मुक्तस्य शरीरधारणमिति तृतीयाध्याये(३।८३) प्रोक्तम्। तत्रायमाक्षेपः—जीवन्मुक्तस्य शश्वदेकस्मिन्नप्यर्थेऽस्मदादीनामिव भोगो दृश्यते सोऽनुपपन्नः, प्रथमं भोगमुत्पाद्यैव पूर्वसंस्कारनाशात् संस्कारान्तरस्य च ज्ञानप्रतिबन्धेन कर्मवदनुदयादिति; तत्राह—

**एकः संस्कारः क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः[3] ॥१२०॥**

येन संस्कारेण देवादिशरीरभोग आरब्धः, स एक एव संस्कारस्तच्छरीरसाध्यस्य प्रारब्धभोगस्य समापकः। स च कर्मवदेव भोगसमाप्तिनाश्यो न तु प्रतिक्रियं प्रतिभोगव्यक्ति संस्कारनानात्वं बहुव्यक्तिकल्पनागौरवप्रसङ्गादित्यर्थः।

कुलालचक्रभ्रमणस्थलेऽप्येवं वेगाख्यः संस्कार एक एव भ्रमणसमाप्तिपर्यन्तस्थायी बोध्यः ॥१२०॥

---

१. वासनया ऽनर्थख्यापनम् (पाठा०)।

२. कथं नु खलु संस्काररूपं निमित्तं गुणीभूतम् भवति, निद्रारूपो दोषश्च प्रधानम् भवति—इति न विशदीकृतं भिक्षुणा। इदं सूत्रं सुषुप्तिविषयकमेवेत्यस्य निर्धारणमपि दुःशकमेव। वासनैव बन्धस्य मुख्यं कारणमिति सूत्रतात्पर्यम् इति वृत्तिः।

३. इषुक्षेपादिजन्य एकः संस्कार एव कल्पनीयः, न पुनः वेगाख्यसंस्कारेण कर्म, ततश्च मन्दवेगाख्यः संस्कारः ततश्च पुनः कर्म—इत्येवं रीत्या संस्कारबहुत्वं न कल्पनीयमिति सूत्रतात्पर्यमिति वृत्तिः। अयमेव समीचीनः सूत्रार्थः। एवं सत्यप्यस्मिन्नर्थे प्रकरणसंगतिश्चिन्त्यैव। भिक्षुदर्शितः सूत्रार्थः काल्पनिक एव। किंच न खलु एकेन संस्कारेण किञ्चित् शरीरमारब्धं भवति—इति योगविदः (द्र० व्यासभाष्य २।१३)। किंच निर्वतकेति शब्दः न समापकवाची, अतः निवर्तकेति पठनीयं भिक्षुदृष्टौ इति विज्ञेयम्। प्रचलितेषु संस्करणेषु निर्वतकेत्येव पठ्यते।

उद्भिज्जं शरीरमस्तीत्युक्तम् (५।१११)। तत्र बाह्यबुद्ध्यभावाच्छरीरत्वं नास्तीति नास्तिकाक्षेपमपाकरोति—

**न बाह्यबुद्धिनियमो वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत्[१] ॥१२१॥**

न बाह्यज्ञानं यत्रास्ति तदेव शरीरमिति नियमः, किन्तु वृक्षादीनामन्तःसंज्ञानामपि भोक्तृभोगायतनत्वं शरीरत्वं मन्तव्यम्। यतः पूर्ववत् पूर्वोक्तो (५।११४) यो भोक्त्रधिष्ठानं विना मनुष्यादिशरीरस्य पूतिभावस्तद्वदेव वृक्षादिशरीरेष्वपि शुष्कतादिकमित्यर्थः। तथा च श्रुतिः—अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यतीत्यादिरिति (छान्दोग्य० ६।११।३२)।

न बाह्यबुद्धिनियम इत्यंशस्य पृथक्सूत्रत्वेऽपि सूत्रद्वयमेकीकृत्येत्थमेव व्याख्येयम्। सूत्रभेदस्तु दैर्घ्यभयादिति बोध्यम् ।:१२१॥

**स्मृतेश्च ॥१२२॥**

शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥

( मनु० १२।९ ) इत्यादिस्मृतेरपि वृक्षादिषु भोक्तृभोगायतनत्वमित्यर्थः[३] ॥१२२॥

ननु वृक्षादिष्वप्येवं चेतनत्वेन धर्माधर्मोत्पत्तिप्रसंगस्तत्राह—

---

१. अस्पष्टार्थकं सूत्रम्। बाह्यबुद्धौ एकस्यैव विषयस्य प्रत्ययो भवतीत्यर्थो वृत्तौ। अयमर्थोऽपि अप्राकरणिकः।

२. केचन 'न बाह्यबुद्धिनियमः' इति पृथक्सूत्ररूपेण गणयन्ति।

३. वृक्षप्राणविषये शान्तिपर्वं (अ० १२४) द्र०। मनुरपि 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इत्याह (१।४९)। उद्भित्सर्गः खलु अप्रतिबोधवान् बहिरन्तोऽप्रकाशः संवृतात्मा इत्युक्तम् (विष्णुपुराणे १।५।६-७)। भागवते (३।१०।१९) उत्स्रोताः तमःप्रायः अन्तः स्पर्शः विशेषी च मुख्यसर्गनामा उद्भित्सर्ग इत्युक्तम्। द्र० ब्रह्माण्डपु० १।५।३३-३४। एवं चतुर्विधां जातिमात्मा संसृत्य तिष्ठति। स्पर्शेनैकन्द्रियेणात्मा तिष्ठत्युद्भिदजेषु वै (अनुशासन० १४५ अ०, दाक्षिणात्यपाठः, पृ० ५९७६-७७ गीताप्रेस संस्क०)। पुरुषशरीरतुल्यत्वात् सचेतनो वनस्पतिः ( षड्दर्शनसमुच्चयवृत्ति )। 'वृक्षास्तु चेतनावन्तोऽपि तमसाच्छन्नज्ञानतया'''( चक्रपाणिटीका )।

न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः[1] ॥१२३॥

न देहमात्रेण धर्माधर्मोत्पत्तियोग्यत्वं जीवस्य, कुतः, वैशिष्ट्यश्रुतेः। ब्राह्मणादिदेहविशिष्टत्वेनैवाधिकारश्रवणादित्यर्थः ॥१२३॥

देहभेदेनैव कर्माधिकारं दर्शयन् देहत्रैविध्यमाह—

त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः[2] ॥१२४॥

त्रयाणामुत्तमाधममध्यमानां सर्वप्राणिनां त्रिप्रकारो देहविभागः—कर्मदेहभोगदेहोभयदेहा इत्यर्थः। तत्र कर्मदेहः परमर्षीणाम्, भोगदेह इन्द्रादीनामुभयदेहश्च राजर्षीणामिति। अत्र प्राधान्येन त्रिधा विभागः। अन्यथा सर्वस्यैव भोगदेहत्वापत्तेः ॥१२४॥

चतुर्थमपि शरीरमाह—

न किञ्चिदप्यनुशयिनः[3] ॥१२५॥

---

१. द्र० पू० मी० सू० १।१।४ सभाष्यम्। द्र० अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य (शारीरक० १।३।३३)। ब्राह्मणादिदेहविशिष्टानामेव कर्मसु यथाशास्त्रमधिकार इति पू० मी० २।३।४ सूत्रेऽपि व्याख्यातम्।

२. जीवा त्रिप्रकाराः, देव-तिर्यङ्-मनुष्यभेदाद् इति सांख्यीया दृष्टिः (सा० का० ५३)। किं प्रत्येकं प्रकारेषु त्रिविधा देहा भवितुमर्हन्ति, आहोस्विद् भेदत्रये देहत्रयं नियतम् (एकस्मिन् जीवभेदे कर्मदेह एव, अन्यस्मिन् उपभोगदेह एवेत्येवंरूपः) इति न स्पष्टं विज्ञायते। अस्मन्मते दैवदेह-धारिणो जीवाः (स्वर्गिणः नारकिणश्च) तिर्यग्रूपा जीवाश्च प्राधान्येन उपभोगदेहाः, मनुष्याश्च कर्मदेहाः। कर्मदेहेष्वपि अवस्थाभेदे उपभोगदेहप्राधान्यं जायते, उपभोगदेहेऽपि तथैव कर्मदेहप्राधान्यं जायते, इत्यत उभयदेह इति तृतीयो भेदः कृतः सूत्रकारेण। कर्मदेहे पुरुषकारस्य प्राधान्यम् इच्छानुसारेण कर्मकरणे सामर्थ्याधिक्यं च वर्तते। अवशो भूत्वा सुखदुःखोपभोगः क्रियत उपभोगशरीरिणा। ये समाधिसिद्धा देवशरीरिणः कर्मणः समाप्तिं विधाय ज्ञानबलेन मुक्ता भवन्ति ते 'उभयदेहिनः' इति कथयितुं शक्यते। कर्मदेहे उपभोगदेहे च स्वल्पं भोगपारवश्यं पुरुषकारश्च यथायथं वर्तेते—इति विज्ञेयम्। योगिजनेषु पुरुषकाराधिक्यमतस्तेषां कर्मदेह एव। अपरेषां राग-विरागप्राचुर्यवतां देह उभयदेह इति विवेच्यम्।

३. अत्र 'शरीरविषयको विचार' इति वृत्तिभाष्यतः प्रतीयते (न पूर्वोक्तकर्मादिशरीराणां किमपि अनुशयिनः इति प्रचलितोऽर्थः)। पूर्वसूत्रे पुंलिङ्गो देहशब्द उपात्तः, अतः किञ्चिदिति पदेन कथं तस्य परामर्शः स्यादिति

'विद्यादनुशयं द्वेष्यं पश्चात्तापानुतापयोः' (शाश्वतकोश ३२०) इति वाक्याद-नुशयो वैराग्यम्। विरक्तानां शरीरमेतत्त्रयविलक्षणमित्यर्थः, यथा दत्तात्रेय-जडभरतादीनामिति ॥१२५॥

उक्तस्येश्वराभावस्य (१।९२) स्थापनाय पराभ्युपगतं ज्ञानेच्छाकृत्यादिनित्यत्वं प्रतिषेधति—

न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत्[1] ॥१२६॥

बुद्धिरत्राध्यवसायाख्या वृत्तिः। तथा च ज्ञानेच्छाकृत्यादीनामाश्रयविशेषे परैरीश्वरोपाधितयाभ्युपगतेऽपि नित्यत्वं नास्ति। अस्मदादिबुद्धिदृष्टान्तेन सर्वेषामेव बुद्धीच्छादीनामनित्यत्वानुमानात्। यथा लौकिकवह्निदृष्टान्तेनावरणतेजसोऽप्यनि-त्यत्वानुमानमित्यर्थः ॥१२६॥

आस्तां तावज् ज्ञानेच्छादेर्नित्यत्वम्, तदाश्रय ईश्वरोपाधिरेवासिद्ध ईश्वरस्या-सिद्धेरित्यत आह—

आश्रयासिद्धेश्च ॥१२७॥

सुगमम् ॥१२७॥

नन्वेवं ब्रह्माण्डादिसर्जनसमर्थसर्वज्ञत्वादिकं कथं जन्यं सम्भाव्येतापि; लोके तपआदिभिरेवमैश्वर्यादर्शनादिति; तत्राह—

योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः[2] ॥१२८॥

औषधादिसिद्धिदृष्टान्तेन योगजा अप्यणिमादिसिद्धयः सृष्टयाद्युपयोगिन्यः सिद्ध्यन्तीत्यर्थः ॥१२८॥

पुरुषसिद्धिप्रतिकूलतया भूतचैतन्यवादिनं प्रत्याचष्टे—

न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्येऽपि[3] च सांहत्येऽपि च ॥१२९॥

---

चिन्तनीयम्। 'न किञ्चिदपि कर्माधिकारित्वम् अनुशयिनः' इत्यर्थः क्रियते चेत् तर्हि स साधुः स्यात्। 'ज्ञानिनो न किञ्चिदपि कर्म' इत्यर्थ इति महादेव।

१. ईश्वरस्य बुद्ध्यादयो गुणा नित्या इति नैयायिकाः। बुद्ध्यदीनां त्रैगुणिक-त्वाद् अनित्यत्वमिति सांख्यीया दृष्टिः। बुद्ध्यादिपदेन ज्ञानसुखेच्छाप्रयत्नधर्मा एव ग्राह्याः (द्र० न्यायमञ्जरी; भाग १ पृ० १८५)। केचन संख्याबुद्धीच्छा-प्रयत्नसुखान्येव पञ्च ईश्वरस्य गुणा इत्याहुः (पदार्थतत्त्वनिरूपण-टीका राम-भद्र-कृता)।

२. ओषधिहेतुका सिद्धिरस्ति इति व्यासभाष्ये (४।१) उक्तम्।

३. भूते चैतन्यमस्तीति वादिनो भूतचैतनिकस्य मतं न्यायभाष्ये दृश्यते(३।२।३५)।

संहतभावावस्थायमपि पञ्चभूतेषु चैतन्यं नास्ति, विभागकाले प्रत्येकं चैतन्यादृष्टेरित्यर्थः । तृतीयाध्याये (३।२०-२२) चेदं स्वसिद्धान्तविधयोक्तम्, अत्र च परमतनिराकरणायेति न पौनरुक्त्यं दोषायेति । वीप्साऽध्यायसमाप्तौ ॥१२९॥

स्वसिद्धान्तविरुद्धार्थभाषिणो ये कुवादिनः ।
पञ्चमे तान् निराकृत्य स्वसिद्धान्तो दृढीकृतः ॥

इति विज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये परपक्षनिर्जयाध्यायः पञ्चमः ।

# षष्ठोऽध्यायः

अध्यायचतुष्केण समस्तशास्त्रार्थम् प्रतिज्ञाय पञ्चमाध्याये परपक्षनिराकरणेन प्रसाध्येदानीं तमेव सारभूतशास्त्रार्थं षष्ठाध्यायेन सङ्कलयन्नुपसंहरति। उक्तार्थानां हि पुनस्तन्त्राख्ये विस्तरे कृते शिष्याणामसन्दिग्धाविपर्यस्तो दृढ़तरो बोध उत्पद्यत इत्यतः स्थूणानिखनन्यायादनुक्तयुक्त्याद्युपन्यासाच्च नात्र पौनरुक्त्यं दोषाय[1]।

अस्त्यात्मा[2] नास्तित्वसाधनाभावात्[3] ॥१॥

जानामीत्येवं प्रतीयमानतया पुरुषः सामान्यतः सिद्ध एवास्ति बाधकप्रमाणाभावात्, अतस्तद्विवेकमात्रं कर्त्तव्यमित्यर्थः ॥१॥

तत्र विवेके प्रमाणद्वयमाह सूत्राभ्याम्—

---

१. सप्रयोजना पुनरुक्तिः (अनुवादनाम्नी) न दोषाय भवतीति नैयायिकाः। अत्र न पुनरुक्तिरूपो दोषो वर्तते (द्र० २।१।६-७ न्यायसू०)। अर्थवान् अभ्यासोऽनुवाद इत्युच्यते।

२. द्र० अस्ति तावत् स्वयं नाम विवादाविषयत्वतः। स्वस्मिन्नपि विवादश्चेत् प्रतिवाद्यत्र को भवेत्॥ (पञ्चदशी ३।२३); आत्मनः नास्तित्वसाधनं न भवितुमर्हति—इति पञ्चदशीटीकाकारः (३।१२-१३) सुष्ठु प्रतिपादितवान्। 'निर्मुच्यापि त्वचं सर्पः स्व-स्वरूपं न मुञ्चति। नास्त्यात्मेति च यो हेतुरिति वक्तुं न युज्यते'॥ (अज्ञानबोधिनी; अनु. २२३); आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यति' (शारीरक० २।३।७); 'असिद्धस्य हि वस्तुनः परिस्थितिं प्रति प्रमाणापेक्षा, न तु आत्मनः। आत्मनश्चेत् प्रमाणापेक्षा सिद्धिः कस्य प्रमातृत्वं स्यात्? यस्य प्रमातृत्वं स एवात्मा इति निश्चीयते। ततः स्वतःसिद्ध एवात्मा, न प्रमाणपेक्षा' (अज्ञानबोधिनी २३१-२३२ अनु०)। 'प्रमातु श्चेत् प्रमाणापेक्षासिद्धिः कस्य प्रमित्सा स्यात्। यस्य प्रमित्सा स एव प्रमाता अभ्युपगम्यते' (उपदेशसाहस्री, पृ० १४२)? आत्मा खलु प्रतिषेद्धुमशक्य इति अत्रैव दर्शितम् (पृ० २०२-२०७)।

३. आत्मनो नास्तित्वसाधकान्यनुमानानि न्यायवार्त्तिक उक्तानि (३।१।१) विशेषतः।

देहादिव्यतिरिक्तोऽसौ वैचित्र्यात्[1] ।।२।।

असावात्मा द्रष्टा देहादिप्रकृत्यन्तेभ्योऽत्यन्तं भिन्नो वैचित्र्यात्; परिणामित्वापरिणामित्वादिवैधर्म्यादित्यर्थः ।

प्रकृत्यादयस्तावत् प्रत्यक्षानुमानागमैः परिणामितयैव सिद्धाः; पुरुषस्यापरिणामित्वं तु सदा ज्ञातविषयत्वादनुमीयते। तथाहि—यथा चक्षुषो रूपमेव विषयो न सन्निकर्षसाम्येऽपि रसादिरेवं पुरुषस्य स्वबुद्धिवृत्तिरेव विषयो न तु सन्निकर्षसाम्येऽप्यन्यद्वस्त्विति फलबलात् क्लृप्तम्। बुद्धिवृत्त्यारूढतयैव त्वन्यद्भोग्यं भवति पुरुषस्य न स्वतः, सर्वदा सर्वभानापत्ते । ताश्च बुद्धिवृत्तयो नाज्ञातास्तिष्ठन्ति ज्ञानेच्छासुखादीनामज्ञातसत्तास्वीकारे तेष्वपि घटादाविव संशयादिप्रसङ्गादहं जानामि न वा, सुखी न वेत्यादिरूपेण । अतस्तेषां सदा ज्ञातत्वात् तद्द्रष्टा चेतनोऽपरिणामीत्यायातम् ।

चेतनस्य परिणामित्वे कदाचिदान्ध्यपरिणामेन सत्या अपि बुद्धिवृत्तेरदर्शनेन संशयाद्यापत्तेरिति । एवं पारार्थ्यापारार्थ्यादिकमपि पूर्वोक्तं (१।६६) वैधर्म्यजातं बोध्यम् ।।२।।

षष्ठीव्यपदेशादपि[2] ।।३।।

ममेदं शरीरं ममेयं बुद्धिरित्यादेर्विदुषां षष्ठीव्यपदेशादपि देहादिभ्य आत्मा भिन्नः । अत्यन्ताभेदे षष्ठ्यनुपपत्तेरित्यर्थः । तदुक्तं विष्णुपुराणे[3]—

---

१. छान्दोग्य० ८।१२।१ भाष्ये शंकर आह—'सांख्याः द्रष्टारं देहादिव्यतिरिक्तमवगम्यापि····'; 'आत्मनः शरीरव्यतिरेकित्वं शारीरके प्रतिपादितम् (३।३।५४)। आत्मनः देहेन्द्रियमनोव्यतिरिक्तता न्यायसूत्रे (३।१।४-१७) प्रतिपादिता । आत्मनो देहाद्यतिरिक्ततादिविषयकः पुष्कलो विचारः शान्तिपर्वणि (अ० २०३-२०४) दृश्यते । 'यत एतानि दृश्यन्ते लिङ्गानि परमात्मनः। तस्मादस्ति परो देहाद् आत्मा····' (याज्ञ० स्मृति ३।१७६)। 'देहस्तावदात्मा न भवति; रूपादिमत्त्वेनोपलभ्यमानत्वात्····द्रष्टुः दृश्यविवेकाभावात्' (आत्मज्ञानोपदेशविधि, खण्ड १) इत्यत्र आत्मनो देहादिव्यतिरिक्तत्वसिद्धये युक्तय उपन्यस्ताः। शरीरेन्द्रियमनसामात्मत्वं प्रत्युक्तं युक्तिभिर्विवरणप्रमेयसंग्रहे (पृ० १८१–१८३)।

२. द्र० 'किञ्च ममेदमिति शरीरं प्रतीयते, अतः त्वत्सकाशाद् भिन्नस्त्वं द्रष्टा····(अज्ञानबोधिनी ५०–५१)। पञ्चदशी ६।६१ टीका च द्र०।

३. मुद्रित-पुराणे ईषत्पाठभेदोऽवलोक्यते ।

त्वं किमेतच्छिरः किन्तु शिरस्तव तथोदरम् ।
किमु पादादिकं त्वं वै तवैतद्धि महीपते ॥
समस्तावयवेभ्यस्त्वं पृथग् भूप व्यवस्थितः ।
कोऽहमित्यत्र निपुणो भूत्वा चिन्तय पार्थिव ॥ (२।१३।९८–९९) इति ।

न च स्थूलोऽहमित्यादिरपि विद्वद्व्यपदेशोऽस्तीति वाच्यम्; श्रुत्या बाधिततया ममात्मा भद्रसेन इतिवद् गौणत्वेनैव तदुपपत्तेरिति ॥३॥

ननु पुरुषस्य चैतन्यम्, राहोः शिरः,[1] शिलापुत्रस्य शरीरमित्यादिव्यपदेशवदयमपि भवतु; तत्राह—

न शिलापुत्रवद्धर्मिग्राहकमानबाधात् ॥३॥

शिलापुत्रस्य शरीरमित्यादिवदयं षष्ठीव्यपदेशो न भवति शिलापुत्रादिस्थले धर्मिग्राहकप्रमाणेन बाधाद्विकल्पमात्रम् । मम शरीरमिति व्यपदेशे तु प्रमाणबाधो नास्ति देहात्मताया एव बाधादित्यर्थः । यस्तु शास्त्रेषु ममकारप्रतिषेधः स स्वाम्यस्यानित्यतया वाचारम्भणमात्रत्वेनासत्यतापर एवेति भावः ।

पुरुषस्य चैतन्यमित्यत्राप्यस्ति[2] धर्मिग्राहकमानबाधः । अनवस्थाभयेन लाघवाच्च देहादिव्यतिरिक्ततयाऽऽत्मसिद्धौ चैतन्यस्वरूपतावगाहनादिति ॥४॥

देहादिव्यतिरिक्ततया पुरुषमवधार्य तन्मुक्तिमवधारयति—

अत्यन्तदुःखनिवृत्त्या कृतकृत्यता[3] ॥५॥

ननु दुःखनिवृत्त्या सुखस्यापि निवर्त्तनात् तुल्यायव्ययत्वेन न सा पुरुषार्थ इति तत्राह—

यथा दुःखात् क्लेशः पुरुषस्य न तथा सुखादभिलाषः[4] ॥५॥

सुगमम् ॥५॥

विषयविधया हेतुतायां पञ्चम्यौ । क्लेशश्चात्र द्वेषः यथा दुःखे द्वेषो बलवत्तरो नैवं सुखेऽभिलाषो बलवत्तरोऽपि तु तदपेक्षया दुर्बल इत्यर्थः । तथा च सुखाभिलाषं

---

१. तुल० संबन्धेन तु भेदोऽनुमातव्य····राहोः शिर इतिवद् औपचारिकं संबन्धव्यपदेशमात्रम् (ब्र० सू० २।२।१२ परिमलटीका) ।

२. यद्यपि पुरुष एव चैतन्यं तथापि अभेदे भेदमारोप्य पुरुषस्य चैतन्य मित्युच्यते । इदं विकल्पवृत्तेरुदाहरणम् । द्र० "आत्मा वा चैतन्यम् । यथाहुः सांख्याः—चैतन्यं पुरुषस्य स्वरूपम्' इति (वाक्यप० दिक्० १८ हेलाराजीय टीका) ।

३. पुनरुक्तमिदं सूत्रमप्राकरणिकं च ।

४. २।१४ योगवार्त्तिके उद्धृतमिदम् (क्लेशस्थले द्वेषेति पठ्यते) ।

बाधित्वापि दुःखद्वेषो दुःखनिवृत्तावेवेच्छां जनयतीति न तुल्यायव्ययत्वमिति। तदुक्तम्—"अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमीष्टेऽप्यवलम्बतेऽर्थे" इति (कुमारसंभव १।५३)। या तु नरकादिदुःखदर्शनेऽपि क्षुद्रसुखप्रवृत्तिः सा रागादिदोषवशादेवेति ॥६॥

सुखापेक्षया दुःखस्य बहुत्वादपि दुःखनिवृत्तिरेव पुरुषार्थ इत्याह—

कुत्रापि कोऽपि सुखीति ॥७॥

अनन्ततृणवृक्षपशुपक्षिमनुष्यादिमध्ये स्वल्पो मनुष्यदेवादिरेव सुखी भवतीत्यर्थः। इति हेतौ ॥७॥

तदपि कादाचित्कं क्वाचित्कसुखं मधुविषसम्पृक्तान्नवद्विचारकाणां हेयमेवेत्याह—

तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः[1] ॥८॥

तदपि पूर्वसूत्रोक्तं सुखमपि दुःखमिश्रितमित्यतो दुःखकोटौ सुखदुःखविवेचका निःक्षिपन्त इत्यर्थः। तदुक्तं योगसूत्रेण—परिणामतापसंस्कारदुःखैर्गुणवृत्त्यविरोधाच्च[2] सर्वमेव दुःखं विवेकिनः (२।१५) इति। विष्णुपुराणेऽपि—

यद्यत् प्रीतिकरं पुंसां वस्तु मैत्रेय जायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥ (६।५।५५)

इति ॥८॥

केवला दुःखनिवृत्तिर्न पुरुषार्थः, किन्तु सुखोपरक्तेति मतमपाकरोति—

सुखलाभाभावादपुरुषार्थत्वमिति चेन्न द्वैविध्यात्[3] ॥९॥

---

१. द्र० चतुर्दशविधे च संसारे या सुखमात्रा सा दुःखभूयस्त्वात् तच्छब्दवाच्या भवतीति (युक्तिदी० १)। सुखमपि दुःखमिश्रितमिति मतं नैयायिकैरपि अभ्युपगतम्—'सुखं दुःखानुषक्तमनादेयम्' इति (न्ययभा० १।१।२)। व्याख्यातमिदमुद्द्योतकरेण—'अनुषङ्गोऽविनाभावः; यत्रैकं तत्रेतरत्। समाननिमित्तता वा अनुषङ्गः, यानि वा सुखसाधनानि तान्येव दुःखसाधनानीति। समानाधारता वानुषङ्गः, यत्र सुखं तत्र दुःखमिति। समानोपलभ्यता वानुषङ्गः, येन सुखमुपलभ्यते तेन दुःखमपीति'।

२. गुणवृत्त्यविरोधाच्च—इत्येव योगवार्त्तिकानुसारी पाठः।

३. कस्य अपुरुषार्थत्वम् इति नोक्तं सूत्रे। ६।५ सूत्रीय-'अत्यन्तदुःखनिवृत्ति'-इति शब्दस्यानुवृत्तिरत्र स्वीकृता विभक्तित्रिपरिणामबलेन—इति प्रतीयते। एवं सत्यपि पुरुषार्थस्य भिक्षुदर्शितं द्वैविध्यं सांख्यदर्शनानुमोदितं नवेति जायते विचारणा। द्विविधः पुरुषार्थोऽभ्युदयो निःश्रेयसमिति सांख्याचार्यो देवल

सुखलाभाभावान्मोक्षाख्यदुःखाभावस्यापुरुषार्थत्वमिति चेन्न, पुरुषार्थस्य द्वैविध्याद् द्विप्रकारत्वात्—सुखत्वदुःखाभावत्वाभ्यामित्यर्थः। सुखी स्यां दुःखी न स्यामिति हि पृथगेव लोकानां प्रार्थना दृश्यत इति ॥९॥

शङ्कते—

[1]निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः[2] ॥१०॥

नन्वात्मनो निर्गुणत्वं सुखदुःखमोहाद्यखिलगुणशून्यत्वं नित्यमेव सिद्धम्, असङ्गत्वश्रुतेः[3]—विकारहेतुसंयोगाभावश्रवणात्। तं विना च गुणाख्यविकारासम्भवात्। अतो न दुःखनिवृत्तिरपि पुरुषार्थो घटत इत्यर्थः।

ननु संयोगं विना स्वयमेव विकारो भवत्विति चेन्न—

दाहाय नानलो वह्नेर्नापः क्लेदाय चाम्भसः।
तद्द्रव्यमेव तद्द्रव्यविकाराय न वै यतः॥
किञ्च स्वयं विकारित्वे मोक्षो नैवोपपद्यते।
स्वयं मोहविकारेण पुनर्बन्धप्रसङ्गतः॥

इति। तथा चोक्तं कौर्मे (२।२।१२-१३)—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि॥ इति ॥१०॥

समाधत्ते—

परधर्मत्वेऽपि तत्सिद्धिरविवेकात्[4] ॥११॥

---

आह ( याज्ञ० ३।१०९ अपरार्कटीका द्र० )। किं च 'अत्यन्तदुःखनिवृत्तेः अपुरुषार्थत्वं सुखलाभाभावात्' इति प्रश्ने 'पुरुषार्थस्य द्वैविध्याद् अत्यन्तदुःखनिवृत्तिः पुरुषार्थ एव' इति उत्तरं न मनोरमं प्रतीयते।

१. प्रागेवोक्तम्—'असंगोऽयं पुरुष इति' ( १।१५ ); निर्गुणत्वान्न चिद्धर्मा (१।१४६) इति च। अतः पुनरुक्त मिदं सूत्रम्। विशेषगुणोच्छित्तिर्मुक्तिरिति मतमनाख्येयम् आत्मनो निर्गुणत्वादिति सूत्रतात्पर्यं वृत्तिमते।

२. द्र० 'असंगोऽयं पुरुषः' इत्येवमादि-श्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यै रभ्युपगम्यते (शारीरक० २।१।३)।

३. द्र० बृहदा० ४।३।१६ (असंगोऽयं पुरुष इति)।

४. स्वर्गादीनां प्रकृतिधर्मत्वेऽपि कथमात्मनः स्वर्गादिप्राप्तिव्यवहार इति शङ्कायाः समाधानमत्र सूत्रे—इति वृत्तिव्याख्यानतः प्रतीयते। परशब्देन चित्तस्य, तत्पदेन आत्मनश्च ग्रहणं कथं भिक्षुणा कृतमिति न ज्ञायते। सुखदुःखादिगुणैः सह आत्मनः कीदृशः संबन्ध इत्येवंविधो विचारः कथमत्रापतित इत्यपि प्रश्न उदेति।

सुखदुःखादिगुणानां चित्तधर्मत्वेऽपि तत्रात्मनि सिद्धिः प्रतिबिम्बरूपेणावस्थिति रविवेकान्निमित्तात्, प्रकृतिपुरुषसंयोगद्वारेत्यर्थः। एतच्च प्रथमाध्याये प्रतिपादितम्[1], निमित्तत्वमविवेकस्य न दृष्टहानिरिति (३।७४) तृतीयाध्यायसूत्रे चेति। तथा च स्फटिके लौहित्यमिव पुरुषे प्रतिबिम्बरूपेण दुःखसत्त्वात् तन्निवृत्तिरेव पुरुषार्थः। प्रतिबिम्बद्वारकदुःखसम्बन्धस्यैव भोगतया प्रतिबिम्बरूपेणैव दुःखस्य हेयत्वादिति ॥११॥

अविवेकमूलः पुरुषे गुणबन्धोऽविवेकस्तु किम्मूलक इत्याकाङ्क्षायामाह—

[2]अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥१२॥

अगृहीतासंसर्गकमुभयविषयकज्ञानमविवेकः[3]। स च प्रवाहरूपेणानादिश्चित्तधर्मः प्रलये वासनारूपेण तिष्ठति। अन्यथा तस्य सादित्वे दोषद्वयप्रसङ्गात्। सादित्वे हि स्वत एवोत्पादे मुक्तस्यापि बन्धापत्तिः। कर्मादिजन्यत्वे च कर्मादिकं प्रत्यपि कारणत्वेनाविवेकान्तरान्वेषणेऽनवस्थेत्यर्थः[4]।

अयं चाविवेको वृत्तिरूपः प्रतिबिम्बात्मना पुरुषधर्म इव भवतीत्यतः पुरुषस्य बन्धप्रयोजक इति प्रागेवोक्तं (१।५५), वक्ष्यते (६।१६; ६।६८) च ॥१२॥

ननु चेदनादिस्तर्हि नित्यः स्यादिति; तत्राह—

न नित्यः स्यादात्मवदन्यथानुच्छित्तिः ॥१३॥

आत्मवन्नित्योऽखण्डानादिर्न भवति किन्तु प्रवाहरूपेणानादिः। अन्यथाऽनादिभावस्योच्छेदानुपपत्तेरित्यर्थः ॥१३॥

---

१. १।५५ सू० द्र०। अत्रार्थे १।१९, १।८७, १।९९, १।१०६ सूत्राणि चापि द्रष्टव्यानि।

२. अविवेकस्यानादिता बह्वाचार्यसंमता—'अनादिरविवेकोऽयं मूलाविद्येति गम्यताम्' (पञ्चदशी ६।२५); अविवेकोऽप्यनाद्योऽयम् (उपदेशसाहस्री १६।६१); 'अज्ञानस्यानिर्वचनीयत्वम्........अनादित्वम्। सादित्वे चोपादानपरम्परापेक्षायां मूलकारणं न सिध्येत्। तदेवम् अनाद्यनिर्वाच्यभावरूपाज्ञानम् (वि० प्र० संग्रह, पृ० १८)।

३. असंसर्गाग्रहोऽविवेको नेतिमतं प्रतिपादितं विवरणप्रमेयसंग्रहे (पृ० २९)।

४. द्र० अतोऽनाद्यनिर्वचनीयं किं चिदुपादानं कल्पनीयम्, सादित्वेऽनवस्थापत्तेः (वि० प्र० संग्रह, पृ० ३७)।

बन्धकारणमुक्त्वा मोक्षकारणमाह—

प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत्[1] ॥१४॥

अस्य बन्धकारणस्याविवेकस्य शुक्तिरजतादिस्थले प्रतिनियतं यन्नाशकारणं विवेकस्तन्नाश्यत्वं तमोवत् । अन्धकारो हि प्रतिनियतेनालोकेनैव नाश्यते नान्यसाधनेनेत्यर्थः । तदुक्तं विष्णुपुराणे[2] (६।५।६२)—

अन्धन्तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ॥इति ॥१४॥

विवेकेनैवाविवेको नाश्यत इति प्रतिनियमस्य ग्राहकमप्याह—

अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात्[3] ॥१५॥

ध्वान्तालोकयोरिव प्रकृतेऽपि प्रतिनियमः शुक्तिरजतादिष्वन्वयव्यतिरेकाभ्यामेव ग्राह्य इत्यर्थः । अथवैवं व्याख्येयम्—ननु विवेकस्यापि किं प्रतिनियतं कारणं तत्राह—अत्रापि विवेकेऽपि कारणनियमोऽन्वयव्यतिरेकाभ्यामेव सिद्धः । श्रवणमननिदिध्यासनरूपमेव कारणं न तु कर्मादीति । कर्मादिकं तु बहिरङ्गमेवेत्यर्थः ॥१५॥

बन्धस्य स्वाभाविकत्वादिकं न सम्भवतीति प्रथमपादोक्तं (१।७-५५) स्मारयति—

प्रकारान्तरासम्भवादविवेक एव बन्धः[4] ॥१६॥

---

१. अयमेवार्थः १।५६ सूत्रेऽप्युक्तः (नियतकारणत्वात् तदुच्छित्तिर्ध्वान्तवत्) । अस्याः पुनरुक्तेः किमपि प्रयोजनं नावगम्यते ।

२. अत्राज्ञानम्, इन्द्रियभवं ज्ञानं, विवेकजं ज्ञानमिति त्रिविधं ज्ञानं लक्षितम् ।

३. ६।१४ सूत्र उक्तं—अविवेकः विरोधिना कारणेन अवश्यमेव नष्टो भवति, किं तत् कारणमित्यत्र नोक्तम् । ६।१५ सूत्रे उच्यते—तत् नियतं कारणं अन्वयव्यतिरेकतो विज्ञेयम् । अत्रापि किं तत् कारणमिति न उक्तम्, कारणनिर्धारणस्य उपाय एव कथितः । अविवेक एव बन्धकारणम् इति ६। १६ सूत्रे प्रतिपादितम् । अत्र प्रकरणे सूत्ररचनायां शैथिल्यं स्पष्टमेव दृश्यते । किंच अविवेकस्य बन्धहेतुता १।५५ सूत्रेऽपि उक्ता—दुःखयोगरूपस्य बन्धस्य हेतुः संयोगः, तस्य पुनः अविवेक इति । पुनरुक्तिरियं निष्प्रयोजना । यतोहि पूर्वसूत्रे विवेकस्य प्रसंगो नास्ति, अतः ६।१५ सूत्रीयद्वितीयव्याख्यापि निर्मूला प्रतीयते ।

४. बन्धकारणार्थे बन्धशब्दोऽत्र प्रयुक्तः ।

बन्धोऽत्र दुःखयोगाख्यबन्धकारणम् । शेषं सुगमम् ॥१६॥

ननु मुक्तेरपि कार्यतया विनाशापत्त्या पुनर्बन्धः स्यादिति; तत्राह—

न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः[1] ॥१७॥

भावकार्यस्यैव विनाशितया मोक्षस्य नाशो नास्ति—'न स पुनरावर्त्तते' (छान्दोग्य० ८।१५।१९) इति श्रुते रित्यर्थ। अपिशब्दः पूर्वसूत्रोक्तार्थसमुच्चये॥१७॥

अपुरुषार्थत्वमन्यथा[2] ॥१८॥

अन्यथा मुक्तस्यापि पुनबन्धे प्रलयवदेव मोक्षस्यापुरुषार्थत्वं परमपुरुषार्थत्वाभावो वा स्यादित्यर्थः ॥१८॥

अपुरुषर्थत्वे हेतुमाह—

अविशेषापत्तिरुभयोः ॥१९॥

भाविबन्धत्वसाम्येनोभयोर्मुक्तबद्धयोर्विशेषो न स्यात् । ततश्चापुरुषार्थत्वमित्यर्थः ॥१९॥

नन्वेवं बद्धमुक्तयोर्विशेषाभ्युपगमे नित्यमुक्तत्वं (१।१।६२) कथमुच्यते; तत्राह—

[3]मुक्तिरन्तरायध्वस्तेर्न[4] परः ॥२०॥

वक्ष्यमाणान्तरायस्य ध्वंसादतिरिक्तः पदार्थो न मुक्तिरित्यर्थः। यथाहि स्वभावशुक्लस्य स्फटिकस्य जपोपाधिनिमित्तं रक्तत्वं शौक्ल्यावरकरूपं विघ्नमात्रम्, न तु जपोपधानेन शौक्ल्यं नश्यति जपापाये चोत्पद्यते; तथैव स्वभावनिर्दुःखस्यात्मनो बुद्ध्युपाधिकं दुःखप्रतिबिम्बं तदावरकरूपं विघ्नमात्रम् न तु बुद्ध्युपधानेन दुःखं जायते तदपाये च नश्यतीति। अतो नित्यमुक्त आत्मा, बन्धमोक्षौ तु व्यावहारिकावित्यविरोध इति ॥२०॥

नन्वेवं बन्धमोक्षयोर्मिथ्यात्वे मोक्षस्य पुरुषार्थताप्रतिपादकश्रुत्यादिविरोध इत्याह—

---

१. द्र० बुद्धि-पुरुषसंयोगाभावः·······पुरुषस्यामिश्रीभावः पुनरसंयोगो गुणैरित्यर्थः' (व्यासभा० २।२५)।

२. अस्मिन् सूत्रे मोक्षस्येति षष्ठचन्तं विशेष्यपदं पठनीयम्, ६।१७ सूत्रे तु मुक्तस्येति विशेषणपदं वर्तते। किं कारणमस्यासामञ्जस्येति न ज्ञायते।

३. 'बन्धनाश एव मोक्षो न कार्यभूतः' (बृहदा० ३।३।१ शां० भा०)। 'तस्माद् अविद्यानिवृत्तिमात्रे मोक्षव्यवहार इति चावोचाम, यथा रज्ज्वादौ सर्पाद्यज्ञाननिवृत्तौ सर्पादिनिवृत्तिः' इति (बृहदा० ४।४।६ शां०भा०)। 'अविद्यास्तमयो मोक्षः' (बृहदारण्यवार्त्तिक)। 'चित्तनिवृत्तिरेव मोक्षः' (व्यासभाष्य२।२४)

४. प्रागुक्तम्-निजमुक्तस्य बन्धध्वंसमात्रं परम् इति (१।८६); अतः पुनरुक्तमिदं सूत्रम्।

[1]तत्राप्यविरोधः ॥२१॥

तत्राप्यन्तरायध्वंसस्य मोक्षत्वेऽपि पुरुषार्थत्वाविरोध इत्यर्थः। दुःखयोगवियोगावेव हि पुरुषे कल्पितौ, न तु दुःखभोगोऽपि। भोगश्च प्रतिबिम्बरूपेण दुःखसम्बन्ध इत्यत प्रतिबिम्बरूपेण दुःखनिवृत्तिर्यथार्थैव पुरुषार्थः। स एवान्तरायध्वंसः। तादृशश्च मोक्षो यथार्थ एवेति भावः ॥२१॥

नन्वन्तरायध्वंसमात्रं चेन्मुक्तिस्तर्हि श्रवणमात्रेणैव तत्सिद्धिः स्यात्, अज्ञानप्रतिबद्धकण्ठचामीकरसिद्धिवदिति; तत्राह—

[2]अधिकारित्रैविध्यान्न [3]नियमः ॥२२॥

उत्तममध्यमाधमास्त्रिविधा ज्ञानाधिकारिणः। तेन श्रवणमात्रानन्तरमेव मानससाक्षात्कारः सर्वेषामिति न नियम इत्यर्थः। अतो मन्दाधिकारदोषाद्विरोचनादीनां श्रवणमात्राच्चित्तविलायनक्षमं मानसज्ञानं नोत्पन्नम्, न तु श्रवणस्य ज्ञानजननासामर्थ्यादिति ॥२२॥

न केवलं श्रवणमात्रं ज्ञाने दृष्टकारणमन्यदपीत्याह—

दाढर्यार्थमुत्तरेषाम्[4] ॥२३॥

श्रवणादुत्तरेषां मननिदिध्यासनादीनामन्तरायध्वंसस्यात्यन्तिकत्वरूपदार्ढ्यार्थं नियम इत्यनुषज्यते ॥२३॥

---

१. यदि मुक्तौ धर्मयोगो भवति, तथापि न दोष इति सूत्रतात्पर्यं वृत्तिमते। इदमसमीचीनं प्रतीयते प्रकरणविरोधाद् अपसिद्धान्तकथनाच्च।

२. मृदु-मध्य-तीव्रभेदेन अधिकारिणां यत् त्रैविध्यं १।२२ योगसूत्रे निर्दिष्टं तदेवात्र निर्दिश्यत इति प्रतीयते। तुल० तारतम्यप्रकाशो यः तीव्रमध्यममन्दता। ता एव शक्तिपातस्य प्रत्येकं त्रैधमास्थिता (तन्त्रालोक १।१३९ टीकायामुद्धृतः श्लोकः)।

३. पुनरुक्तप्रायमिदं सूत्रम्। सांख्याधिकारिणां गुणाः शान्तिपर्वणि (वसिष्ठोक्तसांख्यज्ञानप्रतिपादनान्ते, ३०८।३२-३६) विस्तरेणोक्ताः। कपिलासुरिसंवादेऽपि (शान्तिपर्व, कुम्भकोणसंस्क०) ईदृशी चर्चा विद्यते।

४. उत्तरेषामित्यनेन के पदार्था लक्ष्यन्ते—इति न प्रकरणबलेन विज्ञायते। यत्र शब्दतः अनुक्तिः तत्र उत्तरेति पदबलेन न किमपि लक्षयितुं शक्यते। अविद्या क्षेत्रमुत्तरेषाम्....इति योगसूत्रे पठ्यते ( २।४ ); २।६-९ सूत्रेषु पुन रस्मितादीनां क्लेशानां निर्देशाः सन्ति। किंच श्रवणात् परं मननं निदिध्यासनं चेति द्वौ उपायौ एव आश्रयणीयौ—इति संप्रदायविदः। श्रवणादुत्तरौ द्वावेव उपायौ अवशिष्येते, अतः 'उत्तरेषाम्' इति बहुवचनानुपपत्तिः।

उत्तराण्येव साधनान्याह—

स्थिरसुखमासनमिति न नियमः[1] ॥२४॥

आसने पद्मासनादिनियमो नास्ति। यतः स्थिरं सुखं च यत् तदेवासनमित्यर्थः ॥२४॥

मुख्यं साधनमाह—

ध्यानं निर्विषयं मनः[2] ॥२५॥

वृत्तिशून्यं यदन्तःकरणं भवति तदेव ध्यानं योगश्चित्तवृत्तिनिरोधरूप इत्यर्थः। एतत्साधनत्वेन ध्यानस्य वक्ष्यमाणत्वादिति ॥२५॥

ननु योगायोगयोः पुरुषस्यैकरूप्यात् किं योगेनेत्याशङ्क्य समाधत्ते—

उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ॥२६॥

उपरागनिरोधाद् वृत्तिप्रतिबिम्बापगमाद्योगावस्थायामयोगावस्थातो[3] विशेषः पुरुषस्येति सिद्धान्तदलार्थः। शेषं व्याख्यातप्रायम् ॥२६॥

ननु निःसंगे कथमुपरागस्तत्राह—

निःसङ्गेऽप्युपरागोऽविवेकात् ॥२७॥

निःसङ्गे यद्यपि पारमार्थिक उपरागो नास्ति तथाप्युपराग इव भवतीति कृत्वा प्रतिबिम्ब एवोपराग इति व्यवह्रियते उपरागविवेकिभिरित्यर्थः ॥२७॥

एतदेव विवृणोति—

जपा-स्फटिकयोरिव नोपरागः किन्त्वभिमानः[4] ॥२८॥

यथा जपास्फटिकयोर्नोपरागः किन्तु जपाप्रतिबिम्बवशादुपरागाभिमानमात्रं रक्तः स्फटिक इति, तथैव बुद्धिपुरुषयोर्नोपरागः; किन्तु बुद्धिप्रतिबिम्बवशादुपरागाभिमानोऽविवेकवशादित्यर्थः। अत उपरागतुल्यतया वृत्ति-प्रतिबिम्ब एव पुरुषोपराग

---

१. स्थिरसुखमासनम् इति प्राक् पठितम् (३।३४)। किमिदं सूत्रं ३।३४ सूत्रीये मते दोषं दर्शयति ? योगसूत्रेऽपि 'स्थिरसुखमासनम्' (२।४६) इत्युक्तम्। 'स्थिरं सुखं चासनमाश्रितो यतिः' इति भागवतम् (२।२।१५)।

२. द्र० मनोनिर्विषयं युक्त्वा (भाग० २।१।१९; ध्यानविवरणमत्र); अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः (मैत्र्युपनिषद् २।१; स्कन्दोपनिषद् ११); ध्यानं निर्विषयं मनः (ज्ञानसंकलिनीतन्त्र)। तुल० ३।३० 'रागोपहतिर्ध्यानम् इति।

३. सुषुप्तिसमाध्योर्यो विशेषः सोऽत्रोच्यते—इति वृत्तिः। उपरागः = विषयवासना।

४. सूत्रमिद मुद्धृतं योगवार्त्तिके (१।४)।

इति सूत्रद्वयपर्यवसितोऽर्थः ।[१]

एष एव च दुःखात्मकवृत्तेरुपरागो दुःखनिवृत्त्याख्यमोक्षस्यान्तरायस्तस्य च ध्वंसश्चित्तलयात्, सोऽपि च चित्तवृत्तिनिरोधाख्येनासम्प्रज्ञातयोगेनेत्यतो योगादेवान्तरायध्वंसो भवतीति योगशास्त्रस्यापि सिद्धान्तः ॥२८॥

'ध्यानं निर्विषयं मनः' इति (६।२५) योग उक्तस्तस्य साधनान्याचक्षाण एव यथोक्तोपरागस्य निरोधोपायमाह—

ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ॥२९॥

समाधिद्वारा ध्यानं योगस्य कारणम्, ध्यानस्य च कारणं धारणा, तस्याश्च कारणमभ्यासश्चित्तस्थैर्यसाधनानुष्ठानम्, अभ्यासस्यापि कारणं विषयवैराग्यम्, तस्यापि दोषदर्शनयमनियमादिकमिति पातञ्जलोक्तप्रक्रियया तन्निरोध उपरागनिरोधो भवति चित्तवृत्तिनिरोधाख्ययोगद्वारेत्यर्थः ॥२९॥

चित्तनिष्ठध्यानादिना पुरुषस्योपरागनिरोधे पूर्वाचार्यसिद्धं द्वारं दर्शयति—

लयविक्षेपयो[२] र्व्यावृत्त्येत्याचार्याः[३] ॥३०॥

ध्यानादिना चित्तस्य निद्रावृत्तेः प्रमाणादिवृत्तेश्च निवृत्त्या पुरुषस्यापि वृत्त्युपरागनिरोधो भवति । बिम्बनिरोधे प्रतिबिम्बस्यापि निरोधादिति पूर्वाचार्या आहुरित्यर्थः । यथा पतञ्जलिः 'योगश्चित्तवृत्तिनिरोधस्तदा द्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्रे'तिसूत्रत्रयेणैतदेवाह (१।२–४) । तथा—

---

१. तथा च स्मर्यते—यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः । दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः' ॥ इति (भागवते ७।७।११)—इत्यधिकः पाठ एतदन्तरम् पठ्यते क्वचित् ।

२. आचार्या इति पदेन कं लक्षयति सूत्रकार इति न ज्ञायते । व्यासभाष्येऽपि 'आचार्यदेशीयो वक्ति' (२।२४), 'इत्याचार्यः' (४।१०) इति च पठ्यते । अत्र बहुवचनान्तोऽयं शब्दः । मन्ये पूर्वाचार्यवाक्यमत्र अविकृतरूपेण स्मृतम् । लयविक्षेप-व्यावृत्ति-विषयकमेकं वचनं मैत्रायण्युपनिषदि दृश्यते—'लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् । यदा यात्यमनीभावं तदा तत् परमं पदम्' ॥ इति (४।७) । एतत्सदृशं 'लये संबोधयेच् चित्तं विक्षिप्तं शमयेत् पुनः' इति वचनं माण्डूक्यकारिकायामपि (३।४४) पठ्यते । द्र० लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावात् (वेदान्तसार, परि० ५) । तन्द्रापदेन क्वचित् लयविक्षेपौ उच्येते । अतएव अतन्द्रितपदव्याख्याने देवबोधेन 'लयविक्षेपरहिते' ति उक्तम् (उद्योगपर्व ५५।२४) ।

३. विक्षेपो जागरितमिति वृत्तिः ।

नित्यः सर्वत्रगो ह्यात्मा बुद्धिसन्निधिमत्तया ।
यथा यथा भवेद् बुद्धिरात्मा तद्वदिहेष्यते ।।

इत्यादिस्मृतयोऽप्येतदाहुरिति । तदेवमसम्प्रज्ञातयोगादेव मोक्षान्तरायध्वंस इति प्रघट्टकार्थः ।।३०।।

ध्यानादौ गुहादिस्थाननियमो नास्तीत्याह—

न स्थाननियमश्चित्तप्रसादात् ।।३१।।

चित्तप्रसादादेव ध्यानादिकम् । अतस्तत्र न गुहादिस्थाननियम इत्यर्थः । शास्त्रे त्वौत्सर्गिकाभिप्रायेणैवारण्यगिरिगुहादिस्थानं योगस्योद्दिष्टमिति[1] । अत एव ब्रह्मसूत्रमपि—यत्रैकाग्रता तत्राविशेषाद् (४।१।११) इति ।।३१।।

समाप्तो मोक्षविचारः; इदानीं पुरुषापरिणामित्वाय जगत्कारणं विचारयति—

प्रकृतेराद्योपादानताऽन्येषां[2] कार्यत्वश्रुतेः[3] ।।३२।।

महदादीनां कार्यत्वश्रवणात् तेषां मूलकारणतया प्रकृतिः सिद्ध्यतीत्यर्थः ।।३२।।

पुरुष एवोपादानं भवतु; तत्राह—

नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ।।३३।।

गुणवत्त्वं सङ्गित्वं चोपादानयोग्यता तयोरभावात्पुरुषस्य नित्यत्वेऽपि नोपादानत्वमित्यर्थः ।।३३।।

ननु 'बह्वीः प्रजाः पुरुषात् सम्प्रसूताः' इत्यादिश्रुतेः पुरुषस्य कारणत्वावगमाद्विवर्तादिवादा आश्रयणीया इत्याशङ्क्याह—

श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ।।३४।।

पुरुषकारणतायां ये ये पक्षाः सम्भावितास्ते सर्वे श्रुतिविरुद्धा इत्यतस्तदभ्युपगन्तॄणां कुतार्किकाद्यधमानामात्मस्वरूपज्ञानं न भवतीत्यर्थः ।

एतेनात्मनि सुखदुःखादिगुणोपादानत्ववादिनोऽपि[4] कुतार्किका एव, तेषामप्यात्मयथार्थज्ञानं नास्तीत्यवगन्तव्यम् । आत्मकारणताश्रुतयश्च शक्तिशक्तिमदभेदे-

---

१. द्र० अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः (न्यायसू० ४।२।४२) ।

२. सूत्रस्यास्याभिप्रायोऽन्यत्राप्युक्तः—'प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम् (६।३) ।

३. आद्योपादनतापदेन गम्यते यत् प्रधानं स्वतःसत्ताकं स्वतन्त्रं च (द्र० ऐ० उ० १।१ शां० भा०, गिरिटीका) ।

४. इमे वादिनः नैयायिका वैशेषिकाश्च । एतेषां मते आत्मा सुखादीनां समवायिकारणम् । द्र० 'सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुणी अनुमीयते' (प्रशस्तपादभाष्य, आत्मप्रक०) ।

नोपासनार्था एव, अजामेकाम् (श्वेताश्व० ४।५) इत्यादि-श्रुतिभिः प्रधानकारणतासिद्धेः। यदि चाकाशस्याभ्राद्यधिष्ठानकारणतावदात्मनः कारणत्वमुच्यते तदा तन्न निराकुर्मः, परिणामस्यैव प्रतिषेधादिति ।।३४।।

स्थावरजङ्गमादिषु पृथिव्यादीनामेव कारणत्वदर्शनात् कथं प्रकृतेः सर्वोपादानत्वम्; तत्राह—

पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ।।३५।।

स्थावरादिषु परम्परया कारणत्वेऽपि तेषु प्रधानस्यानुमानादुपादानत्वमक्षतम्। यथाङ्कुरादिद्वारकत्वेऽपि स्थावरादिषु पार्थिवाद्यणूनामनुगमादुपादानत्वमित्यर्थः ।।३५।।

अणुन्यायेन प्रकृतेर्व्यापकत्वे प्रमाणमाह—

सर्वत्र कार्यदर्शनाद्विभुत्वम् ।।३६।।

अव्यवस्थया सर्वत्र विकारदर्शनात् प्रधानस्य विभुत्वम्, यथाऽणोर्घटादिव्यापित्वमित्यर्थः। एतच्च प्रागेव व्याख्यातम् ।।३६।।

ननु परिच्छिन्नत्वेऽपि यत्र कार्यमुत्पद्यते तत्र गच्छतीति वक्तव्यम्; तत्राह—

गतियोगेऽप्याद्यकारणताहानिरणुवत् ।।३७।।

गतिस्वीकारेऽपि परिच्छिन्नतया मूलकारणत्वाभावः पार्थिवाद्यणुदृष्टान्तेनेत्यर्थः।

अथवेत्थं व्याख्येयम्—ननु त्रिगुणात्मक-प्रधानस्यान्योऽन्यसंयोगार्थं श्रुतिस्मृतिषु क्रिया क्षोभाख्या श्रूयते, क्रियावत्वाच्च तन्त्वादिदृष्टान्तेन मूलकारणत्वाभाव इत्याशङ्क्य परिहरति—गतियोगेऽप्याद्यकारणताहानिरणुवत्। गतिः क्रिया तत्सत्त्वेऽपि मूलकारणताया अहानिर्यथा वैशेषिकमते पार्थिवाद्यणूनामित्यर्थः ।।३७।।

ननु पृथिव्यादीनां नवानामेव द्रव्याणां दर्शनात् कथं पृथिवीत्वादिशून्यं प्रधानाख्यं द्रव्यं घटेत ? न च प्रधानं द्रव्यमेव मास्त्विति वाच्यम्, संयोगविभागपरिणामादिभिर्द्रव्यत्वसिद्धेरिति; तत्राह—

---

१. प्रकृतेर्विभुत्वयोगात् (सां० का० ४२)। सर्वदा कार्यकरणेऽपि प्रकृतेः क्षयो न भवतीति विज्ञेयम्, यथोक्तम् 'प्रकृतिः सूयते तद्वदानन्त्यान्नापचीयते' (शान्ति० २१९।३२)। यस्मिन्नर्थेऽत्र विभुत्वशब्दः प्रयुक्तः सोऽर्थो न्यायादिषु प्रसिद्ध एव; तुल० शब्दसंयोगविभवाच्च सर्वगतम् (न्यायसू० ४।२।२२); विभवः सार्वत्रिकत्वम् (वृत्ति)। विभवान् महान्....(वै० सू० ७।१।२२); विभवः सर्वमूर्तसंयोगित्वम् (उपस्कार)।

प्रसिद्धाधिक्यं प्रधानस्य न नियमः[१] ॥३८॥

प्रसिद्धनवद्रव्याधिक्यमेव प्रधानस्यातो नवैव द्रव्याणीति न नियम इत्यर्थः । अष्टानामेव कार्यत्वश्रवणं चात्र तर्क इति भावः ॥३८॥

किं सत्त्वादयो गुणा एव प्रकृतिरथवा गुणत्रयरूपद्रव्यत्रयाधारभूता प्रकृतिरिति संशयेऽवधारयति—

सत्त्वादीनामतद्धर्मत्वं[२] तद्रूपत्वात् ॥३९॥

सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति प्रकृतिस्वरूपत्वादित्यर्थः । यद्यपि श्रुति-स्मृतिषूभयमेव श्रूयते[3] तथापि तर्कतः स्वरूपत्वमेवावधार्यते न तु धर्मत्वम् । तथाहि—सत्त्वादित्रयं किं प्रकृतेः कार्यरूपो धर्मोऽथवाकाशस्य वायुवत् संयोगमात्रेण नित्य एव धर्मः स्यात् ? आद्ये एकस्या एव प्रकृतेर्द्रव्यान्तरसङ्गं विना विचित्रगुण-त्रयोत्पत्त्यसम्भवः, दृष्टविरुद्धकल्पनानौचित्यं च । अन्त्ये नित्येभ्य एव सत्त्वादि-भ्योऽन्योऽन्यसङ्गेन विचित्रसकलकार्योपपत्तौ तदतिरिक्तप्रकृतिकल्पनावैयर्थ्यमिति सत्त्वादीनां प्रकृतिकार्यत्वादिवचनानि चांशतः प्रकाशादिकार्योपहिततयाभिव्यक्त्या-ऽदिकमेव बोधयन्ति यथा पृथिवीतो द्वीपोत्पत्तिरिति[४] ॥३९॥

प्रधानवृत्तेः प्रयोजनमवधारयति[५] निष्प्रयोजनप्रवृत्त्यभ्युपगमे मोक्षानुपपत्तेरिति-

---

१. अप्राकरणिकमिदं सूत्र मनावश्यकं च ।

२. सूत्रमिदं योगवार्त्तिके (२।१८) सांख्यसारे (१।३ परि०) च उद्धृतम् ।

३. द्र० सत्त्वं रजस्तमश्चेति गुणाः प्रकृतिसंभवाः (गीता १४।५) । प्रकृतितत्त्वं गुणतत्त्वं च पृथगिति शैवागमिनः (तन्त्रसार ८।८५) ।

४. 'नन्वेवमष्टाविंशतितत्त्वप्रतिपादकशास्त्रविरोध इति चेन्न, तत्र प्रकृतिधर्माणां सुखादीनां वैशेषिकगुणानां पृथक्तत्त्वाभ्युपगमेन तत्त्वानामष्टाविंशतिसंख्योप-पत्तेः । वस्तुवस्तु इदं सूत्रमित्थं व्याख्येयम्—सत्त्वादीनामतद्धर्मत्वं प्रकृतिकार्य-मात्रत्वाऽभावः; तद्रूपत्वात् प्रकृतेरपि सत्त्वादिरूपत्वात्—सत्त्वं रजस्तम इति एषैव प्रकृतिः स्मृता इत्यादिस्मृतिभ्य इति । तथा च वैशेषिकाणां पृथिव्या-दिष्विवास्माकमपि कार्यकारणोभयरूपतया सत्त्वादिषु प्रकृतिकार्यत्वादिवाक्या-नामविरोधः । तत्र साम्यावस्थं सत्त्व मंशुतुल्यं वैषम्यावस्थस्य तन्तुतुल्यस्य महत्तत्त्वादिकारणसत्त्वस्य कारणम् एवं रजस्तमसी अपि' इत्यधिकः पाठोऽत्र दृश्यते क्वचित् ।

५. प्रधानप्रवृत्तेः प्रयोजनमुपसंहरति—इति पातनिकावाक्यं क्वचित् पठ्यते ।

अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥४०॥

तृतीयाध्यायस्थे प्रधानसृष्टिः परार्थेत्यादिसूत्रे (३।५८) व्याख्यातमिदम् ॥४०॥

विचित्रसृष्टौ निमित्तकारणमाह—

कर्मवैचित्र्यात् सृष्टिवैचित्र्यम्[1] ॥४१॥

कर्म धर्माधर्मौ। सुगममन्यत् ॥४१॥

ननु भवतु प्रधानात् सृष्टिः प्रलयस्तु कस्मात्, न ह्येकस्मात् कारणाद्विरुद्धकार्यद्वयं घटते; तत्राह—

[2]साम्यवैषम्याभ्यां कार्यद्वयम्[3] ॥४२॥

सत्त्वादिगुणत्रयम् प्रधानम्, तेषां च वैषम्यं न्यूनातिरिक्तभावेन संहननं तदभावः साम्यं ताभ्यां हेतुभ्यामेकस्मादेव सृष्टिप्रलयरूपं विरुद्धकार्यद्वयं भवतीत्यर्थः। स्थितिस्तु सृष्टिमध्ये प्रविष्टेत्याशयेन तत्कारणत्वं प्रधानस्य न पृथग्विचारितम् ॥४२॥

ननु प्रधानस्य सृष्टिस्वाभाव्याज् ज्ञानोत्तरमपि संसारः स्यात्; तत्राह—

विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत्[4] ॥४३॥

विमुक्ततया पुरुषसाक्षात्कारहेतोः प्रधानस्य तत्पुरुषार्थं पुनः सृष्टिर्न भवति कृतार्थत्वात्, लोकवत्। यथा लोका अमात्यदयो राज्ञोऽर्थं सम्पाद्य कृतार्थाः सन्तो

१. कर्मवैचित्र्यात् प्रधानचेष्टा....(३।५१) इति सूत्रेऽप्ययमर्थ उक्त एव।

२. तुल० 'प्रधानं स्थित्यैव वर्तमानं....उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते' (व्यासभा० २।२३ धृतं पूर्वाचार्यवाक्यम्); 'सांख्याभिमतविकृतं प्रधानतत्त्वं सर्वविकारग्रन्थि बीजावस्थभिन्नम् अनुप्रस्थसृष्टमेव महदादिविकाररूपै परमाथतः। तद्धि महदादिविकारशक्तियुक्तं गुणसाम्यावस्थात्मकं गुणवैषम्यविमर्दवशोपजायमान-विकारनानात्वाद् विलक्षणमेव (वाक्यपृ० का० ३ द्रव्य, १०)।

३. गुणसाम्यावस्थारूपस्य प्रधानस्य वैषम्यभावो न भवितुमर्हति—इति केचन प्रतिपादयन्ति; द्र० उदयनाहृत्रा १६।४१-४७; टीका च; शारीरकभाष्यम् २।२।२-४। अयुक्तमिदं मतमिति ग्रन्थान्तरे प्रतिपादयिष्यते।

४. पुनरुक्तमिदं सूत्रम्। द्र० नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात्, (३।६९) इति; विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके (३।६३) इति च।

न पुनः राजार्थं प्रवर्त्तन्ते तथैव प्रधानमित्यर्थः। विमुक्तमोक्षार्थं हि प्रधानप्रवृत्तिरित्युक्तम् (२।१)। स च ज्ञानान्निष्पन्न इति भावः ॥४३॥

ननु प्रधानस्य सृष्टयुपरमो नास्ति, अज्ञानां संसारदर्शनात्। तथा च प्रधानसृष्टया मुक्तस्यापि पुनर्बन्धः स्यात्; तत्राह—

नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात्[१] ॥४४॥

कार्यकारणसङ्घातादिसृष्टयान्यान् प्रति प्रधानस्योपसर्पणेऽपि न मुक्तस्योपभोगो भवति, निमित्ताभावात्। उपभोगे निमित्तानां स्वोपाधिसंयोगविशेषतत्कारणाविवेकादीनामभावादित्यर्थः। इदमेव हि मुक्तं प्रति प्रधानसृष्टयुपरमो यत् तद्भोगहेतोः स्वोपाधिपरिणामविशेषस्य जन्माख्यस्यानुत्पादनमिति ॥४४॥

नन्वियं व्यवस्था तदा घटेत यदि पुरुषबहुत्वं स्यात्, तदेव त्वात्माद्वैतश्रुतिबाधितमित्याशङ्क्याह—

पुरुषबहुत्वं[२] व्यवस्थातः[३] ॥४५॥

'ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' (श्वेताश्व० ३।१०) इत्यादिश्रुत्युक्त-बन्धमोक्षव्यवस्थात एव पुरुषबहुत्वं सिद्धयतीत्यर्थः ॥४५॥

ननूपाधिभेदाद् बन्धमोक्षव्यवस्था स्यात्; तत्राह—

उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम्[४] ॥४६॥

उपाधिश्चेत् स्वीक्रियते तर्ह्युपाधिसिद्धयैव पुनरद्वैतभङ्ग इत्यर्थः। वस्तुतस्तूपाधिभेदेऽपि व्यवस्था न सम्भवतीति प्रथमाध्याय (१४२-१५२ सू०) एव प्रपञ्चितम् ॥४६॥

ननूपाधयोऽप्याविद्यका इति न तैरद्वैतभङ्ग इत्याशङ्कायामाह—

द्वाभ्यामपि[५] प्रमाणविरोधः ॥४७॥

---

१. तुल० अन्यसृष्टयुपरागेऽपि न विरज्यते''''(३।६६)।

२. पुनरुक्तमिदम्; द्र० जन्मादिव्यवस्थातः पुरुषबहुत्वम् इति (१।१४९)।

३. द्र० 'व्यवस्थानुपपत्त्या च प्रतिशरीरमात्मभेदः सिध्यति इत्याशङ्क्याह तथाचेति' (गिरिटीका); 'अन्यथा हि स्वदेहपरिच्छिन्न एव प्रत्यगात्मा सांख्यादिभिरिव दृष्टः स्यात्, तथा च''''(माण्डूक्यभाष्य, पृ० १७)।

४. द्र० व्यवस्था तु औपाधिकभेदमादाय सुस्था भविष्यति (एकपुरुषवादे स्वीकृते सति) इत्याह गिरिः (माण्डूक्यकारिकाटीका, पृ० १७)।

५. द्वाभ्याम् = सत्यासत्याभ्याम् (वृत्तिः), उपाधिविषयकमिदं सूत्रं वृत्तिमते। द्वीतिशब्देन कौ द्वौ पदार्थौ लक्ष्येते—इति न विज्ञायते। अस्पष्टार्थमिदं सूत्रम्।

पुरुषोऽविद्येति द्वाभ्यामप्यङ्गीकृताभ्यामद्वैतप्रमाणस्य श्रुतेर्विरोधस्तदवस्थ एवेत्यर्थः ॥४७॥

अपरमपि दूषणद्वयमाह—

द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात्[1] ॥४८॥

द्वाभ्यामप्यङ्गीकृताभ्यां हेतुभ्यां पूर्वं पूर्वपक्षो भवतां न घटते । अस्माभिरपि प्रकृतिः पुरुषश्चेति द्वयोरेवाङ्गीकारात् । विकारस्यानित्यतया वाचारम्भणमात्रताया [2]अस्माभिरपीष्टत्वात् । ननु पुरुषनानात्वस्वीकारात् प्रकृतेर्नित्यत्वस्वीकाराच्चास्त्येवास्माद्विरोध इत्याशङ्क्य दूषणान्तरमाह—उत्तरं चेत्यादिना । अद्वैतवादिनामुत्तरं सिद्धान्तश्च न घटते, आत्मसाधकप्रमाणस्याभावात् । तदङ्गीकारे च तेनैवाद्वैतहानिरिति जितं नैरात्म्यवादिभिरित्यर्थः[3] ॥४८॥

ननु स्वप्रकाशत आत्मा सेत्स्यति; तत्राह—

प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः[4] ॥४९॥

चैतन्यरूपप्रकाशतश्चैतन्यसिद्धौ कर्मकर्तृविरोध इत्यर्थः । प्रकाश्यप्रकाशक-

---

१. आत्मबहुत्वाभ्युपगमेऽपि नाद्वैतश्रुतेर्बाधः, तस्याः सामान्यपरत्वात् प्रशंसापरत्वाद् वा, अस्ति च पुरुषाणां बहुत्वमुपाधेश्च सत्यत्वम्, अतो द्वैतवाद एव श्रौतः—इति सूत्रतात्पर्यं वृत्तिमते । भाष्यदर्शितोऽर्थोऽपि क्लिष्ट एव । अस्पष्टार्थमिदं सूत्रम् ।

२. द्र० छान्दोग्यवाक्यम्—वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् (६।४।१) ।

३. द्र० 'यदि तावद् अद्वैतसिद्धौ प्रमाणमस्ति तर्हि तदेव द्वितीयमिति नाद्वैतम् । अथ नास्ति प्रमाणं तथापि नतरामद्वैतमप्रामाणिकायाः सिद्धेरभावात्' (न्यायमञ्जरी, आ० ९ ) ।

४. आत्मनः स्वज्ञेयत्वे कर्मकर्तृविरोधो भवतीति पञ्चदश्यां प्रतिपादितम् (३।१७-१८ टीका); द्र० स्वेनैव स्वस्य ग्रहणे कर्मकर्तृविरोधात् (सिद्धान्तबिन्दु, अनु० ७९); प्रकाशस्तत्सिद्धिर्भवतीति या युक्तिः बौद्धैरपि प्रयुज्यते, सा च नैयायिकैः खण्डिता (द्र० न्यायसू० ४।२।३७ व्याख्यानानि); 'नन्वस्तु तर्हि भाट्टमतम्, आत्मा ज्ञानकर्म, प्रत्यक्षत्वाद् घटवत्; न च कर्मकर्तृत्वविरोधः (वि० प्र० संग्रह, पृ० ५४); उक्तं च देवीगीतायाम्—'स्वप्रकाशं च चैतन्यं न परेण प्रकाशितम् । कर्मकर्तृविरोधः स्यात्'''(२।१२-१३) । यदि स्वप्रकाशस्य 'स्वस्य स्वयमेव प्रकाशः' इतिलक्षणमुच्यते तर्हि कर्मकर्तृभावविरोधः स्यादिति प्रत्यक्तत्त्वप्रदीपिकायां दर्शितम् (परि० १) ।

सम्बन्धे हि प्रकाशनमालोकादिषु दृष्टं स्वस्य साक्षात् स्वस्मिन् सम्बन्धश्च विरुद्ध इति।

अस्मन्मते तु बुद्धिवृत्त्याख्यप्रमाणाङ्गीकारात् तद्द्वारा प्रतिबिम्बरूपस्य स्वस्य बिम्बरूपे स्वस्मिन् सम्बन्धो घटते। यथा सूर्ये जलद्वारा प्रतिबिम्बरूपस्वसम्बन्ध इति भावः। आत्मनः स्वप्रकाशत्वश्रुति ( द्र० कठ० २।२।१५ ) स्त्वनन्योपाधिक-प्रकाशादिपरा बोध्या ॥४९॥

ननु नास्ति कर्मकर्तृविरोधः स्वनिष्ठप्रकाशधर्मद्वारा स्वस्य स्वसम्बन्धसम्भ-वात्। यथा वैशेषिकाणां स्वनिष्ठज्ञानद्वारा स्वस्य स्वयं विषय इति; तत्राह—

जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः[1] ॥५०॥

चेतने प्रकाशरूपधर्मः सूर्यादिष्विव नास्ति किन्तु चित्स्वरूप एव पदार्थो जडं प्रकाशयति। यतो जडव्यावृत्तिमात्रेण चिदित्युच्यते, न तु जडविलक्षण-धर्मवत्तयेत्यर्थः। अत एव निर्धर्मतया स एष नेति नेतीत्येव (बृहदा० ३।९।२९) श्रुत्योपदिश्यते[2] न तु विधिमुखतयेति। तथा च स्मृतिरपि—'इदं तदिति निर्देष्टुं गुरुणापि न शक्यते' इति।

जडव्यावृत्ताविति पाठेऽपि हेतौ सप्तम्यामयमेवार्थः। अस्मिंश्च सूत्रे जडमेव प्रकाशयति चिद्रूपो नत्वात्मानमिति नार्थः, तथा सति हि तस्याज्ञेयत्वेन साधका-भावरूपं बाधकं परेषूपन्यासानर्हम्, स्वस्यापि तुल्यन्यायत्वादिति ॥५०॥

नन्वेवं प्रमाणाद्यनुरोधेन द्वैतसिद्धावद्वैतश्रुतेः का गतिस्तत्राह—

न श्रुतिविरोधो रागिणां वैराग्याय [3]तत्सिद्धेः ॥५१॥

अद्वैतश्रुतिविरोधस्तु नास्ति रागिणां पुरुषातिरिक्ते वैराग्यायैव श्रुतिभिरद्वैत-साधनात्। पुरुषज्ञाने इव द्वैताभावज्ञाने स्वतन्त्रफलान्तराश्रवणत्। तच्च वैराग्यं

---

१. 'निरंशस्योभयात्मत्वं न कथंचिद् घटिष्यते। तेन चिद्रूप एवात्मेत्याहुः सांख्या विवेकिनः'॥ (पञ्चदशी ६।९८); द्र० सर्वजडस्य तु साधकत्वेन ( = अवभास-कत्वेन—टीका) चिद्रूपः (पञ्चदशी ८।५७)।

२. अथात आदेशो नेति नेति इति (बृहदारण्यक २।३।१–६), स एष नेति नेतीति माण्डूक्यकारिकावाक्यम् (३।२६) द्र०।

३. कस्मिन् मते श्रुतिविरोधाभाव उक्तोऽत्र—इति न विज्ञायते। भिक्षुचिन्तितं मतं काल्पनिकमेव। वृत्तिव्याख्याने सूत्रस्यास्य पूर्वसूत्रीयमतसंबद्धता दर्शिता (आत्मनः स्वप्रकाशत्वप्रतिपादकस्य श्रुतिवचनस्य सार्थक्यं कथं भवति —इति अत्र उपपादितम्)।

सदद्वैतेनैवोपपद्यते, सत्त्वं च कूटस्थत्वमित्यर्थः। अत एव श्रुतिरपि सदद्वैतमेव छान्दोग्ये (६।२।१) प्रतिपादितवतीति भावः ॥५१॥

न केवलमुक्तयुक्तचैवाद्वैतवादिनो हेयाः, अपितु जगदसत्यताग्राहकप्रमाणाभावेनापीत्याह—

[1]जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात्[2] ॥५२॥

निद्रादिदोषदुष्टान्तःकरणादिजन्यत्वेन स्वाप्नविषयशङ्खपीतिमादीनामसत्यत्वं लोके दृष्टं तच्च महदादिप्रपञ्चे नास्ति; तत्कारणस्य प्रकृतेर्हिरण्यगर्भबुद्धेश्चादुष्टत्वात्, 'यथापूर्वमकल्पयदि'त्यादिश्रवणात् (ऋग्वेद १०।१९०।२)। ननु 'नेह नानास्ति किञ्चने'त्यादिश्रुत्या (बृहदा० ४।४।१९) बाधितत्वेनाविद्यादिनामा कञ्चनानादिर्दोषः कल्पनीयस्तत्राह—बाधकाभावादिति। अयं भावः—'नेह नानास्ति किञ्चने'त्यादि श्रुतयो याः परैः प्रपञ्चबाधकतयाभिप्रेयन्ते ताः

---

१. जगत्स्वरूपविषयकं सांख्यमतं हेलाराजो दर्शितवात्—सांख्ये बुद्धितत्त्वं महच्छब्दवाच्यमाद्यं जगत्कारणं निर्दिष्टमित्यतोऽनन्तरस्य विकारग्रामस्य कारणरूपानुगमात् सत्तारूपत्वमविरुद्धमिति सत्तारूपं सर्वं जगदाख्यातं भवतीति सत्ताद्वैतवादः सांख्यनयेन उपबृंहितः (जातिसमुद्देश ३४ श्लोकटीका)।

२. अस्य सूत्रस्य प्रकरणसंगतिश्चिन्त्या। सांख्यदृष्टचा सर्वं वस्तु प्रतिक्षणं परिणामि, गुणवृत्तस्य चलत्वात्। परिणममानमपि वस्तु येन केनापि रूपेण विद्यत एव; व्यक्तमव्यक्तं भवति, स्थूलं च सूक्ष्मं भवति; न पुनः कस्यापि वस्तुतोऽभावो भवतीति। अनयैव रीत्या जगतः सत्यत्वं यदि उच्यते तर्हि तत् साधु। येन रूपेण यद् वस्तु ज्ञायते तद् रूपं तु चित्तेन्द्रियप्रकृत्यनुसारि—इति न विस्मर्तव्यम्। वस्तुतः ज्ञायमानं रूपं न पारमार्थिकमिति सांख्यीया दृष्टिः; अव्यक्तमेव परमार्थतः सत्। प्रपञ्चस्य पारमार्थिकसत्यतां सांख्या अभ्युपगच्छन्ति—इति केषांचिन्मतमसांख्यीयमेव। द्र० सांख्यैः सत्यस्यापि देहेन्द्रियादिप्रपञ्चस्य आत्मनि न संसर्ग इत्युच्यते' इति (लघुचन्द्रिकायाः विट्ठलेशोपाध्यायी, पृ० २२७)]। उक्तं च 'अतश्च सर्वं जडवस्तु परमार्थतः सर्वदैव असदुत्यते' इति (सांख्यसार, पूर्व० अ० ३)। आह च सांख्याचार्यो देवलः—'सर्वमिदमसदनित्यमिति ज्ञात्वा स्वयमेव शान्तिमधिगच्छति' इति (द्र० मोक्षकाण्ड, पृ० २१६)। दृश्यमानस्य तुच्छता षष्टितन्त्रग्रन्थे प्रतिपादितेति हरिटीका—वृषभदेवटीकाभ्यां गम्यते (द्र० वाक्यप० १।८)।

प्रकरणानुसारेण विभागादिप्रतिषेधिका एव, न तु प्रपञ्चात्यन्ततुच्छतापराः; स्वस्यापि बाधापत्त्या स्वार्थासाधकत्वप्रसङ्गात्। न हि स्वप्नकालीनशब्दस्य बाधे तज्ज्ञापितोऽप्यर्थः पुनर्न सन्दिह्यत इति। तस्मादात्माविघातकतया श्रुतयो न प्रपञ्चस्यात्यन्तबाधपरा इति।

तत्र 'नेह नानास्ति किञ्चने'त्यादिश्रुतेर्ब्रह्मविभक्तं किमपि नास्तीत्यर्थः। 'सर्वं समाप्नोषि ततोऽसि सर्वः (गीता ११।४०) इत्यादिस्मृत्यैकवाक्यत्वात्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि[1]'त्यादिश्रुतेस्तु (छान्दोग्य० ६।१।४) नित्यतारूपपारमार्थिकसत्ताविरहोऽर्थः, अन्यथा मृत्तिकादृष्टान्तासिद्धेः; न हि लोके मृत्तिकाविकाराणामत्यन्ततुच्छत्वं सिद्धं येन दृष्टान्तता स्यादिति।

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता[2]॥ (माण्डूक्यकारिका २।३२)

इत्यादिश्रुतेस्त्वात्मातिरिक्तस्य कुटस्थनित्यतारूपातिपरमार्थसत्ताविरहोऽर्थः। किञ्चात्मनो निरोधाद्यभावोऽर्थः। अन्यथैतादृशज्ञानस्य मोक्षफलकत्वप्रतिपादनविरोधात्। न हि मोक्षो मिथ्येति प्रतिपाद्य मोक्षस्य फलत्वमप्रमत्तः प्रतिपादयतीति। याश्चात्मैक्यश्रुतयस्तास्तु प्रथमाध्याय (१४९-१५४ सू०) एव व्याख्याताः। ब्रह्ममीमांसाभाष्ये[3] चैता अन्याश्च श्रुतयोऽस्माभिर्व्याख्याता इति दिक्॥५२॥

न केवलं वर्तमानदशायामेव प्रपञ्चः सन्नपितु सदैवेत्याह—

प्रकारान्तरासम्भवात् सदुत्पत्तिः[4] ॥५३॥

पूर्वोक्तयुक्तिभिरसदुत्पादासम्भवात् सूक्ष्मरूपेण सदेवोत्पद्यतेऽभिव्यक्तं भवतीत्यर्थः॥५३॥

---

१. 'मृत्तिकेत्येव सत्यम्' इत्यत्र इतिपदग्रहणात् 'मृत्तिकान्वयो यतो दृश्यते घटादिषु अतो घटादिकार्यपेक्षया तत्कारणभूता मृत्तिका नित्या' इत्येव तात्पर्यं ज्ञेयम्। यदीयमापेक्षिकी नित्यता विवक्षिता न स्यात् तर्हि 'मृत्तिकैव सत्या' इत्येव ब्रूयाच् श्रुतिः—इति केषांचिन्मतम्।

२. अन्यत्राप्युपलभ्यतेऽयं श्लोकः—ब्रह्मबिन्दूपनिषद् १०; अवधूतोपनिषद् ८; आत्मोपनिषद् ३१; त्रिपुरातापन्युपनिषद् ५।१०।

३. विज्ञानामृतभाष्ये प्रथमाध्यायेऽन्तराऽन्तरा।

४. पुनरुक्तमिदम्। द्र० १।११४-१२३ 'यदसज् जायते सद्वा जन्मना यत् प्रकाशते' इति हरिकारिकायां सद्वेत्यादिना सत एव उत्पत्ति रिति प्रतिपादितम्। (वाक्यप० ३।७।४९; सांख्यमतेन सदेव वा जायते—हेलाराज)।

कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्येऽपि व्यवस्थामुपपादयति सूत्राभ्याम्—

अहङ्कारः कर्ता न पुरुषः[1] ॥५४॥

अभिमानवृत्तिकमन्तःकरणमहङ्कारः, स एव कृतिमान्; अभिमानोत्तरमेव प्रायशः प्रवृत्तिदर्शनात्, न तु पुरुषोऽपरिणामित्वादित्यर्थः। पूर्वं च 'धर्मादिकं बुद्धेः' इति (५।२५) यदुक्तं तदेकस्यैवान्तःकरणस्य वृत्तिमात्रभेदाशयेन ॥५४॥

चिदवसाना[2] भुक्ति स्तत्कर्मार्जितत्वात्[3] ॥५५॥

अहङ्कारस्य कर्तृत्वेऽपि भोगश्चित्येव पर्यवसन्नो भवति। अहङ्कारस्य संहतत्वेन परार्थत्वात्। नन्वेवमन्यनिष्ठकर्मणान्यस्य भोगे पुरुषविशेषनियमो न स्यात्, तत्राह—तत्कर्मार्जितत्वादिति। अहङ्कारेणासञ्जितं तस्याश्चितो यत् कर्म तज्जन्यत्वाद्भोगस्येत्यर्थः। तथा च योऽहङ्कारो यं पुरुषमादायाचेतनेऽहं ममेति वृत्ति करोति तस्याहङ्कारस्य कर्म तस्यात्मन उच्यते। तेनैव च कर्मणा तत्रात्मनि भोगोऽर्ज्यत इति नातिप्रसङ्ग इत्याशयः ॥५५॥

ब्रह्मलोकान्तगतिभिर्नास्ति निष्कृतिरिति पूर्वोक्ते कारणं दर्शयति—

चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात् ॥५६॥

निमित्तमविवेककर्मादिकम्। सुगममन्यत् ॥५६॥

ननु तत्तल्लोकवासिजनोपदेशादनावृत्तिः स्यात्; तत्राह—

लोकस्य नोपदेशात् सिद्धिः पूर्ववत्[4] ॥५७॥

यथा पूर्वस्य मनुष्यलोकस्योपदेशमात्रान्न सिद्धिर्ज्ञाननिष्पत्तिरेवं तत्तल्लोकस्थलोकस्योपदेशमात्रात् तद्गतानां ज्ञाननिष्पत्तिर्न नियमेन भवतीत्यर्थः ॥५७॥

---

१. अत्राहंप्रत्ययी कर्ता.... (पञ्चदशी २।१६); रजः प्रधानत्वात् प्रवृत्तिबाहुल्यमहंकारे, अतः अस्मिन्नेव मुख्यं कर्तृत्वम्; द्र० 'अहंकर्तेति चाप्यन्यः.... (शान्ति० ३२०।१०४) इति।

२. द्र० चिदवसानो भोगः (१।१०४)। पुनरुक्तमिदम्।

३. तत्-पदेन न चित् न वा अहंकारो गृह्यते, प्रत्युताहंकारेणासञ्जिता चिद् गृह्यते। वृत्तिमते अहंकार एव गृह्यते। 'अहंकारस्य कर्मणा पुरुषस्योपभोगः स चात्मज्ञानावसानः' इति वृत्तिमतम्।

४. ६।५६ सूत्रे लोकपदेन प्राणिनिवासभूतो लोको गृह्यते। अत्र तु लोकपदेन लोकवासी जीव इति एकं वैषम्यम्। किञ्च अत्र लोकस्य = चन्द्रादिलोकगतस्य जीवस्येत्यर्थः, न तु जीवमात्रस्य इति दर्शनीयम्। पूर्ववत् = पूर्वस्येव। पूर्वस्येति शब्दस्य किं लक्ष्यमिति न विज्ञायते। मनुष्यलोकेति अर्थो भिक्षुणा कथं ज्ञात इति न विज्ञायते। लोकः = प्राणिमात्र इति वृत्तिः।

नन्वेवं ब्रह्मलोकादनावृत्तिरिति श्रुतेः[1] का गतिस्तत्राह—

पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः[2] ॥५८॥

ब्रह्मलोकादिगतानां श्रवणमननादिपरम्परया प्रायशो ज्ञानसिद्धौ सत्यां विमुक्तिश्रवणम्, न तु साक्षाद् गतिमात्रेणेत्यर्थः । प्रायिकत्वादन्यलोकाद्विशेष इति ॥५८॥

परिपूर्णत्वेऽप्यात्मनो गतिश्रुतिमुपपादयति—

गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो व्योमवत् ॥५९॥

व्यापकत्वेऽप्यात्मनो गतिश्रवणानुरोधेन भोगदेशस्य कालवशाल्लाभः सिद्धयति, व्योमवदुपाधियोगेनेत्यर्थः । यथा ह्याकाशस्य पूर्णत्वेऽपि देशविशेषगतिर्घटाद्युपाधियोगाद्व्यवह्रियते तथैवेति । तथा च श्रुतिः (ब्रह्मबिन्दु० १३)—

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ इति ॥५९॥

भोक्तुरधिष्ठानाद्भोगायतननिर्माणमिति यदुक्तम्—(५।११४) तत् प्रपञ्चयति सूत्राभ्याम्—

अनधिष्ठितस्य[3] पूतिभावप्रसङ्गान्न तत्सिद्धिः[4] ॥६०॥

भोक्त्रनधिष्ठितस्य शुक्रादेः पूतिभावप्रसंगान्न पूर्वोक्त–(५।११४) भोगायतनसिद्धिरित्यर्थः ॥६०॥

---

१. द्र० स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते (छान्दोग्य० ८।१५।१) ।

२. श्रवणरूपसाधनस्य पारम्पर्येण मुक्तिसाधकत्वम् इति सूत्रस्य तात्पर्यमिति वृत्तिः । तत्सिद्धौ = कारणत्वसिद्धौ (वृत्तिः); मतस्यास्य स्वारस्यं चिन्त्यम् । भाष्यदर्शितोऽर्थोऽपि काल्पनिक एव । अस्पष्टार्थकमिदं सूत्रम् ।

३. शुक्रशोणिसंन्निपातरूपो गर्भः खलु चेतनेन अधिष्ठित एव भवतीति प्रसिद्धमेव । द्र० क्षेत्रज्ञाः····चेतनावन्तः शाश्वता लोहितरेतसोः सन्निपातेषु अभिव्यज्यन्तेः इति (सुश्रुत, सूत्र १।२२); 'स जीवः सर्वगात्राणि गर्भस्याविश्य भागशः ॥ दधाति चेतसा सद्यः प्राणस्थानेष्ववस्थितः ॥ (अश्वमेध० १८।७-८) 'तं चेतनावस्थितं वायुर्विभजति····(सुश्रुत शारीर ५।३) ।

४. तदिति शब्देन पञ्चमाध्यायगतं भोगायतनं लक्ष्यते इति चित्रम् । देहोत्पत्तिसमकालमेव आत्माधिष्ठानमिति वृत्तिमते सूत्रतात्पर्यम्। (तत्सिद्धिः = आत्माधिष्ठानसिद्धिः) । अप्राकरणिकोऽयमर्थः । भिक्षुमते तच्-शब्देन पञ्चमाध्यायगतस्य भोगायतनस्य ग्रहणम् । अनुवृत्तिरियं क्लिष्टैव । वस्तुतः तदिति शब्देन परामर्शनीयोऽर्थः क इति विचार्यमेव ।

नन्वधिष्ठानं विनैवादृष्टद्वारा भोक्तृभ्यो भोगायतननिर्माणं भवतु; तत्राह—

अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ॥६१॥

शुक्रादौ साक्षादसम्बद्धस्यादृष्टस्य शरीरादिनिर्माणे भोक्तृद्वारत्वासम्भवाद् बीजासम्बद्धानां जलादीनामङ्कुरोत्पत्तौ कर्षकादिद्वारत्ववदित्यर्थः । अतः स्वाश्रय-संयोगसम्बन्धेनैवादृष्टसम्बन्धः शुक्रादिषु वक्तव्यः। तथा च सिद्धमदृष्टवदात्मसंयोग-रूपेणाधिष्ठानस्य भोगोपकरणनिर्माणहेतुत्वमिति भावः ॥६१॥

वैशेषिकादिनयेनादृष्टस्य सम्बन्धघटकतयात्मनोऽधिष्ठातृत्वं स्थापितम्, स्वसिद्धान्ते त्वदृष्टादीनामात्मधर्मत्वाभावात् तद्द्वारा भोक्तुर्हेतुत्वमेव न सम्भ-वतीत्याह--

निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ॥६२॥

भोक्तुर्निर्गुणत्वेनादृष्टासम्भवाच्च नादृष्टद्वारकत्वम् । हि यस्मादेतेऽदृष्टा-दयोऽहङ्कारस्यान्तःकरणसामान्यस्यैव धर्मा इत्यर्थः । तथा चास्मन्मते तद्-द्वारनैर-पेक्ष्येण संयोगमात्रेण साक्षादेव भोक्तुरधिष्ठानं सिद्ध्यतीति भावः ॥६२॥

ननु चेत् पुरुषो व्यापकस्तर्हि—

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ (श्वेताश्व० ५।९)

इति श्रुतिप्रतिपादितं जीवपरिच्छिन्नत्वमनुपपन्नम्, तथेश्वरप्रतिषेधात् पुरु-षाणां चैकरूप्याज्जीवात्मपरमात्मविभागोऽपि शास्त्रीयोऽनुपपन्न इति । तामिमा-माशङ्कां परिहर्तुमाह—

विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्[1] ॥६३॥

---

१. जीवस्वरूपविषये इमानि पूर्वाचार्यवचांस्यत्र द्रष्टव्यानि—'जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता' इति (शारीरक० १।१।६); 'तथाऽन्तः-करणैर्योगाज् जीव इत्युच्यते चितिः' (सांख्यसार, उत्तर ५।२२); साक्षिणः पुरतो भाति लिङ्गं देहेन संयुतम् । चितिच्छायासमावेशाज् जीवः स्याद् व्यावहारिकः ॥ (वाक्यसुधा, १६); परमेव ब्रह्माविकृतमुपाधिसंपर्काज् जीवभावेनावतिष्ठते' (शारीरक० २।३।१८); 'यावदेव चायं [आत्मा] बुद्ध्यु-पाधिसंबद्धस्तावज् जीवस्य जीवत्वं संसारित्वं च' (शारीरक० २।३।३०); मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते (शान्ति० १८०।३१); प्राणसंज्ञको जीवः (मैत्र्यु० प० ६।१९); अन्तःकरणयोगाद्धि जीव इत्युच्यते हि यः । अविद्याकार्यरहितः परमात्मेति गीयते ॥ (बृहन्नारदीय ३६।२८); एक एव महानात्मा सोऽहंकारोऽभिधीयते । स जीवः सोऽन्तरात्मेति गीयते तत्त्व-चिन्तकैः ॥ (कूर्मपु० २।३।१३) ।

जीव बलप्राणधारणयोरिति[1] व्युत्पत्त्या जीवत्वं प्राणित्वम्, तच्चाहङ्कार-विशिष्टपुरुषस्य धर्मो न तु केवलपुरुषस्य । कुतः, अन्वयव्यतिरेकात् । अहङ्कार-वतामेव सामर्थ्यातिशयप्राणधारणयोर्दर्शनात् । तच्छून्यानां च चित्तवृत्तिनिरोधस्यैव दर्शनात्, प्रवृत्तिहेतुरागोत्पादकस्याहङ्कारस्याभावादित्यर्थः । तथा चान्तःकरणो-पाधिकं जीवस्य परिच्छिन्नत्वं परमात्माख्यात् केवलपुरुषाद्भिन्नत्वं चेति भावः ।

अनेन सूत्रेण विशिष्टस्य भोक्तृत्वं वा त्वमहम्प्रत्ययगोचरत्वं वा नोक्तम् । साक्षात्काररूपस्य भोगस्याहङ्कारधर्मत्वाभावात् । त्वमहन्धर्मिपुरस्कारेण विवेकानु-पपत्तेश्च । किन्तु—

यदा त्वभेदविज्ञानं जीवात्मपरमात्मनोः ।
भवेत् तदा मुनिश्रेष्ठाः पाशच्छेदो भविष्यति[2] ।।
आत्मानं द्विविधं प्राहुः परापरविभेदतः ।
परस्तु निर्गुणः प्रोक्त अहङ्कारयुतोऽपरः[3] ।।

इत्यादिवाक्यशतोक्तो जीवात्मपरमात्मविभाग एव प्रदर्शितः । तत्र जीव-तायामहङ्कार उपलक्षणमेवेति ।।६३।।

इदानीं महदहङ्कारयोः कार्यभेदं प्रतिपिपादयिषुरादावहङ्कारकार्यमाह—

अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना [4]प्रमाणाभावात् ।।६४।।

अहङ्काररूपो यः कर्ता तदधीनैव कार्यसिद्धिः सृष्टिसंहारनिष्पत्तिर्भवति, तादृशबलस्याहङ्कारकार्यत्वात्, अनहङ्कृतेषु तत्सामर्थ्यादर्शनात्; न तु वैशेषिका-द्युक्तानहङ्कृतपरमेश्वराधीना, अनहङ्कृतस्रष्टृत्वे नित्येश्वरे च प्रमाणाभावा-दित्यर्थः । अहं बहु स्यां प्रजायेयेति (द्र० तै० उप० २।६।१; छान्दोग्य० ६।२।३) ह्यहङ्कारपूर्विकैव सृष्टिः श्रूयते तत्राहंशब्दस्यानुकरणमात्रत्वे प्रमाणाभाव इति । अनेन सूत्रेणाहङ्कारोपाधिकं ब्रह्मरुद्रयोः सृष्टिसंहारकर्तृत्वं श्रुतिस्मृतिसिद्धमपि प्रतिपादितम् ।।६४।।

---

१. जीव प्राणधारणे (भ्वादि० ३७५) । कस्माद् धातुपाठाद् वाक्यमिदं संगृही-तमिति न ज्ञायते ।

२. बृ० नार० ३१।६१ ।

३. बृ० नार० ३१।५७क, ५८क ।

४. कार्यम् सृष्टिसंहारनिष्पत्तिरिति भिक्षुः । अर्थोऽयमप्राकरणिकः । किं च ईश्वराधीना कार्यसिद्धि र्नभवति—इति 'नेश्वराधिष्ठिते फलनिष्पत्तिः' (५।२) इति सूत्रतोऽपि ध्वन्यते । जगन्निर्माणरूप-कार्यसिद्धिर्न जीवरूपेश्वराधीना, अपितु अहंकाररूपकर्त्रधीना—इति वृत्त्युक्तोऽर्थोऽपि काल्पनिकः । जीवकृतानां कर्मणां हेतुः (=प्रेरकः) जीवगताहंकार एव, न तु प्रजापतिरीश्वरः, न वा अनादिमुक्त ईश्वरः—इत्येव सूत्रतात्पर्यं प्रतीयते ।

ननु भवत्वहङ्कारोऽन्येषां कर्ताऽहङ्कारस्य तु कः कर्ता; तत्राह—

अदृष्टोद्भूतिवत् [1]समानत्वम् ॥६५॥

यथा सर्गादिषु प्रकृतिक्षोभककर्माभिव्यक्तिः कालविशेषमात्राद्भवति तद्बोधक-कर्मान्तरस्य कल्पनेऽनवस्थाप्रसङ्गात्, तथैवाहङ्कारः कालमात्रनिमित्तादेव जायते न तु तस्यापि कर्त्रन्तरमस्तीति समानत्वमावयोरित्यर्थः ॥६५॥

[2]महतोऽन्यत् ॥६६॥

अहङ्कारकार्यात् सृष्टयादेर्यदन्यत् पालनादिकं तन्महत्तत्त्वाद्भवति, विशुद्ध-सत्त्वतयाऽभिमानरागाद्यभावेन परानुग्रहमात्रप्रयोजनकत्वादित्यर्थः। अनेन च सूत्रेण महत्तत्त्वोपाधिकं विष्णोः पालकत्वमुपपादितम्। महत्तत्त्वोपाधिकत्वात् तु विष्णुर्महान् परमेश्वरो ब्रह्मेति च गीयते। तदुक्तम्—यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् इति (भागवत ३।६।२१)।

अत्र शास्त्रे कारणब्रह्म तु पुरुषसामान्यं निर्गुणमेवेष्यते, ईश्वरानभ्युपगमात्। तत्र च कारणशब्दः स्वशं तत्प्रकृत्युपाधिको वा निमित्तकारणतापरो वा पुरुषार्थस्य प्रकृतिप्रवर्तकत्वादिति मन्तव्यम् ॥६६॥

अविवेकनिमित्तकः प्रकृतिपुरुषयोर्भोग्यभोक्तृभाव इति प्रागुक्तम् (१।५५)। तत्राविवेक एव किंनिमित्तक इत्याकाङ्क्षायामविवेकधाराकल्पनेऽनवस्थापत्तिरित्या-शङ्कायाः प्रामाणिकत्वेन परिहारः सर्ववादिसाधारण इत्याह—

कर्मनिमित्तः प्रकृतेः स्व-स्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ॥६७॥

येषां साङ्ख्यैकदेशिनां प्रकृतेः पुरुषस्य च स्वस्वामिभावो भोग्यभोक्तृभावः कर्मनिमित्तकस्तन्मतेऽपि स प्रवाहरूपेणानादिरेव, बीजाङ्कुरवत् प्रामाणिकत्वा-दित्यर्थः। आकस्मिकत्वे मुक्तस्यापि पुनर्भोगापत्तेरिति ॥६७॥

अविवेकनिमित्तकत्वमतेऽप्येतदनादित्वं समानमित्याह—

---

१. यथा अदृष्टस्याभिव्यक्तिरकर्तृका तथाऽहंकारोऽपि अकर्तृक इत्यर्थ इति वृत्तिः। सांख्यनये अहंकारो व्यक्तपदार्थः, अतश्च हेतुमान्, हेतुश्च पुरुष एवेत्यतः वृत्तिमतमसंगतम्, हेतोः कर्तृरूपाभ्युपगमात् (हेतुरूपः पुरुषोऽपरि-णामीति ज्ञेयम्)। भिक्षुदर्शितोऽर्थोऽपि न स्वारसिकः प्रतिभाति। अस्पष्टार्थ-कमिदं सूत्रम्।

२. भाष्यदर्शितोऽर्थः काल्पनिक एव। महतः अन्यत् = सकर्तृकत्वभिन्नं प्रकृत्या-धीनोत्पत्तिकत्वम् इत्यर्थो वृत्तिमते। सर्वथा काल्पनिकोऽयमर्थः। अस्पष्टार्थक-मिदं सूत्रम्।

अविवेकनिमित्तो वा [1]पञ्चशिखः ।।६७।।

अविवेकनिमित्तो वा स्वस्वामिभाव इति पञ्चशिख आह । तन्मतेऽप्यनादिरित्यर्थः । एतदेव स्वमतं प्रागुक्तत्वात् । अविवेकश्च प्रलयेऽपि कर्मवदेवास्ति वासनारूपेणेति । विवेकप्रागभावोऽविवेक इति मते तु बीजाङ्कुरवदनादित्वं न घटते । अखण्डप्रागभावस्यैवाखिलभोगहेतुत्वादिति ।।६८।।

लिङ्गशरीरनिमित्तक इति [2]सनन्दनाचार्यः ।।६९।।

सनन्दनाचार्यस्तु लिङ्गशरीरनिमित्तकः प्रकृतिपुरुषयोर्भोग्यभोक्तृभाव इत्याह, लिङ्गशरीरद्वारैव भोगादिति । तन्मतेऽप्यनादिः स इत्यर्थः । यद्यपि प्रलये लिङ्गशरीरं नास्ति तथापि तत्कारणमविवेककर्मादिकं पूर्वसर्गीयलिङ्गशरीरजन्यमस्ति तद्द्वारा बीजाङ्कुरतुल्यत्वं स्वस्वामिभावलिङ्गशरीरयोरित्याशयः ।।६९।।

शास्त्रावाक्यार्थमुपसंहरति—

यद्वा तद्वा तदुच्छित्तिः[3] पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ।।७०।।

---

१. पञ्चशिखेनोक्तम्—बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्यात्तत्रात्मबुद्धिं मोहेन इति (२।६ व्यासभाष्यौद्धृतं वाक्यम्) । मोहोऽत्र अविवेकः, अविद्या । बुद्धितः पृथग्भूते पुरुषतत्त्वेजीवः आत्मबुद्धिं करोति—त्यस्य वाक्यस्य तात्पर्यम् । इदमेव वाक्यं सांख्यसूत्रेऽस्मिन् लक्षितमिति स्पष्टं प्रतीयते । या पुरुषे आत्मबुद्धिः सैव स्वस्वामिभाव इत्यत्र न संशयलेशोऽपि । अयं स्वस्वामिभाव एव सर्वदुःखमूलमिति विज्ञेयम् । अत्रेदं पञ्चशिखवाक्यं तुलनीयम्—इमं गुणसमाहारमात्मभावेन पश्यतः । असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति ।। इति (शान्ति० २१९।१४) । द्र० तद्योगोऽप्यविवेकात् (१।५५) ।

२. सनन्दनाचार्यस्य पुर्यष्टकविषयकमेकं वाक्यमुद्धृतं कुल्लूकेन—भूतेन्द्रियमनाबुद्धिर्वासनाकर्मवायवः । अविद्या चाष्टकं प्रोक्तं पुर्यष्टमृषिसत्तमैः ।। इति (मनु १।५५ व्याख्याने) । अत इदं संभाव्यते यत् सनन्दनेन लिङ्गशरीरविषये विशिष्टा चर्चा कृता । कोऽयं सनन्दनाचार्य इति न ज्ञायते । पञ्चशिखः (६।६८) इतिवत् सनन्दन इति वक्तव्ये आचार्यपदग्रहणं ज्ञापयति यदयमाचार्योऽर्वाक्कालिक इति । पद्मपादाचार्यस्य नाम सनन्दन आसीदिति प्रसिद्धमेव । किमयमेव सनन्दनाचार्यः ?

३. उच्छेदपरकत्वादेव सांख्यशास्त्रस्य नामान्तरं 'सम्यग्वध' इति; तथाचोक्तं शान्तिपर्वणि पञ्चशिखेन—अत्र सम्यग्वधो नाम त्यागशास्त्रमनुत्तमम् । शृणु यत् तव मोक्षाय भाष्यमाणं भविष्यति ।।२१९।१६।। त्याग एव हि सर्वेषाम्…

कर्मनिमित्तो वाऽविवेकादिनिमित्तो वा भवतु प्रकृतिपुरुषयो र्भोग्य-भोक्तृभावः; सर्वथाप्यनादितया देरुच्छेद्यस्य तस्योच्छेदः परमपुरुषार्थ इत्यर्थः। तदेतदादौ प्रतिज्ञातम्—त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ इति (१।१)।

नन्वत्र सुख-दुःखसाधारणभोगनिवृत्तिः पुरुषार्थ उच्यते, तत्र दुःखमात्रनिवृत्तिरिति कन्थं तत्रोक्तस्यात्रोपसंहार इति चेन्न; शब्दभेदेऽप्यर्थाभेदात्। सुखं हि तावद् दुःखपक्षे निक्षिप्तमिति सुखभोगोऽपि दुःखभोग एव; दुःखभोगोऽपि प्रतिबिम्बरूपेण पुरुषे दुःखसम्बन्ध एव, स्वतो नित्यनिर्दुःखत्वेन च प्रथमसूत्रेऽपि प्रतिबिम्बरूपेणैव दुःखनिवृत्तिर्विवक्षितेत्येक एवार्थ उपक्रमोपसंहारसूत्रयोरिति। बहुलांशस्य द्विरावृत्तिः शास्त्रसमाप्त्यर्था।

शास्त्रमुख्यार्थविस्तारस्तन्त्राख्येऽनुक्तपूरणैः।
षष्ठाध्याये कृतः पश्चाद्वाक्यार्थश्चोपसंहृतः ॥७०॥

तदिदं साङ्ख्यशास्त्रं कपिलमूर्तिर्भगवान् विष्णुरखिललोकहिताय प्रकाशितवान्। यत् तत्र वेदान्तिब्रुवः[1] कश्चिदाह—साङ्ख्यप्रणेता कपिलो न विष्णुः, किन्त्वग्न्यवतारः कपिलान्तरम्—'अग्निः स कपिलो नाम साङ्ख्यशास्त्रप्रवर्त्तकः' (वनपर्व २२०।२१) इति स्मृतेरिति। तल्लोकव्यामोहनमात्रम्—

एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात्।
प्रसङ्ख्यानाय तत्त्वानां सम्मतायात्मदर्शनम् ॥

(भागवत ३।२४।३६) इत्यादिस्मृतिषु विष्ण्ववतारस्य देवहूतिपुत्रस्यैव [2]साङ्ख्योपदेष्टृत्वावगमात्, [3]कपिलद्वयकल्पनागौरवाच्च। तत्र चाग्निशब्दोऽग्र्याख्य-

(१७), तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः(१९)इति। इयमुच्छित्तिर्नात्मोच्छित्तिः, अत एवात्रैवोक्तम्—'उच्छेदनिष्ठा' (६), 'एवं सति क उच्छेदः' इति च (४१)।

१. वेदान्तिब्रुवोऽयं केशवकाश्मीरिभट्टो वेदान्तकौस्तुभप्रभाकर्ता—इति प्रतीयते। उक्तं च प्रभायाम्—"श्रुतिविरुद्धस्मृतिप्रवर्तकस्तु अग्निवंशजो जीवविशेष एव, न कर्दमात्मजः—'कपिलो वासुदेवांशः·······कुतर्कपरिबृंहितम्' इति पाद्मात्; कपिलं परमार्षं च यं प्राहुर्यतयः सदा। अग्निः स कपिलो नाम साख्ययोगप्रवर्तक ॥ इति वनपर्वणि अग्निवंशवर्णने मार्कण्डेयवाक्याच्च" (ब्र० सू० २।१।१)।

२. द्र० कपिलोऽपि महायोगी भगवान् स्वाश्रमे स्थितः। देवहूत्यै परं ज्ञानं सर्वाविद्यानिवर्तकम् ॥ (देवीभाग० ८।३।१७); मातृज्ञानप्रदाता च सिद्धानां च गुरोर्गुरुः (ब्रह्मवै० ४।२२।४७; माता = देवहूतिः);

३. सांख्यवक्तृकपिलद्वयकल्पना अर्वाक्कालिकी। नवीनेषु पुराणांशेषु ईदृशी कल्पना दृश्यते। यथोक्तं—'कपिलो वासुदेवांशः शास्त्रं सांख्यं जगाद ह।

शक्त्यावेशादेव प्रयुक्तः । यथा—'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः' (गीता ११।३२) इति श्रीकृष्णवाक्ये कालशक्त्यावेशादेव कालशब्दः, अन्यथा विश्वरूपप्रदर्शक-कृष्णस्यापि विष्णववतारकृष्णाद्भेदापत्तेरिति दिक् ।

साङ्ख्यकुल्या[1] समापूर्य वेदान्तमथितामृतैः ।
कपिलर्षिर्ज्ञानयज्ञे ऋषीनापाययत्[2] पुरा ॥१॥
तद्वचःश्रद्धया तस्मिन् गुरौ च [3]स्थिरभावतः ।
तत्प्रसादलवेनेदं तच्छास्त्रं विवृतं मया ॥२॥

इति श्रीविज्ञानभिक्षुविरचिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये तन्त्राध्यायः षष्ठः ॥

॥ इति साङ्ख्यप्रवचनभाष्यं समाप्तम् ॥

इति गार्ग्येण रामशंकरभट्टाचार्येण प्रणीताज्योतिष्मतीटीका समाप्ता ।

●

# नष्टटीकायाः संपूर्तिः

तृतीयाध्यायगतानां केषांश्चित् सूत्राणा मस्मत्कृता टीका नष्टा—इत्यावेदितं प्राक् । इह तानि सूत्राण्यधिकृत्य संक्षेपेण टीका विरच्यते ।

(सू० १५) यद्यपि मन आदीनि····इत्युक्तं भाष्ये । अत्रत्या दृष्टिः पञ्चदशी-व्याख्याने (२।१७) स्पष्टीकृता व्याख्याकारैः ।

(सू० १६ ) मतमिदं सांख्यीयमिति शंकराचार्य आह—'इदमेव [लिङ्गम्] आत्मार्थं त्रिगुणं स्वतन्त्रं प्रधानाश्रयं पुरुषार्थेन हेतुना प्रवर्तते इति सांख्याः (शारीरक० २।३।६) ।

(सू० १७) कायस्य पञ्चभूतमयताया उपपत्तिः परिमलटीकायां द्रष्टव्या (३।१।१) । शरीरोपादान-विषये न्यायसूत्रे पुष्कला चर्चा (३।१।२८-३०) दृश्यते । पाञ्चभौतिकशरीरविषय उक्तम्—'गन्धक्लेदपाकव्यूहाकाशदानेभ्यः पाञ्च-भौतिकम्' इति (३।१।३०) ।

(सू० १८) चतुर्भूतमयता देहस्य बहुभिराचार्यैरास्थिता । चत्वारि भूतानि खलु पृथिवी-अप्-तेजो-वायवः । चातुर्भौतिकं शरीरमिति मतं न्यायसूत्रे विवृतम्

---

ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ॥ तथैवासुरये ऽन्यस्मैर्वेदार्थैरुपबृंहितम् । सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह । सांख्यमासुरयेऽन्यस्मै-कुतर्कपरिबृंहितम् ॥ ( लघुभागवतामृतधृतं पद्मपुराणम् ) ।

१. सांख्यकुल्याः (पाठा०) ।
२. अप्याययत् ( पाठा० ) ।
३. स्थिरभाविते ( पाठा० ) ।

(३।१।२९)। भूतानि चत्वार्येवेति बार्हस्पत्याः—भूतचतुष्टयमेव तत्त्वमिति ते संगिरन्ते (द्र० वि० प्र० संग्रह, पृ० २१०)। अत्र हेलाराजीयं वाक्यं द्र०—"तत्त्वमिति चतुर्भूततत्त्ववादिभि श्चार्वाकै र्द्रव्यमुच्यते। पृथिव्यप्तेजोवायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञेति वचनात् (वाक्यप० ३, द्रव्य० १)।

शरीरस्य त्रैभौतिकतायाः, चातुर्भौतिमतायाश्च खण्डनं वैशेषिकसूत्रव्याख्यानेषु द्र० (४।२।२-४)।

(सू० १९) शरीरस्य पार्थिवत्वं बह्वाचार्यसंमतम्। द्र० "देहो नाम पार्थिवो द्रव्यविशेषः····भूतान्तरसहितस्य भूतान्तरस्य न कार्यान्तरारम्भकतेति वदामः" (प्रकरणपञ्चिका, पृ० ३२०)। शरीरस्य एकमेव भूतं समवायिकारणमिति प्रतिपादितं पद्मनाभेन (द्र० सेतु, पृथिवीनिरूपण); 'पार्थिवं गुणान्तरोपलब्धेः' (न्यायसू० ३।१।२७)। वाक्यपदीय (३, द्र० य० १)—गता हेलाराजीयटीकाऽपि द्र०।

(सू० २०) चैतन्यं भूतधर्म इत्यस्ति केषांचिन् मतम्; द्र० चैतन्यं भूतधर्म इति लौकायतिकाः (प्रश्न ६।२ शां० भा०)। भूतचैतन्यवादस्य निरसनं न्यायसूत्रे द्र० (३।२।३७)। चैतन्यं (=ज्ञानं) शरीरस्य न गुण इति मतं विस्तरेण प्रतिपादितम् न्यायसूत्रेषु (३।२।४६-५५)। आह प्रशस्तपादः—'न शरीरस्य चैतन्यं घटादिवत् भूतकार्यत्वात् मृते चासंभवात्' (आत्मनिरूपण प्रक०)।

(सू० १२) यतो हि—हेतुपरमिदं सूत्रमतः पञ्चम्यन्तेन तृतीयान्तेन वानेन सूत्रीयपदेन भवितव्यम्, न प्रथमान्तेन। सूत्रमिदं 'प्रपञ्चमरणाद्यभावतश्च' इत्येव रूपेणादौ पठितमासीत्—इति संभाव्यते। सूत्रोक्ता युक्तिः पञ्चदश्यां विवृता (६।६१)

(सू० २२) मदशक्तियुक्तिर्बहुत्र दृश्यते; द्र० पञ्चदशी ६।६१; तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवद् विज्ञानम् (बृहस्पतिसू०); द्र० शारीरकभाष्य ३।३।५३; मदशक्तिवच् चैतन्य मिति तन्न,····चैतन्यं तु न प्रत्येकं परमाणुषु अभ्युपगम्यते, तस्माच् छरीरादन्यस्य गुणो ज्ञानमिति देहव्यतिरिक्त पुरुषानुमानं द्रष्टव्यम् (प्रकरणपञ्चिका, पृ० ३२६-३२७)। भूतचैतन्यवादः प्रतिपादितो न्यायभाष्ये (इति सिद्धं भूतचैतन्यम् ३।२।३६), खण्डितश्च (३।२।३७)।

(सू० २३) द्र० 'सांख्याः परिव्राजका ब्रुवते—'केवलादेव ज्ञानान्मुक्तिः' (गीता ३।४ भास्करभाष्य); मतमिदं बह्वाचार्य-संमतम्; द्र० 'ज्ञानान्मुक्तिः' (मृगेन्द्रागमवृत्तिः, पृ० २८८); 'अबन्धो ज्ञानकृतः' (निरुक्त); 'ज्ञानादेवामृतत्वम्' (स्वाराज्यसिद्धि) इति।

(सू० २५) ज्ञानकर्मणोः समुच्चयो विकल्पो वा बहुभिराचार्यैरभ्युगतः। तथाहि—समुच्चयो यामुनाचार्येण स्वीकृतः, वेदार्थसंग्रहे रामानुजेन उपबृंहितश्च। न्यायकन्दल्यां श्रीधरोऽपि मतमिदं प्रतिपादयामास। "तत्-प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते (विष्णुपु०); उभाभ्यामेव पक्षाभ्यां····तथैव ज्ञानकर्मभ्यां

प्राप्यते ब्रह्म शाश्वतम् (हारीत ७।१०); अपिच द्र० योगवासिष्ठ (वैराग्य १.७), मिलिते कर्मोपासने मुक्तिसाधनभूते—इति केचित्—"अथ परे भर्तृप्रपञ्च-भास्करप्रभृतयः तच्च [कर्म च], उपास्तिं च मिलितं कर्म च प्राणाद्युपासनं च मिलितं मुक्तौ साधनं संगिरन्ति" (स्वाराज्यसिद्धि १.८ भास्करानन्दकृत टीका)। केचन पुनः समुच्चयविकल्पौ नेच्छन्ति। असंभवोऽयं समुच्चय इति देवीभागवते प्रतिपादितम् (७।३४ अ०)। "अज्ञानस्य निवृत्तिस्तु ज्ञानेनैव न कर्मणा। अविरोधितया कर्म नैवाज्ञानस्य बाधकम्॥ सर्वं कर्म विरोध्येव सदा ज्ञानस्य सर्वदा" (सर्ववेदान्तसिद्धान्तसारसंग्रह)। "तस्माद् गीताशास्त्रे केवलादेव तत्त्वज्ञानान् मोक्षप्राप्तिर्न कर्मसमुच्चितादिति निश्चितोऽर्थः" (गीताभाष्यं शंकराचार्यकृतम्)। समुच्चयदृष्टे विस्तरेण खण्डनम् उपदेशसाहस्र्यां (पद्यभाग १.८-१५) दृश्यते। एतत् सूत्रात् प्राक् कर्मपरको विचारो नास्ति, अतः ज्ञान-कर्मणोः संबन्धस्य कथनमत्र सूत्रे भवति—इति न स्वरसतः प्रतीयते। विपर्यय-प्रानयोः संबन्धमाश्रित्य नैतादृशो विचारः क्रियते दार्शनिकैः।

(सू० २६) स्वप्न-पदार्थस्वरूप विषये द्र० योगवा० स्थितिप्रक० अ० ९; न्यायसू० ४।२।३४; व्यासभा० १।११)।

(सू० २७) सूत्रे इतरेतिपद कथम् उपास्यं लक्षयति—इति न स्फुटं विज्ञायते। आत्यन्तिकपदस्यापि योऽर्थो दर्शितः स सांशयिक एव। वस्तुतोऽस्पष्टार्थकमिदं सूत्रम्।

(सू० २८) भाष्योक्तः सूत्रार्थो न सूत्राक्षरत आञ्जस्येन लभ्यते।

(सू० २९) प्रकृतिवदित्यस्य प्रकृतेरिव सर्वम् ऐश्वर्यमिति योऽर्थः कृतो भिक्षुणा स न कथमपि प्रकरणबलेन सूत्राक्षरबलेन वा लभ्यते।

(सू० ३३) तुल० 'स्थिरं समं सुखं तस्मिन् आसीत ऋज्वङ्ग ओमिति' (भाग० ७।१५।३१), स्थिरं सुखं चासनमाश्रितो यतिः (मार्ग० २।२।१५)।

(सू० ३५) मोक्षसाधनदृशा वर्णधर्मोचितकर्मानुष्ठानापेक्षया आश्रमोचित-कर्मानुष्ठानमेव गरीय इति पूर्वाचार्याः। द्र० 'सांख्येऽपि आश्रमकर्मणः अत्यागात्" (शान्ति० २९०।५ टीका; द्र० पूनाप्रकाशितं संस्क०); एव माश्रमधर्माणां साधनात् साधवः स्मृताः (लिङ्गपु० १।१०।१०); स ह्याश्रमैः विजिज्ञास्यः (याज्ञ० स्मृति ३।१९१); आश्रमकर्माणि विद्यासहकारीणि भवन्ति (शारीरक० ३।४।३५); तस्मात् त्वमपि राजेन्द्र स्वाश्रमं धर्ममाचरन्। श्रद्धया विधिवत् सम्यक् ज्ञानकर्म समाचर॥ (योगियाज्ञ० १।३८)। बृहदा० ४।४।२२ वचनतो विज्ञायते यदाश्रमकर्माणि ब्रह्मजिज्ञासासाधनभूतानीति भामतीकारः (१।१।१)।

(सू० ३६) इमौ द्वावुपायौ शास्त्रान्तरेषु प्रोक्तौ—"वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः' (भागवत १९।६।११), वैराग्याभ्यासयोगतः' (शाण्डिल्योपनिषद् १।७।२६), 'अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते' (गीता); 'चित्तवृत्ति-निरोधेन वैराग्याभ्यासयोगतः (स्कन्द० कुमारिका १०।३३); 'वैराग्याभ्यास-निग्राह्यं तन्मनः शक्र चञ्चलम्' (लक्ष्मीतन्त्र ४३।९७)।

# सांख्यसूत्रों के विज्ञानभिक्षु-भाष्यानुसारी अर्थ

विज्ञानभिक्षु ने सांख्यसूत्रों के जो अर्थ किये हैं, वे यहाँ दिखाये जा रहे हैं। इन सूत्रों के भाष्यानुसारी अर्थ अनेकत्र सांशयिक तथा अस्पष्ट हैं—यह हमारा मत है। संस्कृत-टीका में भिक्षुकृत अर्थों की समीक्षा की गई है, साथ ही वृत्तिकार-अनिरुद्धकृत अर्थों के साथ भिक्षुकृत अर्थों की तुलना भी की गई है।

हम यह कहना आवश्यक समझते हैं कि हम भिक्षुभाष्य को सांख्यसूत्र का कोई परम्परागत व्याख्यान नहीं समझते। कई स्थलों पर हमें भिक्षुकृत व्याख्यान सदोष, असंबद्ध तथा अत्यन्त स्थूल प्रतीत होते हैं। हम स्वतन्त्र ग्रन्थ में इन सूत्रों के विवक्षित अर्थों का अवधारण करने के लिये चेष्टा करेंगे।

## प्रथम अध्याय

१।। दुःख त्रिविध है—आध्यात्मिक (शरीर तथा मन में जात व्याधि आदि), आधिदैविक (अग्नि-वायु आदि देवों के अधीन शीत-उष्ण-वर्षा-भूकम्प-आदि बाह्य जड़ पदार्थों से उत्पन्न) एवं आधिभौतिक (भूत = चेतन प्राणी अर्थात् व्याघ्र, चोर आदि से कृत)। इस त्रिविध दुःख की आत्यन्तिक निवृत्ति (सभी दुःखों का पुनः न होना) ही 'अत्यन्त पुरुषार्थ' (=सर्वोच्च अभीष्ट स्थिति) है। अत्यन्त निवृत्ति के हेतुभूत शास्त्र का आरम्भ इस सूत्र द्वारा किया गया है।

२।। दृष्ट (= लौकिक) उपायों से त्रिविध दुःखों की अत्यन्त निवृत्ति नहीं हो सकती, क्योंकि धनादि लौकिक उपायों से दुःखनिवृत्ति होने पर भी पुनः दुःख की उत्पत्ति होती है।

३।। जिस प्रकार प्रतिदिन क्षुधा की शान्ति के लिये चेष्टा की जाती है, और वह चेष्टा अंशतः सफल भी होती है, उसी प्रकार लौकिक उपायों से अंशतः दुःखनिवृत्ति होने के कारण वे भी पुरुषार्थ-रूप में कथंचित् स्वीकृत होते हैं (इस आंशिक दुःखनिवृत्ति के कारण ही लौकिक उपायों में प्रवृत्ति होती है)।

४।। लौकिक उपायों की प्राप्ति होने पर भी उनसे सभी दुःखों का अत्यन्त नाश नहीं होता; प्रतीकार सभव होने पर भी उनके साथ नित्य संबन्धित दुःखों

की प्राप्ति भी होती है । यही कारण है कि प्रमाणकुशल ( = प्रत्यक्ष-अनुमानआगम से वस्तुतत्त्व को यथावत् जानने की शक्ति जिनमें है, वे) व्यक्तियों की दृष्टि में लौकिक उपाय हेय समझे जाते हैं (आत्यन्तिक दुःखनिवृत्ति की प्राप्ति में) ।

५।। दृष्टसाधन-जन्य फलों की तुलना में मोक्ष का परम उत्कर्ष है । इस विषय में श्रुति प्रमाण है । (मोक्षरूप परम पुरुषार्थ में कोई सातिशय उत्कर्ष नहीं है; वह सदा एकरूप, अपरिणामी एवं शाश्वतिक है) ।

६।। अत्यन्तदुःखनिवृत्तिरूप मोक्ष के साधन के रूप में दृष्ट उपाय (धनादि-लाभ आदि) और अदृष्ट उपाय (वैदिक कर्म) समान हैं । (वैदिक उपाय पाप-सयुक्त है तथा उसका फल भी विनाशी एवं सातिशय है) ।

७।। बद्ध आत्मा (=जीव) दुःख से मुक्ति पाने के लिये साधन करता है । अतः यह प्रश्न उठता है कि आत्मा की यह बद्धावस्था स्वाभाविक ( = स्वीय स्वभाव से सिद्ध) है या किसी आगन्तुक कारण से हुई है । उत्तर यह है कि आत्मा स्वभावतः बद्ध नहीं है, क्योंकि यदि आत्मा स्वभाव से ही बद्ध होता तो मोक्ष-साधन का जो उपदेश शिष्टपरम्परा में चिरकाल से चला आ रहा है, वह व्यर्थ होता ( बन्ध = दुःखयोग) ।

८।। जो जिसका स्वभाव होता है, वह तत्-द्रव्यसत्ताकाल पर्यन्त रहता है; अतः बन्धन के स्वाभाविक होने पर मोक्षसाधन का अनुष्ठान करना व्यर्थ हो जाएगा (आत्मा की नित्यता के हेतु आत्मस्वभाव-जन्य बन्धन का अत्यन्त नाश न हो सकने के कारण) । ऐसी स्थिति में साधनानुष्ठान का उपदेश देने वाले शास्त्र का प्रामाण्य बाधित हो जायेगा ।

९।। अशक्य कार्यों के विषय में कभी उपदेश नही दिया जाता; यदि ऐसा उपदेश दिया भी जाये तो वह व्यर्थ होता है (क्योंकि तदनुसार कार्य का संपादन कभी भी कोई नहीं कर सकता) । वेद भी बाधित अर्थ का प्रतिपादन नहीं करता ।

१०।। यहाँ यह शंका उठाई जा सकती है कि स्वाभाविक पदार्थ का भी नाश होता है, जैसा कि हम देखते हैं कि स्वभावतः शुक्ल वस्त्र की शुक्लता नए रंग के लगाने पर नष्ट हो जाती है तथा बीज की स्वाभाविक अंकुरजननशक्ति को अग्नि आदि के प्रयोग से नष्ट किया जा सकता है ।

११।। उत्तर यह है कि ये दो दृष्टान्त संगत नहीं हैं । इन दो स्थलों में शक्ति ( ध का उद्भव और तिरोभाव ही होते है, न कि स्वाभाविक धर्म

का अत्यन्त नाश हो जाता हैं। रंजन-क्रिया से वस्त्र की स्वाभाविक शुभ्रता का अभिभव होता है; यही कारण है कि प्रक्रियाविशेष से पुनः शुभ्रता लायी जा सकती है। अंकुर की नष्ट जननशक्ति का भी पुनरुद्धार हो सकता है (योगी के संकल्प से या प्रक्रियान्तर से)। [इस विचार से सिद्ध हुआ कि आत्मा स्वभाव से बद्ध नहीं है; किन्हीं निमित्तों से बन्धन (=दुःखयोग) हो सकता है या नहीं-यह अब विचारित हो रहा है]।

१२॥ किसी काल में (कालसम्बन्ध से) मुक्त आत्मा बद्ध हुआ है, ऐसा कहना समीचीन नहीं है, क्योंकि काल व्यापी एव नित्य है और यदि ऐसे काल के द्वारा आत्मा का बन्धन होगा तो बन्धन की सत्ता सदैव रहेगी, कभी भी कोई बद्ध आत्मा मुक्त नहीं हो सकेगा।

१३॥ किसी देशविशेष के योग से आत्मा बद्ध हुआ है, यह कहना भी असंगत है; देश भी व्यापी एवं नित्य है (काल की तरह), अतः सदा ही बन्ध की सत्ता रहेगी, कोई मुक्त न हो सकेगा।

१४॥ देहसम्बन्धी किसी अवस्था-विशेष के कारण आत्मा बद्ध हुआ है, ऐसा भी नहीं कहा जा सकता, क्योंकि अवस्था देह का धर्म है। अवस्था = जाग्रत् आदि।

१५॥ 'यह पुरुष असंग है', ऐसा श्रौत उपदेश है। अतः यह सिद्ध है कि जो अवस्था है, वह देह का ही धर्म है।

१६॥ मुक्त आत्मा का बन्धन कर्म-निमित्तक नहीं हो सकता, क्योंकि कर्म अनात्मपदार्थों का (अर्थात् अनात्मस्वरूप चित्त देहादि का) धर्म है। यदि कर्म से मुक्त आत्मा का बन्धन स्वीकार किया जाए तो अतिप्रसक्ति होगी, अर्थात् साधनबल से मुक्त होने के बाद पुनः बन्ध होने की संभावना रहेगी, शाश्वती मुक्ति कभी भी न हो सकेगी।

१७॥ दुःखयोगरूप बन्ध यदि चित्त का ही धर्म होगा तो भोग-वैचित्र्य की अनुपपत्ति होगी। भोगवैचित्र्य की उपपत्ति के लिये 'बन्ध पुरुषगत है', यह मानना आवश्यक है। यह बन्ध प्रतिबिम्बरूप है।

१८॥ प्रकृति-निमित्तक बन्धन होता है, ऐसा नहीं कहा जा सकता, क्योंकि प्रकृति संयोग-परतन्त्र है। तात्पर्य यह है कि प्रकृति के साथ संयोग होने पर ही आत्मा बन्ध-युक्त होता है, प्रकृति के अस्तित्वमात्र से आत्मा का दुःखयोग-रूप

बन्ध नहीं होता । संयोगविशेष के बिना प्रकृति यदि बन्धनकारिणी होती तो प्रलयादि में भी दुःखरूप बन्ध का प्रसंग होता ।

१९।। नित्य–बुद्ध–शुद्ध–मुक्त-स्वभाव आत्मा का जो दुःखयोगरूप-बन्ध होता है, वह प्रकृति के योग के बिना नहीं हो सकता । [इसके बाद विभिन्न अनार्ष संप्रदाय-प्रोक्त बन्धहेतुओं पर विचार किया जा रहा है] ।

२०।। अविद्या से भी मुक्त आत्मा का बन्ध नहीं हो सकता, क्योंकि वह अवस्तु है, अतः वह किसी का बन्धन करने में समर्थ नहीं होती । [यह क्षणिक विज्ञानवादी का मत है, जो क्षणिकविज्ञानातिरिक्त सब पदार्थों को सांवृतिक ( = मिथ्या) मानता है] ।

२१।। यदि यह माना जाये कि अविद्या वस्तु है तो अपने ही मत की हानि होती है (क्योंकि इन वादियों के मत में अविद्या मिथ्याभूता है) ।

२२।। अविद्या को वस्तु माना जाये तो विजातीय द्वैत की आपत्ति होगी । तात्पर्य यह है कि क्षणिक विज्ञान से पृथक्-जातीय एक अविद्या नामक द्वितीय वस्तु ( = सत्पदार्थ) माननी होगी, जिससे 'क्षणिकविज्ञानसन्तानमात्रमद्वितीयं तत्त्वम्' रूप मत खण्डित हो जाता है ।

२३।। (प्रश्न) यह अविद्या सत्–असत्–रूप दो विरुद्ध धर्मों से युक्त है, या अविद्या सदसद्विलक्षण है—यदि ऐसा माना जाये ?

२४।। (उत्तर) ऐसा नहीं माना जा सकता है, क्योंकि इस प्रकार के किसी पदार्थ की प्रतीति नहीं होती ।

२५।। (शङ्का) चूँकि हम वैशेषिक, नैयायिक आदि की तरह छह या सोलह आदि पदार्थों को नहीं मानते हैं, अतः हम जैसा भी चाहें पदार्थ मान सकते हैं—सत् पदार्थ, असत् पदार्थ, सदसत्पदार्थ, सदसद्विलक्षण पदार्थ रूप किसी भी पदार्थ को हम मान सकते हैं ।

२६।। (समाधान) 'पदार्थ की नियतता' भले ही न मानी जाये, पर अयौक्तिक पदार्थों का स्वीकार कभी भी नहीं किया जा सकता है, क्योंकि ऐसा मानने पर अज्ञ और उन्मत्तों के साथ शंकाकारी की समानता ही सिद्ध होगी ।

२७।। मुक्त आत्मा का बन्धन अनादि-विषयवासना-हेतुक भी नहीं हो सक (क्षणिक बाह्य विषय हैं, जिनकी वासना से जीव का बन्धन होता है यह प्रकार के बौद्धों का मत है, जिसको लक्ष्य कर यह सूत्र कहा गया है ) ।

